# CHITTAVINODINI

OR

# MENTAL RECREATION

*Being*

A COLLECTION OF WITTY, EPIGRAMMATIC, INSTRUCTIVE AND DESCRIPTIVE SANSKRIT VERSES

*of*

Philosophers, Statesmen, Divines and other Great Men, Ancient and Modern, upon most subjects; Selected with care for their peculiar point, brilliancy, excellence, humour or singularity, from the works of several authors; Comic and Serious; Combining a considerable portion of the wisdom of all ages

*The whole alphabetically arranged.*

COMPILED, ANNOTATED
*and*
PUBLISHED BY

R. N. GHOSH
7, RUTTLEDGE ROAD, LUCKNOW

First Edition 400 copies } 1938 { Price Royal Edition Rs. 5. Popular „ „ 4.

"Why are not more gems from our great authors scattered over the country? Great books are not in everybody's reach, and though it is better to know them thoroughly than to know them here and there, yet it is a good work to give a little to those who have neither the time nor means to get more."

—*Coleridge.*

"Poetry is the blossom and fragrance of all human knowledge, human thoughts, human passions, emotions, language."

—*Coleridge.*

"Poetry is the honey of all flowers, the quintessence of all sciences, the marrow of all wit, and the very phrase of angels."

—*Thomas Nashe.*

"I have gathered a posy of other men's flowers and nothing but the thread that binds them is mine own."

—*Montaigne.*

# चित्तविनोदिनी

अथवा

## पद्यकुसुममाला।

प्रसिद्धकवीनां महाजनानां भक्तानाञ्च विविधैः सारगर्भितैश्चित्त-
विनोदकैः श्लोकैर्वचनावलीभिश्च ग्रथिता।

लक्ष्मणपुरनिवासिना श्रीरुद्रनारायण घोष वर्मणा
सङ्कलिता।

लक्ष्मणपुरीयविश्वविद्यालयाध्यापकेन पण्डित श्रीयुत-
बदरीनाथशास्त्रिमहोदयेन संशोधिता च।

"काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा" ॥

—हितोपदेशः।

---

ग्रन्थोऽयम्

प्रयागनगर्य्याम्

आर० एन्० घोषेण इलाहाबाद लॉ जर्नलाख्यमुद्रणालये
मुद्रापयित्वा प्रकाशितः।

प्रथम संस्करण
४००

सम्वत् १९९५

मूल्यम् :—
राजसंस्करण ५)
साधारण „ ४)



# उत्सर्गपत्र।

'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'।

**जिन्होंने**—अनन्तजीवनपथ के पथिक होकर पान्थनिवासस्वरूप मेरे पितृदेव के गृह को सुशोभित किया था;

**जिन**—परमाराध्या स्वर्गीया मातृदेवी ने अतिशय प्रेम के साथ अनेक प्रकार के कष्ट सह कर मेरी असहाय अवस्था में मेरा लालन-पालन किया;

**जो**—देवी अपने गृहस्थ जीवन में सकल कर्त्तव्यों का विश्वस्तरूप से पालन कर काल आने पर उच्चलोक को प्राप्त हुईं;

**जो**—संस्कृतभाषा में अनभिज्ञा होने पर भी संस्कृत श्लोकों के रसास्वादन में समर्थ थीं और जिनकी अध्यात्मविद्या में अतिशय प्रीति थी;

**जिनको**—'आशा नाम नदी मनोरथ जला', 'धैर्य्यं यस्य पिता क्षमा च जननी' इत्यादि वचन अतीव प्रिय थे;

**जो**—अब तक यदि जीवित रहतीं तो इस ग्रन्थ के प्रचार करने में अत्यन्त आनन्द अनुभव करतीं; और

**जिनकी**—स्मृतिचिह्नस्वरूप यह 'पद्यकुसुममाला' ग्रथित की गई है;

**उन्हीं**—देवी के पवित्र नाम से यह मालिका भक्तिभाव से उत्सृष्ट की जाती है।

दासानुदास

**रुद्रनारायण घोष।**

# मङ्गलाचरणम् ।

य एकोऽवर्णो बहुधा शक्तियोगाद्
वर्णाननेकान्निहितार्थो दधाति ।
विचैति चान्ते विश्वमादौ स देवः
स नो बुद्ध्या शुभया संयुनक्तु ॥

—श्वेताश्वतरोपनिषद् ।

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

—तैत्तिरियोपनिषद् ।

ॐ विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव ।

तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु
नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् ।
शं नो अस्तु द्विपदे । शं चतुष्पदे ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥
स्थिरैरङ्गैस्तुष्टुवाँ्ँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषाः विश्ववेदाः ॥
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

—मुण्डकोपनिषद् ।

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतम् । जीवेम शरदः
शतम् । शृणुयाम शरदः शतम् । प्रब्रवाम शरदः शतम् ।
अदीनाः स्याम शरदः शतम् । भूयश्च शरदः शतात् ।

यजुर्वेद ३६।२४ ।

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ ॐ श्रीसच्चिदानन्दपरमात्मने नमः ॥

# ईश्वरवन्दना ।

गलद्दानगण्डं मिलद्भृङ्गखण्डं चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।
लसद्दन्तकाण्डं विपद्भङ्गचण्डं शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥१॥

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासा—
न्नासाग्ररन्ध्रं विशति फणिपतौ भोगसङ्कोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे—
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥२॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥३॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं संनिधिं सन्निधिं क्रियात् ॥४॥

शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥५॥

श्रीहरिं परमानन्दमुपदेष्टारमीश्वरम् ।
व्यापकं सर्वलोकानां कारणं तं नमाम्यहम् ॥६॥

रूपं रूपविवर्जितस्य भवतो ध्यानेन यद्वर्णितं
स्तुत्यानिर्वचनीयताखिलगुरोर्दूरीकृता यन्मया ।
व्यापित्वञ्च विनाशितं भगवतो यत्तीर्थयात्रादिना
क्षन्तव्यं जगदीश ! तत्करुणया दोषत्रयं मत्कृतम् ॥७॥

अविनयमपनय विष्णो ! दमय मनः शमय विषयमृगतृष्णाम् ।
भूतदयां विस्तारय तारय संसारसागरतः ॥८॥

दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे ।
श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥९॥

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥१०॥

यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै—
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥११॥

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥१२॥

चन्द्रोद्भासितशेखरे स्मरहरे गङ्गाधरे शङ्करे
सर्पैर्भूषितकण्ठकर्णविवरे नेत्रोत्थवैश्वानरे ।
दन्तित्वक्कृतसुन्दराम्बरधरे त्रैलोक्यसारे हरे
मोक्षार्थं कुरुचित्तवृत्तिममलामन्यैस्तु किं कर्मभिः ॥१३॥

बन्दे देवमुमापतिं सुरगुरुं बन्दे जगत्कारणं
बन्दे पन्नगभूषणं मृगधरं बन्दे पशूनां पतिम् ।
बन्दे सूर्यशशाङ्कवह्निनयनं बन्दे मुकुन्दप्रियं
बन्दे भक्तजनाश्रयञ्च वरदं बन्दे शिवं शङ्करम् ॥१४॥

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥१५॥

महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद ! तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं विदधति भवद्भ्रूप्रणिहितां
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥१६॥

श्मशानेष्वाक्रीडा स्मरहर ! पिशाचाः सहचरा—
श्चिताभस्मालेपः स्रगपि नृकरोटी परिकरः ।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद ! परमं मङ्गलमसि ॥१७॥

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा लेखनी पत्रमुर्वी ।
लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश पारं न याति ॥१८॥

गात्रं भस्मसितं सितञ्च हसितं हस्ते कपालं सितं
खट्वाङ्गञ्च सितं सितश्च वृषभः कर्णे सिते कुण्डले ।
गङ्गाफेनसिता जटापयसि तच्चन्द्रः सितो मूर्द्धनि
सोऽयं सर्वसितो ददातु विभवं पापक्षयं शङ्करः ॥१९॥

यत्कण्ठे गरलं विराजति सदा मौलौ च मन्दाकिनी
यस्याङ्के गिरिजाननं कटितटे शार्दूलचर्माम्बरम् ।
यन्माया हि रुणद्धि विश्वमखिलं पायात्सवः शङ्करो
जम्बूवज्जलविन्दुवज्जलजवज्जम्बालवज्जालवत् ॥२०॥

यच्चिन्तयामि मनसा यदुदीरयामि कायेन वा यदखिलं प्रकरोमि कर्म ।
हे कृष्ण ! तत्तव पदार्पितमस्तु सर्वं प्रीत्यै तवैव मम जन्म युगे युगेऽस्तु ॥२१॥

हरे ! नो जानेऽहं सुकृतमथवा दुष्कृतफलं
न दैवं मे चेतो न च पुरुषकारं गणयति ।
तवैवेच्छाधीनं सकलमिति चित्ते कलयतः
परा भक्तिर्नित्यं वसतु तव पादे मम हृदि ॥२२॥

मया किं ज्ञायते नाथ ! माहात्म्यं परमं तव ।
न जानाति परो ब्रह्मा हरिं वाचामगोचरम् ॥२३॥

नान्यं भजामि न वदामि न चाश्रयामि नान्यं शृणोमि न पठामि न चिन्तयामि ।
भक्त्या त्वदीयचरणाम्बुजमादरेण श्रीश्रीनिवास ! पुरुषोत्तम ! देहि दास्यम् ॥२४॥

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ! ॥२५॥

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परमं निधानम् ।
वेत्ताऽसि वेद्यञ्च परञ्च धाम त्वया ततं विश्वमनन्तरूप ! ॥२६॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥२७॥

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तुते सर्वत एव सर्व ! ।
अनन्तवीर्याऽमितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥२८॥

नमः सवित्रे जगदेकचक्षुषे ! जगत्प्रसूतिस्थितिनाशहेतवे ! ।
त्रयीमयाय त्रिगुणात्मधारिणे ! विरञ्चिनारायणशङ्करात्मने ! ॥२९॥

नमस्ते नमस्ते विभो विश्वमूर्त्ते ! नमस्ते नमस्ते चिदानन्दमूर्त्ते ! ।
नमस्ते नमस्ते तपोयोगगम्य ! नमस्ते नमस्ते श्रुतिज्ञानगम्य ! ॥३०॥

॥ हरिः ॐ तत् सत् ॥

---

# भूमिका

संस्कृत साहित्यानुरागी सज्जन महोदयों की सेवा में यह 'चित्तविनोदिनी' उपस्थित की जाती है। इस पुस्तक के प्रकाश करने का मुख्य कारण यह है कि मुझे अध्ययनावस्था से ही संस्कृत साहित्य से विशेष प्रीति रही। इस समय मेरी जीवन-सन्ध्या उपस्थित होने पर भी, उसी प्रीति और अनुराग के वशवर्त्ती होकर मैं ने इस गुरुतर कार्य में हस्तक्षेप किया। किसी कवि ने कहा है—

संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे।
काव्यामृतरसास्वाद आलापः सज्जनैः सह ॥

इसी 'अमृतोपम फल' प्राप्ति के निमित्त यह प्रयत्न किया गया है। मैं नहीं कह सकता कि इस विषय में मेरी चेष्टा कहाँ तक सफल होगी। यह चेष्टा उसी प्रकार की है जैसे कि कवि ने कहा है—

प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः।

सम्भव है कोई महाशय कहें काव्य के अनेक ग्रन्थों के होने पर भी इस पुस्तक के प्रकाशित करने की क्या आवश्यकता थी? इस प्रश्न के उत्तर में कहा जा सकता है कि काव्य के अनेक मूलग्रन्थ होने पर भी इस पुस्तक में निम्नाङ्कित विशेषताएँ हैं:—

(१) उपलब्ध मूलग्रन्थों से प्रायः वही श्लोक सङ्कलित किये गये हैं जो कि उपदेशपूर्ण और मनोरञ्जक समझे गये हैं।

(२) जिनकी भाषा विशेष करके सुललित और सरल समझी गई और जिनको थोड़ा संस्कृत जानने वाले भी बिना प्रयास के समझ सकते हैं।

(३) प्रत्येक श्लोक का यथासम्भव सारांश अर्थात् प्रासङ्गिक श्लोकान्तःपाती चरण उसके शीर्षक में वर्णमालाक्रमानुसार दिया है और उसके नीचे यथासम्भव श्लोकरचयिता तथा ग्रन्थ का नाम, जिस से वह सङ्कलित किया गया है, दिया है। जहाँ ग्रन्थकार और ग्रन्थ का नाम नहीं दिया है, वहाँ के अधिकांश श्लोक उद्भट हैं अथवा उन श्लोकों के रचयिता के नाम मुझे विदित नहीं हैं।

(४) एक आधार में संक्षिप्त रूप से भिन्न भिन्न रुचि के अनुसार यथासाध्य सब ही प्रकार के—आध्यात्मिक तथा व्यवहारिक—श्लोकों के सङ्कलन की चेष्टा की

गई है, और प्रायः सब ही रसों का इस ग्रन्थ में समावेश है। यद्यपि इस ग्रन्थ में कालिदास और विह्लण के श्लोकों में और उद्भट श्लोकों में अधिकांश शृङ्गार रस के हैं, पर कहीं कहीं भक्ति, ज्ञान, वैराग्य और शान्तरस के भी अनेक श्लोक मिलेंगे।

(५) इसके अतिरिक्त एक और विशेषता यह है कि इसमें कुछ प्रवादवचन, कूटश्लोक, समस्यायें और प्रहेलिकाओं का भी संग्रह किया गया है।

'Mental Recreation' (मेण्टल रेक्रियेशन) नामक अंगरेजी भाषा में एक अति प्राचीन पुस्तक है। इस 'चित्तविनोदिनी' के श्लोक उसी अंगरेजी पुस्तक की प्रणाली पर सङ्कलित किये गये हैं। केवल अन्तर इतना ही है कि 'Mental Recreation' गद्यसंग्रह है और 'चित्तविनोदिनी' पद्यसंग्रह है।

सम्भव है कोई महाशय कहें कि इस 'पद्यकुसुममाला' में सारगर्भ बहुत कुछ होने पर भी इसमें उत्कृष्ट अनुत्कृष्ट सब ही प्रकार के कुसुम, यथा—केतकी-कल्हार, कुमुद्-करवीर, किंशुक-कुटज, मालती-मन्दार इत्यादि—ग्रथित किये गये हैं। यह उचित नहीं था। इसका उत्तर केवल निम्नाङ्कित श्लोक द्वारा दिया जा सकता है:—

काचं मणिं काञ्चनमेकसूत्रे
ग्रथ्नन्ति मूढा किमु तत्र चित्रम्।
अशेषवित्पाणिनिरेकसूत्रे
श्वानं युवानं मघवानमाह॥

अवश्य 'सुभाषितरत्नभाण्डागार' में ऐसे सहस्रशः श्लोक पाये जाते हैं, जैसे कि इस ग्रन्थ में संग्रह किये गये हैं। 'सुभाषित' की क्या बात है। वह तो अनन्त रत्नों का आगार ही है। परन्तु इस पुस्तक की भी प्रणाली निराली है। किसी कवि ने कहा है—

अनन्तशास्त्रं बहुवेदितव्यं
स्वल्पश्च कालो बहवश्च विघ्नाः।
यत्सारभूतं तदुपासितव्यं
हंसो यथा क्षीरमिवाम्बुमिश्रम्॥

इस ग्रन्थ का मुख्य उद्देश्य है, प्रासङ्गिकचरणघटित श्लोकों का संग्रह करना। परन्तु इसमें कुछ ऐसे भी श्लोक पाये जायँगे जिनकी उनमें गिनती नहीं, यथा 'आशीर्वचनम्', 'आलङ्कारिकस्याशीर्वचनम्', 'वेदान्तिन आशीर्वचनम्', 'किं-किं-किम्',

'चार्वाकस्योक्तिः' इत्यादि। तथापि ऐसे श्लोकों के उत्कर्ष के कारण उनका भी इस ग्रन्थ में सन्निवेश कर दिया है।

इस ग्रन्थ में कहीं कहीं पूरा श्लोक न देकर केवल श्लोकान्तःपातीचरण ही दिया है। जिन श्लोकों के वे चरण हैं वे पूर्ववर्त्ती अथवा परवर्त्ती श्लोकों में पाये जायँगे। जिनका सम्बन्ध पूर्ववर्त्ती श्लोकों से है उनके लिये 'दृश्यताम्' का सङ्केत दिया है और जो परवर्त्ती श्लोकों के चरण हैं उनके लिये कोई सङ्केत नहीं है।

मैं नहीं कह सकता कि इस सङ्कलन के कार्य में मैं कहाँ तक कृतकार्य हुआ हूँ। मेरी स्वल्पबुद्धि के अनुसार मैंने इसे यथासम्भव चित्ताकर्षक करने की चेष्टा की है। अब केवल यही आशा है यदि यह ग्रन्थ पाठक महानुभावों का क्षणमात्र भी चित्त-विनोदन कर सका तो मैं अपने को कृतकृत्य समझूँगा और जो सज्जन इस पुस्तक में त्रुटियाँ सूचित करने की कृपा करेंगे उनका अत्यन्त कृतज्ञ हूँगा तथा द्वितीयावृत्ति में संशोधन सहित—यदि ईश्वर की कृपा हुई तो भाषा टीका सहित—इसे प्रकाशित करने का प्रयत्न करूँगा। इस समय केवल कहीं कहीं श्लोक की टिप्पणी, उसका भावार्थ अथवा उसके विषय में किंवदन्ती वा पौराणिकी कथा देकर इस ग्रन्थ को समाप्त करता हूँ।

अन्त में मैं अत्यन्त कृतज्ञता के साथ स्वीकार करता हूँ कि श्रीयुत बदरीनाथ शास्त्री महाशय ने इस पुस्तक के संशोधन कार्य में विशेष सहायता की है। शास्त्री महोदय की सहायता बिना मेरे लिये यह कार्य अतीव दुःसाध्य था। और भी मैं कृतज्ञता के साथ स्वीकार करता हूँ कि मुझे इस सङ्कलन के कार्य में 'सुभाषितरत्न-भाण्डागारम्' और 'समयोचितपद्यमालिका' से बड़ी सहायता मिली है।

'परिशिष्ट' में कुछ सुन्दरदास के कविता दिये हैं जिसके पाठ करने से और भी चित्त प्रसन्न होगा।

विनीत

श्री रुद्रनारायण घोष वर्मा
भूतपूर्व केनिङ्ग कालेज का एक प्राचीन विद्यार्थी

लखनऊ
१९३८

---

## वर्णमालाक्रमानुसारेण श्लोकानां संक्षिप्तसूची।

| पृष्ठायाम् | वर्णमालाक्रमः | श्लोकसंख्या |
|---|---|---|
| २८३–३१४ | 'प'–वर्णान्तर्गतश्लोकाः | १६३ |
| ३१४–३१६ | 'फ'– ,, | ६ |
| ३१६–३२५ | 'ब'– ,, | ४७ |
| ३२५–३३६ | 'भ'– ,, | ५८ |
| ३४०–३६४ | 'म'– ,, | १२६ |
| ३६४–३८५ | 'य'– ,, | १०४ |
| ३८५–३६४ | 'र'– ,, | ४२ |
| ३६५–४०१ | 'ल'– ,, | २३ |
| ४०१–४२७ | 'व'– ,, | ११३ |
| ४२७–४४१ | 'श'– ,, | ५३ |
| ४४१–४४३ | 'ष'– ,, | १७ |
| ४४४–४६१ | 'स'– ,, | २४६ |
| ४६२–५०२ | 'ह'– ,, | ५० |
| ५०६–५०७ | 'परिशिष्टम्'– | ६ |
| | समग्रश्लोकसंख्या | २४८३ |

॥ ॐ तत् सत् ॥

# चित्तविनोदिनी ।

## अ

### अकामः सर्वकामो वा ।

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १ ॥

—श्रीमद्भागवतम् ।

### अकाले दुर्लभो मृत्युः ।

लोकप्रवादः सत्योऽयं पण्डितैः समुदाहृतः ।
अकाले दुर्लभो मृत्युः स्त्रियो वा पुरुषस्य वा ॥ २ ॥

### अकृत जैमिनिमुनिकीर्त्तनम् ।

यामीति रहसि भणितं दुःसहमाकर्ण्य जीवनाथस्य ।
अकृत निमीलीतनयना जैमिनिमुनिकीर्त्तनं तन्वी (क) ॥ ३ ॥

### अगाधजलसञ्चारी न गर्वं याति रोहितः ।

अगाधजलसञ्चारी न गर्वं याति रोहितः ।
अङ्गुष्ठजलमात्रेण शफरी फुर्फुरायते ॥ ४ ॥

---

(क) कहते हैं कि जैमिनि मुनि के नामकीर्त्तन करने से वज्रपात की आशङ्का नहीं रहती है। 'मैं विदेश को जाता हूँ' पति के ऐसे वचन को वज्रपात के समान अनुभव कर उसके निवारण के निमित्त स्त्री ने जैमिनि मुनि का नामकीर्त्तन किया।

## अग्निदाहे न मे दुःखम् ।

अग्निदाहे न मे दुःखं छेदे न निकषे न वा ।
यत्तदेव महद्दुःखं गुञ्जया सह तोलनम् ॥५॥

## अग्निहोत्रफला वेदाः ।

## अग्रे धावति धावति ।

पूर्वदत्तेषु या विद्या पूर्वदत्तेषु यद्धनम् ।
पूर्वदत्तेषु या भार्या अग्रे धावति धावति ॥६॥

## अघटितघटितं घटयति ।

अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते ।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥७॥

## अङ्कानां वामतो गतिः ।

अङ्केषु शून्यविन्यासाद्वृद्धिः स्यात्तु दशाधिका ।
तस्माज्ज्ञेया विशेषेण अङ्कानां वामतो गतिः ॥८॥

## अङ्के स्थितापि युवतिः परिरक्षणीया ।

शास्त्रं सुचिन्तितमथो परिचिन्तनीय—
माराधितोऽपि नृपतिः परिशङ्कनीयः ।
अङ्के स्थितापि युवतिः (क) परिरक्षणीया ।
शास्त्रे नृपे च युवतौ क्कुतो वशित्वम् ॥९॥

—षड्रत्नम् ।

## अङ्गारपूर्वे गमने च लाभः ।

अङ्गारपूर्वे गमने च लाभः सोमे शनौ दक्षिणमर्थलाभम् ।
बुधे गुरौ पश्चिमकार्यसिद्धी रवौ भृगौ चोत्तरमर्थलाभः ॥१०॥

---

(क) 'अङ्के धृतापि तरुणी' इति पाठान्तरम् ।

### अङ्गी भवतु मन्मथः ।

अङ्गीकुरु दृशोर्भङ्गीमङ्गी भवतु मन्मथः ।
घोषयन्तु विशालाक्षि ! महेशजयि ते यशः ॥ ११॥

### अङ्गीकृतं सुकृतिनः परिपालयन्ति ।

अद्यापि नोज्झतिहरः किल कालकूटं
कूर्मो बिभर्त्ति धरणीं खलु पृष्ठकेन ।
अम्भोनिधिर्वहति दुर्वहवाडवाग्नि—
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १२॥

—विह्लण—विद्यासुन्दरम् ।
—चोरकवि—चौरपञ्चाशिका ।

### अङ्गुष्ठमात्रः पुरुषः ।

अङ्गुष्ठमात्रः (क) पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वैतत् ॥ १३॥

—कठोपनिषद् ।

### अचला कमला कस्य ।

अचला कमला कस्य कस्य मित्रं महीपतिः ।
शरीरं च स्थिरं कस्य कस्य वश्या वराङ्गना ॥ १४॥

### अच्युतः स्मृतिमात्रेण ।

शम्भुः श्वेतार्कपुष्पेण चन्द्रमा वस्त्रतन्तुना ।
अच्युतः स्मृतिमात्रेण साधवः करसंपुटैः ॥ १५॥

---

(क) अङ्गुष्ठपरिमाणः अतिसूक्ष्म इत्यर्थः ।

## अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।

अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत् (क) ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत ॥ १६ ॥

—भवभूति—गुणरत्नम् ।

## अजवच्चर्वणं कुर्यात् ।

शुकवद्भाषणं कुर्याद्बकवद्ध्यानमाचरेत् ।
अजवच्चर्वणं कुर्याद्गजवत्स्नानमाचरेत् (ख) ॥ १७ ॥

## अजीर्णे भेषजं वारि ।

अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम् ।
अमृतं भोजनार्धे तु भुक्तस्योपरि तद्विषम् ॥ १८ ॥

## अजीर्णे भोजनं विषम् ।

## अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥ १९ ॥

—विष्णुशर्मा—हितोपदेशः ।

## अज्ञानेनावृतो लोकः ।

अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ २० ॥

—महाभारते वनपर्वणि ।

---

(क) 'साधयेत्' इति पाठान्तरम् ।
(ख) पाठान्तरम्—'अजवच्चर्वणं कुर्याद्गजवत्स्नानमाचरेत् ।
राजवत्प्रविशेद्धाम चोरवद्गमनं चरेत्' ॥

## अज्ञानेनावृतं ज्ञानम् ।

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥२१॥

—भगवद्गीता ।

## अञ्जनं दूषणं वक्त्रे ।

न भाति वाञ्छा वैजात्ये न देवा भान्ति वादिनि ।
अञ्जनं दूषणं वक्त्रे भूषणं किल लोचने ॥२२॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## अणुना भक्तितोयेन प्रीयते परमेश्वरः ।

भक्तिरेव हि नैवेद्यं यन्निवेद्यं जनार्दने ।
अणुना भक्तितोयेन प्रीयते परमेश्वरः ॥२३॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## अणोरणीयान्महतो महीयान् ।

अणोरणीयान्महतो महीया—
नात्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः (क) पश्यति वीतशोको
धातुप्रसादान्महिमानमात्मनः (ख) ॥२४॥

—कठोपनिषद् ।

यज्ञोपवीतं परमं पवित्रं
सखे ! गृहीत्वा शपथं करोमि ।

---

(क) अक्रतुः=अकामः ।
(ख) धातुप्रसादात्=मन आदि—शरीर—धारकाणाम् प्रसन्नावस्था हेतोः ।
पाठान्तरम्—'धातुः प्रसादात्'=विधातुः ईश्वरस्य प्रसादात् ।

योगे वियोगे दिवसोऽङ्गनाया
अणोरणीयान्महतो महीयान् (क) ॥२५॥

## अति सर्वत्र वर्जयेत।

अतिरूपाद्धृता सीताऽतिगर्वाद्रावणो हतः ।
अतिदानाद्बलिर्बद्धश्चाति सर्वत्र वर्जयेत् ॥२६॥

## अतिपरिचयदोषात्कस्य नो मानहानिः ।

प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः
स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः ।
अतिपरिचयदोषात्कस्य नो मानहानि—
र्नवनवगुणरागी प्रायशः सर्वलोकः ॥२७॥

## अतिपरिचयादवज्ञा ।

अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री चन्दनतरुमिन्धनं कुरुते (ख) ॥२८॥

## अतिलोभो न कर्त्तव्यः ।

एकं दृष्ट्वा शतं दृष्ट्वा दृष्ट्वा पञ्चशतान्यपि ।
अतिलोभो न कर्त्तव्यश्चक्रं भ्रमति मस्तके ॥२९॥

---

(क) यह श्लोक उपर्युक्त कठोपनिषद् के वचन के विपरीत कहा गया है और ऐसा जान पड़ता है कि यज्ञोपवीत धारण करने का जो मन्त्र है उसे अवलम्बन करके किसी कवि ने इस हास्यरसात्मक श्लोक की रचना की है ।

मन्त्र—'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः'॥

(ख) 'अति परिचयादवज्ञा इति यद्वाक्यं मृषैव तद्भाति ।
अतिपरिचितेऽप्यनादौ संसारेऽस्मिन्न जायतेऽवज्ञा' ॥

## अतिव्ययो नास्ति नराधिपाष्टसु ।

ऋतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीष्वधनेषु बान्धवेष्वतिव्ययो नास्ति नराधिपाष्टसु (क) ॥३०॥

—विष्णुशर्मा—हितोपदेशः।

## अतृणे पतितो वह्निः ।

अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् (ख) ॥३१॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि।

## अतृप्ता मानवाः सर्वे ।

धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥३२॥

## अद्य कान्तः कृतान्तो वा ।

पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥३३॥

## अद्य भक्ष्यो धनुर्गुणः ।

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।
अहिरेकदिनं याति अद्य भक्ष्यो धनुर्गुणः (ग) ॥३४॥

—विष्णुशर्मा—हितोपदेशः।

---

(क) 'धनव्ययस्तेषु न गणयते बुधैः' इति पाठान्तरम्।

(ख) 'क्षमाधनुः करे यस्य दुर्जनः किं करिष्यति' इति पाठान्तरम्।

(ग) एक व्याध बन में शिकार करने को गया था। वहाँ एक हरिण को मार कर वापिस आ रहा था कि इतने में एक बराह को देख कर उसने उसपर बाण चलाया। बराह ने बाणविद्ध होते ही क्रोध में आ कर उस व्याध पर आक्रमण किया जिस से व्याध मर गया। उस समय उसी रास्ते से एक सर्प जा रहा था। वह भी बराह के शरीर के भार से दबकर मर गया। इतने में एक शृगाल उसी स्थान पर आ पहुँचा और एकही समय में इतनी भोजन सामग्री देख

अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ।

## अद्य सायं पुनः प्रातः ।

यस्य किञ्चिन्न दातव्यं तस्य देयं किमुत्तरम् (क) ।
अद्य सायं पुनः प्रातः सायं प्रातः पुनः पुनः ॥३५॥

## अद्यापि तां चिन्तयामि ।

अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दवदनां तनुलोमराजीम् ।
सुप्तोत्थितां मदनविह्वललालसाङ्गीं
विद्यां प्रमादगणितामिव चिन्तयामि ॥३६॥

—विह्लण—विद्यासुन्दरम् ।
—चोरकवि—चौरपञ्चाशिका ।

## अद्यापि तां पश्यामि

अद्यापि तां यदि पुनः कमलायताक्षीं
पश्यामि पीवरपयोधरभारखिन्नाम् ।
संपीड्य बाहुयुगलेन पिवामि वक्त्र—
मुन्मत्तवन्मधुकरः कमलं यथेष्टम् ॥३७॥

---

कर बड़ा आनन्दित हुआ। तब वह उन भोजन पदार्थों को किस प्रकार से भक्षण करेगा यही विचार करने लगा। विचार करने पर यह सिद्धान्त हुआ कि इस मनुष्य के शरीर से तो एक महीने का भोजन चलेगा, मृग और शूकर के शरीर से दो महीने निर्वाह होगा और सर्प के शरीर से एक दिन होगा। परन्तु आज इन सब को नहीं खाऊँगा। आज केवल इस धनुष की ताँत से क्षुधा-निवृत्ति कर लूँगा। यह विचार कर शृगाल ज्यों ही धनुष की ताँत खाने को उद्यत हुआ त्यों ही धनुष का सिरा ताँत खुल जाने पर बेग से आकर उसके हृदय को विदीर्ण कर दिया जिससे वह शृगाल पञ्चत्व को प्राप्त हो गया ।

नीतिः—'कर्त्तव्यः संचयो नित्यं कर्त्तव्यो नातिसंचयः ।
पश्य संचयशीलोऽसौ धनुषा जम्बुको हतः'॥—विष्णुशर्मा।

(क) पाठान्तरम्—'यस्य कार्यं न कर्त्तव्यं तस्य देयं किमुत्तरम्' इति।

अद्यापि तां शशिमुखीं नवयौवनाढ्यां
पीनस्तनीं पुनरहं यदि गौरकान्तिम् ।
पश्यामि मन्मथशरानलपीड़ितानि
गात्राणि सम्प्रति करोमि सुशीतलानि ॥३८॥

अद्यापि तां प्रणयिनीं मृगशावकाक्षीं
पीयूषपूर्णकुचकुम्भयुगं वहन्तीम् ।
पश्याम्यहं यदि पुनर्दिवावसाने
स्वर्गापवर्गनवराज्यसुखं त्यजामि ॥३९॥

—विह्लण—विद्यासुन्दरम् ।
—चोरकवि—चौरपञ्चाशिका ।

## अद्यापि तां प्रतिचिन्तयामि ।

अद्यापि तां प्रथमतो वरसुन्दरीं मे
स्नेहैकपात्रघटितावनिनाथपुत्रीम् ।
हे हे जना! मम वियोगहुताशतापा—
न्सोढुं न शक्यत इति प्रतिचिन्तयामि ॥४०॥

—विह्लण—विद्यासुन्दरम् ।
—चोरकवि—चौरपञ्चाशिका ।

## अद्यापि तां स्मरामि ।

अद्याप्यशोकनवपल्लवरक्तहस्तां
मुक्ताफलप्रचयचुम्बितचूचुकाग्राम् ।
अन्तःस्मितेन्दुसितपाण्डुरगण्डदेशां
तां वल्लभां रहसि संवलितां स्मरामि ॥४१॥

अद्यापि तां विरहवह्निनिपीडिताङ्गीं
तन्वीं कुरङ्गनयनां सुरतैकपात्रीम् ।
नानाविचित्रकृतमण्डनमावहन्तीं
तां राजहंसगमनां सुदतीं स्मरामि ॥४२॥

अद्यापि तां निधुवनक्लमनिःसहाङ्गी—
मापाण्डुगण्डपतितालककुञ्चिताक्षीम् ।
प्रच्छन्नपापकृतमन्तरमावहन्तीं
कण्ठावसक्तमृदुबाहुलतां स्मरामि ॥४३॥

अद्यापि तां सुरतताण्डवसूत्रधारीं
पूर्णेन्दुसुन्दरमुखीं मदविह्वलाङ्गीम् ।
तन्वीं विशालजघनां स्तनभारखिन्नां
व्यालोलकुन्तलकलापवतीं स्मरामि ॥४४॥

अद्यापि तां सुरतजागरघूर्णमानां
तिर्यग्वलत्तरलतारकमावहन्तीम् ।
शृङ्गारसारकमलाकरराजहंसीं
व्रीडावनम्रवदनामुरसि स्मरामि ॥४५॥

अद्यापि तां मसृणचन्दनचर्चिताङ्गीं
कस्तूरिकापरिमलेन विसर्पिगन्धाम् ।
अल्पेन्दुरेखपरिशीलितभालरेखां
मुग्धातिवामनयनां शयने स्मरामि ॥४६॥

अद्यापि तां निधुवने मधुपानपात्रीं
लीढाम्बरां कृशतनुं चपलायताक्षीम् ।
काश्मीरपङ्कमृगनाभिकृताङ्गरागां
कर्पूरपूगपरिपूर्णमुखीं स्मरामि(क) ॥४७॥

—विह्लण—विद्यासुन्दरम् ।
—चोरकवि—चौरपञ्चाशिका ।

## अद्यापि नोज्झति हरः किल कालकूटम् ।

दृश्यताम्—'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति !

---

(क) यह 'चौरपञ्चाशिका' के कई श्लोक (३६–४७) द्व्यर्थवाचक हैं। साधारणतः तो इनमें विद्या के रूप का वर्णन है (पक्षे) देवी की स्तुति इन सब श्लोकों से सूचित होती है।

## अद्यापि सा मनसि वर्त्तते मे ।

अद्यापि सा मनसि संप्रति वर्त्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य कोपा—
त्कर्णे कृतं कनकपत्रमनालपन्त्या (क) ॥४८॥

—विह्लण—विद्यासुन्दरम् ।

—चोरकवि—चौरपञ्चाशिका ।

## अद्यैव पुण्यदिवसो मम देवि ! बाले !

अद्यैव पुण्यदिवसो मम देवि ! बाले !
त्वत्पादपङ्कजयुगं ह्यवलोक्यते यत् ।
रम्यातिपीनजघनस्तनि ! सेवकं मां
मुग्धे ! विधेहि सदयेऽधरसीधुलुब्धम् ॥४९॥

—विह्लण—विद्यासुन्दरम् ।

## अद्यैव मे वसतु मानसराजहंसः ।

कृष्ण ! त्वदीयपदपङ्कजपिञ्जरान्ते
अद्यैव मे वसतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥५०॥

## अधमाः—मध्यमाः—उत्तमाः ।

अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥५१॥

## अधरमधुवधूनां भाग्यवन्तःपिबन्ति ।

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किञ्चिदुन्मीलितानाम् ।

---

(क) पूर्वपृष्ठायां निम्नाङ्किता (क) चिह्निता टिप्पणी दृश्यताम् ।

सुरतजनितखेदादार्द्रगण्डस्थलीना—
मधरमधुवधूनां भाग्यवन्तः पिबन्ति ॥५२॥

—भर्तृहरि—शृङ्गारशतकम्।

## अधीरयति धीरं पुरुषम्।

विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति।
अधीरयति धीरं पुरुषं क्षणेन मकरध्वजो देवः ॥५३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## अधुना तद्विपरीतम्।

अम्बुजमम्बुनि जातं न हि दृष्टं जातमम्बुजादम्बु।
अधुना तद्विपरीतं चरणसरोजाद्विनिर्गता गङ्गा ॥५४॥
जाता लता हि शैले जातु लतायां न जायते शैलः।
अधुना तद्विपरीतं कनकलतायां गिरिद्वयं जातम् (क) ॥५५॥

## अधोऽधः पश्यतः कस्य महिमा नोपचीयते।

अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥५६॥

—विष्णुशर्मा—हितोपदेशः।

## अनन्तरूपेण चराचराणि।

अनन्तरूपेण चराचराणि
व्याप्नोषि विश्वान्यखिलानि विष्णो!।
त्वं सर्वरूपाण्यपि रूपभिन्न—
स्त्वं सर्वभूतान्यपि भूतभिन्नः ॥५७॥

—ताराकुमार—कृष्णभक्तिरसामृतम्।

---

(क) अद्भुतरसात्मकं श्लोकद्वयमिदम्।
दृश्यताम्—'राधे त्वयि विपरीतम्' इति।
'त्वयि मुरहर विपरीतम्' इति।

## अनभ्यासे विषं शास्त्रम् ।

अनभ्यासे विषं शास्त्रं (क) अजीर्णे भोजनं विषम् ।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥५८॥

—चाणक्यशतकम्।

## अनयोरवगतरसयोः कियदन्तरं कथय ।

हालाहलमपि पीतं बहुशो भिक्षापि भिक्षिता भवता ।
अनयोरवगतरसयोः शङ्कर ! कियदन्तरं कथय ॥५९॥

## अनाद्यविद्या निर्वाच्या ।

अनाद्यविद्या निर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत् (ख) ॥६०॥

—शङ्कराचार्य—आत्मबोधः ।

## अनाश्रया न शोभन्ते

अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते ।
अनाश्रया न शोभन्ते पण्डिता वनिता लताः ॥६१॥

## अनिष्टदः क्षितीशानाम् ।

अनिष्टदः क्षितीशानां भूकम्पः सन्ध्ययोर्द्वयोः ।
राज्ञां विनाशपिशुनो धूमकेतुरुदाहृतः ।
दिग्दाहः पीतवर्णश्चेत् क्षितीशानां भयप्रदः ॥६२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) 'दुरधीता विषं विद्या' इति पाठान्तरम् ।

(ख) अनादीति—अनादिरविद्या मूलप्रकृतिः कारणं सत्त्वरजस्तमोरूपम् उपाधिर्यस्याः सा कारणारूपेत्यर्थः। निर्वाच्या निर्वक्तुं शक्या। उपाधित्रितयात् सत्त्वरजस्तमोमयात् गुणत्रयादित्यर्थः अन्यम् अतिरिक्तमित्यर्थः आत्मानं परमात्मानम् अवधारयेत् निश्चिनुयात्।

—जीवानन्दविद्यासागर ।

## अनुद्धताः सत्पुरुषाः समृद्धिभिः ।

## अन्तिमस्तु पदे पदे ।

अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे (क) ॥६३॥

## अन्ते नारायणं ब्रह्म ।

अन्ते नारायणं ब्रह्म स्मारं स्मारं हृदा हरिम् ।
उत्ताननयनः प्राणानुत्सृजेयमहं कदा ॥६४॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## अन्त्यादपि परं धर्मम् ।

## अन्धस्य दीपो बधिरस्य गीतम् ।

## अन्धेनेव नीयमाना यथान्धाः ।

अविद्यायामन्तरे वर्त्तमानाः
स्वयं धीराः पण्डितम्मन्यमानाः ।
दन्द्रम्यमाणाः (ख) परियन्ति मूढा
अन्धेनेव नीयमाना यथान्धाः ॥६५॥
—कठोपनिषद् ।

## अन्नचिन्ता चमत्कारा ।

दरिद्रस्य गुणाः सर्वे भस्माच्छादितवह्निवत् ।
अन्नचिन्ता चमत्कारा कातरे कविता कुतः (ग) ॥६६॥

---

(क) दृश्यताम्—'यावज्जीवं जडो दहेत्' इति ।

(ख) 'जङ्घन्यमानाः' इति मुण्डकोपनिषदि । जङ्घन्यमानाः जरारोगाद्यनेकानर्थसमूहैः हन्यमाना इत्यर्थः । दन्द्रम्यमाणाः अत्यर्थं कुटिलाम् अनेकरूपां गतिं गच्छन्तः परियन्ति परिगच्छन्तीत्यर्थः ।

(ग) एक समय कवि कालिदास घर से बाहर निकल राज-सभा को जा रहे थे। इतने में उनकी स्त्री बोल उठी कि आज तो घर में अन्न नहीं है। इस बात को सुन कर कालिदास सोचते हुए

## अन्नदानात्परं दानम् ।

अन्नदानात्परं दानं न भूतं न भविष्यति ।
अन्नेन धार्यते सर्वं जगदेतच्चराचरम् (क) ॥६७॥

## अन्नदानं प्रधानम् ।

तुरगशतसहस्रं गोगजानाञ्च लक्षं
कनकरजतपात्रं मेदिनीं सागरान्ताम् ।
विमलकुलवधूनां कोटिकन्याश्च दद्या—
न्न हि न हि सममेतैरन्नदानं प्रधानम् ॥६८॥

—कविभट्ट—पद्यसंग्रहः ।

## अन्नमूलं बलं पुंसाम् ।

अन्नमूलं बलं पुंसां बलमूलं हि जीवनम् ।
तस्माद्यत्नेन संरक्षेद्बलञ्च कुशलो भिषक् ॥६९॥

## अन्नाद्भवन्ति भूतानि ।

## अन्नं नास्त्युदकं नास्ति ।

अन्नं नास्त्युदकं नास्ति नास्ति ताम्बूलचर्वणम् ।
मन्दिरेषु महोत्साहः शुष्कचर्मणि ताडनम् ॥७०॥

## अन्यत्किञ्चिद्भविष्यति ।

जन्मप्रभृति दारिद्र्यं दशवर्षाणि बन्धनम् ।
समुद्रतीरे मरणमन्यत्किञ्चिद्भविष्यति ॥७१॥

---

राजसभा में जा पहुँचे। उस दिन राजा विक्रमादित्य ने जो सब समस्याएँ पूर्ण करने को दी थीं उन में से कोई भी वह पूर्ण नहीं कर सके। तब विक्रमादित्य ने विस्मित हो कर कालिदास से इसका कारण पूछा। उन्होंने यह उत्तर दिया। "दरिद्र के गुण समूह भस्माच्छादित अग्नि के तुल्य होते हैं, अर्थात् उनका स्फुरण नहीं होता है, अन्नचिन्ता चमत्कार है, उस चिन्ता से जो व्यथित है उसकी कविता-शक्ति का विकास कैसे हो सकता है ?"

(क) दृश्यताम्—'यावज्जीवं च विद्यया' इति।

## अन्यायं कुरुते यदा क्षितिपतिः ।

सस्यानि स्वयमत्ति चेद्वसुमती माता सुतं हन्ति चे—
द्वेलामम्बुनिधिर्विलङ्घयति चेद्भूमिं दहेत्पावकः ।
आकाशं जनमस्तके पतति चेदन्नं विषं चेद्भवे—
दन्यायं कुरुते यदा क्षितिपतिः कस्तं निरोद्धुं क्षमः ॥७२॥

## अन्ये परे का कथा ।

जातः सूर्यकुले पिता दशरथः क्षौणीभुजामग्रणीः
सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः ।
दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः स्वयं
रामो येन विडम्बितोऽपि विधिना चान्ये परे का कथा (क) ॥७३॥

—हलायुध—धर्मविवेकः।

## अन्यैरगण्यैरपि भूषणैः किम् ।

आस्यं सहास्यं नयनं सलास्यं
सिन्दूरविन्दूदयशोभि भालम् ।
नवा च वेणी हरिणीदृशश्चे—
दन्यैरगण्यैरपि भूषणैः किम् ॥७४॥

## अन्योद्रेके कुटिलमनसाम् ।

## अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ।

पञ्चप्राणमनोबुद्धिर्दशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् (ख) ॥७५॥

—शङ्कराचार्य—आत्मबोधः।

---

(क) अन्ये इति कवीनां निरङ्कुशत्वात् सप्तम्यन्तं सोढव्यम्। अर्थापत्तिरलङ्कारः।

(ख) पञ्चेति। पञ्चभिः प्राणैः प्राणापानोदानसमानव्यानैः मनसा बुद्ध्या दशभिः इन्द्रियैः चक्षुः कर्णनासिकाजिह्वात्वग्वाक्पाणिपादपायूपस्थैः समन्वितम् अपञ्चीकृतैः पञ्चीकरण-रहितैः भूतैः पञ्चतन्मात्राभिरित्यर्थः उत्थम् उत्पन्नम् सूक्ष्माङ्गम् सूक्ष्मशरीरं भोगस्य साधनं हेतुभूतम् एतैर्विना भोगलाभासिद्धेरिति भावः।

—जीवानन्द विद्यासागर ।

पञ्चीकरणस्यार्थः 'शरीरं सुखदुःखानां भोगायतनमुच्यते' इति श्लोके दृश्यताम्।

## अपरं किं भविष्यति ।

भोजनं यत्र कुत्रापि शयनं हट्टमन्दिरे ।
मरणं गोमतीतीरे अपरं किं भविष्यति (क) ॥७६॥

## अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ।

धनुः पौष्पं मौर्वी मधुकरमयी पञ्चविशिखा
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाप्येकं सर्वं हिमगिरिसुते ! कामपि कृपा—
मपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥७७॥

—शङ्कराचार्य—आनन्दलहरी ।

## अपि प्रियतमाः प्राणाः केषां नयनगोचराः ।

मनागपि न शोचामि प्रियबन्धोरदर्शनात् ।
अपि प्रियतमाः प्राणाः केषां नयनगोचराः ॥७८॥

---

(क) एक समय किसी ज्योतिर्विद् ब्राह्मण ने रास्ते में चलते हुए एक मुर्दे की खोपड़ी पड़ी हुई देखी। उसके ललाट में जो लिखा था उसके पढ़ने से ब्राह्मण को विदित हुआ कि यह भोजन जहाँ तहाँ करेगा, शयन हाट अथवा मन्दिर में करेगा, मृत्यु इसकी गोमती तीर अर्थात् घूरे में होगी, और उसके उपरान्त आगे इसकी क्या दशा होगी कौन कह सकता है ? इस ललाट-लेख को पढ़ कर ब्राह्मण यों मन ही मन में विचार करने लगा । 'इस मनुष्य के भाग्य में जो होना था सो तो हो चुका, अब यह देखना चाहिये कि इस खोपड़ी की क्या दशा होती है' । तब ब्राह्मण कौतूहलवश हो कर परीक्षा करने के निमित्त उस खोपड़ी को ले कर घर आया, और घर के किसी गुप्त स्थान में उसे छिपा कर रख दिया । एक दिन उनकी स्त्री ने घर का धन्धा करते हुए अचानक उस खोपड़ी को देख लिया, और अपने मन में यह ठान लिया कि "यह खोपड़ी अवश्य मेरे भर्त्ता की प्रणयिनी की है । उसकी मृत्यु के पीछे भी मेरा स्वामी उसे न भूल सका, इस कारण उसकी खोपड़ी लाकर उसे घर में छिपा रक्खा है । जो कुछ हो, इस दुष्कर्म के निमित्त उसे समुचित दण्ड देना होगा ।" यह सोच ब्राह्मणी ने क्रोधवश हो कर उस खोपड़ी को चूर्ण कर उस चूर्ण को विष्ठा पर छीट दिया । जब यह घटना प्रकाशित हुई, तब ब्राह्मण ने समझा कि इसके भाग्य में "अपरं किं भविष्यति' जो लिखा था उसका मर्म यही है । दृश्यताम्—'अन्यत्किञ्चिद्भविष्यति' इति ।

## अपुत्रस्य गतिर्नास्ति ।

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात्पुत्रमुखं दृष्ट्वा पुत्राद्भवति तापसः ॥७९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## अपुत्रस्य गृहं शून्यम् ।

## अपूर्वा रसनाव्याली ।

अपूर्वा रसनाव्याली खलाननबिलाश्रया ।
कर्णमूले दशत्येकं हरत्यन्यस्य जीवनम् ॥८०॥

## अपूर्वाणि दिने दिने ।

गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारतीकथा ।
इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥८१॥

## अपूर्वेयं धनुर्विद्या ।

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः समायाति गुणो याति दिगन्तरम् (क) ॥८२॥

—अमृतदत्तस्य ।

## अपूर्वो दृश्यते वह्निः ।

अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले ।
दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः ॥८३॥

—कालिदास—शृङ्गारतिलकम् ।

## अपूर्वः कोपि कामान्धः ।

## अपूर्वः कोऽपि कोशोऽयम् ।

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति !
व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥८४॥

---

(क) मार्गणौघः=याचकाः (पक्षे) बाणाः । गुणः=विनयादिः (पक्षे) ज्या ।

## अप्राणो ह्यमनाः शुभ्रः ।

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥८५॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥८६॥

—मुण्डकोपनिषद् ।

देहान्यत्वान्न (क) मे जन्म जराकार्श्यलयादयः ।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ॥८७॥
अमनस्त्वान्न मे दुःखरागद्वेषभयादयः ।
अप्राणो ह्यमनाः शुभ्र इत्यादि श्रुतिशासनात् ॥८८॥

—शङ्कराचार्य—आत्मबोधः

## अप्राप्तकालं वचनम् ।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ! ॥८९॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## अप्रियस्यतु पथ्यस्य वक्ता श्रोता च दुर्लभः ।

सुलभाः पुरुषा राजन् ! सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥९०॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।

अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र सम्पदः ॥९१॥

---

(क) देहान्यत्वात् देहभिन्नत्वादात्मन इति यावत् ।

## अफलं—अफलं—अफलम् ।

भोजनमफलमगव्यं श्रुतमफलं दुर्विनीतस्य ।
कृपणस्य धनमफलं जीवनमफलं दरिद्रस्य ॥९२॥

## अबला त्वं यदि सरले ।

वक्षसि वहसि गिरीन्द्रौ त्रिभुवनजयिनी कटाक्षेण ।
अबला त्वं यदि सरले ! कं बलवन्तं विजानीमः (क) ॥९३॥

## अबला यत्र प्रबला ।

अबला यत्र प्रबला बालो राजा निरक्षरो मन्त्री ।
न हि न हि तत्र धनाशा जीवित आशापि दुर्लभा भवति ॥९४॥

## अबलाः कथं ताः ।

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीस्ताः ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥९५॥

—भर्तृहरि—शृङ्गारशतकम् ।

## अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ।

लुलाये(ख) गोमायौ(ग) मृगपरिषदि श्वापदकुले
करिष्यन्कार्पण्यं किमिह महिमानं गमयसि ।
निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिपदशा-
मभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥९६॥

---

(क) पाठान्तरम्—'अबला त्वं यदि सुन्दरि ! को बलवांस्तन्न जानीमः' ।
(ख) लुलाये=महिषे ।
(ग) गोमायौ=मृगधूर्तके शृगाले ।

## अभयं सर्वभूतेभ्यः ।

अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददातीत्यनुशुश्रुम(क) ॥९७॥

—महाभारते—अनुशासनपर्वणि ।

## अभिमानेन यद्दत्तम् ।

अभिमानेन यद्दत्तं तद्दत्तं भसिते घृतम् ।
भक्त्या परमया दत्तममृतत्वाय कल्पते ॥९८॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## अमन्त्रमक्षरं नास्ति ।

## अमुना कुन्दकुञ्जेन किम् ।

कुन्दकुञ्जमितः पश्य पुष्पितं सखि! शोभनम् ।
अमुना कुन्दकुञ्जेन सखि! मे किं प्रयोजनम्(ख) ॥९९॥

## अमृतस्य नाशास्ति वित्तेन ।

अमृतस्य(ग) नाशास्ति वित्तेनेत्येव हि श्रुतिः ।
ब्रवीति कर्मणो मुक्तेरहेतुत्वं स्फुटं यतः ॥१००॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## अमृतं—अमृतं—अमृतम् ।

अमृतं शिशिरे वह्निरमृतं बालभाषणम् ।
अमृतं स्वप्रिया भार्या ह्यमृतं स्वामिगौरवम्(घ) ॥१०१॥

---

(क) पाठान्तरम्—'तस्य पुण्यस्य कल्पान्ते क्षय एव न विद्यते' इति।
(ख) 'अमुना' अर्थात् 'मु' विहीनेन। नायं मुकुन्दकुञ्जः अतो नानेन मे प्रयोजनम्।
श्लोकस्य पूर्वार्द्धं सख्या उक्तम् उत्तरार्द्धं च राधिकया उक्तम् ।
(ग) अमृतस्य=मोक्षस्य। 'अमृतस्य नाशास्ति वित्तेन' अर्थात् वित्तसाध्य कर्मकाण्ड के द्वारा मुक्ति की आशा नहीं है, क्योंकि वह ज्ञान के द्वारा ही प्राप्त हो सकती है।
(घ) पाठान्तरम्—'अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् ।
अमृतं राजसन्मानममृतं क्षीरभोजनम्' ॥
अन्यच्च—'पुरा वै अमृतं सृष्ट्वा विधात्रा निहितं किल ।
चन्द्रे स्वर्गे तथा वाक्ये बालानां रमणीमुखे ।
सुहृदां दर्शने चैव साधूनां सह सङ्गतौ' ॥

अमृतं परित्यज्य विषं पिबन्ति ।

अमृतं राहवे मृत्युः ।

अमृतं वा विषमीश्वरेच्छया ।

स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवे—
दमृतं वा विषमीश्वरेच्छया ॥१०२॥

—कालिदास—रघुवंशम् ।

अमेध्यादपि काञ्चनम् ।

अयमुदयति चन्द्रः ।

अयमुदयति चन्द्रो वारिधेरम्बुगर्भा—
दमृतकणकरालैरंशुभिर्दीप्यमानः ।
भुजगशयनवक्षोहर्म्यदेशे ललन्त्या
वदनमिव यदृच्छोत्तानितं विश्वमातुः (क) ॥१०३॥

अयि रम्भे ! फलारम्भे कौटिल्यं तव नोचितम् ।

आमूलतः सरसता फलवत्ता परार्थतः ।
अयि रम्भे ! फलारम्भे कौटिल्यं तव नोचितम् ॥१०४॥

अयुक्तं स्वामिनो युक्तम् ।

अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् ।
अमृतं राहवे मृत्युर्विषं शङ्करभूषणम् ॥१०५॥

---

(क) चन्द्रोदयवर्णनमित्यनेन श्लोकेन ध्वन्यते।

## अयं त्वपूर्वप्रतिमाविशेषः ।

आराध्यमानो नृपतिः प्रयत्नान्न तोषमायाति किमत्र चित्रम् ।
अयं त्वपूर्वप्रतिमाविशेषो यः सेव्यमानो रिपुतामुपैति ॥ १०६॥

—विष्णुशर्मा—हितोपदेशः ।

## अयं पटो मे पितुरङ्गभूषणम् ।

अयं पटो मे पितुरङ्गभूषणं पितामहाद्यैरुपभुक्तयौवनः ।
अलङ्करिष्यत्यथ पुत्रपौत्रकान्मयाधुना पुष्पवदेव धार्यते (क) ॥ १०७॥

## अरण्यसंस्थोथ मुनिर्बुभूषेत् ।

उत्पाद्य पुत्राननृणांश्च कृत्वा
वृत्तिं च तेभ्योनुविधाय काञ्चित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा
अरण्यसंस्थोथ मुनिर्बुभूषेत् ॥ १०८॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## अरण्यं तेन गन्तव्यम् ।

## अरण्यं विचित्रं गृहम् ।

चन्द्रो द्वादशभास्कराः समभवन्रात्रिर्युगानां शतं
मिष्टं तिक्तरसं विलेपनमहो दीक्षानलो मे तव ।
विच्छेदान्मलयानिलः प्रियतमे ! किं कालकूटः श्रुतौ
गीतादिध्वनिरेव वज्रसदृशोऽरण्यं विचित्रं गृहम् ॥ १०९॥

—विह्लण—विद्यासुन्दरम् ।

---

(क) पाठान्तरम्—'अयं पटो मे पितुराद्यभूषणं पितामहाद्यैरपि भुक्तयौवनः ।
मत्पुत्रपौत्रान्समलङ्करिष्यत्यतो मया कक्षपुटेन धार्यते'॥
हास्यरसात्मकः श्लोकोऽयम् ।

## अरसिकेषु रसस्य निवेदनम् ।

इतरतापशतानि यथेच्छया
वितर तानि सहे चतुरानन !
अरसिकेषु रसस्य निवेदनं
शिरसि मा लिख मा लिख मा लिख ॥११०॥

—वररुचि—नीतिरत्नम् ।

## अर्थमनर्थं भावय नित्यम् ।

अर्थमनर्थं भावय नित्यं
नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः
सर्वत्रैषा कथिता नीतिः (क) ॥१११॥

—शङ्कराचार्य—मोहमुद्गरः ।

## अर्थस्य पुरुषो दासः ।

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज ! बद्धोऽस्म्यर्थेन कौरवैः (ख) ॥११२॥

—घटकर्पर—नीतिसारम् ।

## अर्थस्य सर्वे वशाः ।

माता निन्दति नाभिनन्दति पिता भ्राता न सम्भाषते
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते ।
अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृ—
त्तस्मादर्थमुपार्जयस्व च सखे ! ह्यर्थस्य सर्वे वशाः (ग) ॥११३॥

—घटकर्पर—नीतिसारम् ।

---

(क) 'सर्वत्रैषा विहिता नीतिः' इति द्वादशपञ्जरिकास्तोत्रे ।
(ख) युधिष्ठिरं प्रति भीष्मपितामहस्योक्तिरियम् ।
(ग) दृश्यताम्—'द्रव्येण सर्वे वशाः' इति ।

## अर्थातुराणां न पिता न बन्धुः ।

## अर्थानामर्जने दुःखम् ।

## अर्थानामर्जनं कार्यम् ।

अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा ।
भक्ष्यमाणो निरादायः सुमेरुरपि हीयते ॥११४॥

—व्यासमुनेः ।

## अर्थी दोषान्न पश्यति ।

न च पश्यति जन्मान्धः कामान्धो नैव पश्यति ।
न पश्यति मदोन्मत्तो ह्यर्थी दोषान्न पश्यति ॥११५॥

## अर्थो हि कन्या परकीय एव ।

अर्थो हि कन्या परकीय एव
तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा (क) ॥११६॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## अर्थोष्मणा विरहितः पुरुषः स एव ।

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
सोऽप्यन्य एव भवतीति किमत्र चित्रम् ॥११७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) कण्वमुनेरुक्तिरियं यदा शकुन्तला पतिगृहे गतवती ।

अर्धो घटो घोषमुपैतिनूनम् ।

## अर्धं त्यजति पण्डितः ।

सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥११८॥

## अर्धं त्यजेत्पण्डितः ।

मा मां स्पर्शय पुष्पवत्यहमहो पुष्पेण किं पातकं
पुष्पिण्या सह सङ्गमेन पुरुषस्यार्धायुषं क्षीयते ।
अस्पृष्ट्वा सकलायुषं क्षयति चेत्तस्यार्धनाशो वरः
सर्वस्यापि विनाशकालसमये अर्धं त्यजेत्पण्डितः ॥११९॥

## अलसस्य कुतो विद्या ।

अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् ।
अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥१२०॥
—विष्णुशर्मा—हितोपदेशः ।

## अल्पविद्यो महागर्वी ।

अल्पतोयश्चलत्कुम्भो ह्यल्पदुग्धाश्च धेनवः ।
अल्पविद्यो महागर्वी कुरूपी बहुचेष्टितः ॥१२१॥

## अवतारा दशैते स्युः ।

वनजौ वनजौ खर्वो रामौ कृष्णः कृपोऽकृपः (क) ।
अवतारा दशैते स्युः कृष्णस्तु भगवान्स्वयम् ॥१२२॥

---

(क) वनजौ=जलोत्पन्नौ अर्थात् मत्स्यकूर्मावतारौ। वनजौ=अरण्योत्पन्नौ अर्थात् वराह-नृसिंहावतारौ। खर्वः=वामनः। रामौ=परशुरामः रामश्च। कृपोऽकृपः=बुद्धः कल्किश्च।

## अवतारा ह्यसंख्येयाः ।

अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ १२३॥

—श्रीमद्भागवतम् ।

## अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि (क) ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ १२४॥

हसद्भिः क्रियते कर्म रुदद्भिः परिपच्यते ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ १२५॥

## अवश्यम्भाविनो भावा भवन्ति महतामपि ।

अवश्यम्भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥ १२६॥

—नारायण पण्डित—हितोपदेशः ।

## अवश्यम्भाविभावानां प्रतीकारो भवेद्यदि ।

अवश्यम्भाविभावानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न बाध्येरन्नलरामयुधिष्ठिराः ॥ १२७॥

## अवसरपठिता वाणी ।

अवसरपठिता वाणी गुणगणरहितापि शोभते पुंसाम् ।
रतिसमये रमणीनां भूषाहानिस्तु भूषणं भवति ॥ १२८॥

## अविद्या बुधसोमयोः ।

विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ ।
कनिष्ठौ भौमसौरी च अविद्या बुधसोमयोः ॥ १२९॥

---

(क) 'कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि' इति पाठान्तरम् ।

## अविद्याजीवनं शून्यम् ।

## अविवेकः परमापदां पदम् ।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥१३०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## अव्यक्तात्पुरुषः परः ।

## अव्यक्ताद् व्यक्तयः सर्वाः ।

अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१३१॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ ! प्रभवत्यहरागमे ॥१३२॥

—भगवद्गीता ।

## अव्यक्तादीनि भूतानि ।

## अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ।

क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे ।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः (क) ॥१३३॥

—घटकर्पर—नीतिसारम् ।

व्यवस्थितः प्रशान्तात्मा कुपितोऽप्यभयङ्करः ।
अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः ॥१३४॥

---

(क) पाठान्तरम्—'क्षणे तुष्टाः क्षणे रुष्टा रुष्टास्तुष्टाः क्षणे क्षणे ।
अव्यवस्थितचित्तानां प्रसादोऽपि भयङ्करः' ॥

—कालिदास—द्वा० पु० ।

## अशक्तस्तस्करः साधुः ।

अशक्तस्तस्करः साधुः कुरूपा चेत्पतिव्रता ।
रोगी च देवताभक्तो वृद्धा वेश्या तपस्विनी (क) ॥१३५॥

## अशब्दमस्पर्शमरूपमव्ययम् ।

अशब्दमस्पर्शमरूपमव्ययं—
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तम्महतः परं ध्रुवं
निचाय्य (ख) तन्मृत्युमुखात्प्रमुच्यते ॥१३६॥

—कठोपनिषद् ।

## अशस्त्रवध उच्यते ।

आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् ।
पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥१३७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## अशान्तस्य कुतः सुखम् ।

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् (ग) ॥१३८॥

—भगवद्गीता ।

## अशोच्या हि पितुः कन्या ।

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥१३९॥

—कालिदास—कुमारसम्भवम् ।

---

(क) पाठान्तरम्—'अशक्तः सततं साधुः कुरूपा च पतिव्रता ।
व्याधितो देवभक्तश्च निर्धना ब्रह्मचारिणः' ॥
दृश्यताम्—'वृद्धा नारी पतिव्रता' इति ।

(ख) अवगम्य ।

(ग) दृश्यताम्—'प्रसादमधिगच्छति' इति ।

## अश्मापि याति देवत्वम् ।

कीटोऽपि सुमनः सङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥१४०॥

—विष्णुशर्मा—हितोपदेशः ।

## अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ।

## अष्टाविमानि हर्षस्य नवनीतानि भारत ।

अष्टाविमानि हर्षस्य नवनीतानि भारत !
वर्त्तमानानि दृश्यन्ते तान्येव स्वसुखान्यपि ॥
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ॥
समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥१४१॥

—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## असङ्गः पुरुषः प्रोक्तः ।

असङ्गः पुरुषः प्रोक्तो बृहदारण्यकेऽपि च ।
अनन्तमलसंश्लिष्टः कथं स्याद्देहकः पुमान् ॥१४२॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## असत्यं जनरञ्जनम् ।

सत्यं जनविरोधाय असत्यं जनरञ्जनम् ।
सुरा विक्रीयते स्थाने दधि क्षीरं गृहे गृहे ॥१४३॥

## असन्तुष्टाः द्विजा नष्टाः ।

## असम्भाव्यं न वक्तव्यम् ।

असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते ।
शिला तरति पानीयं गीतं गायन्ति वानराः ॥१४४॥

—चाणक्यशतकम् ।

## असहायः पुमानेकः कार्यान्तं नाधिगच्छति ।

असहायः पुमानेकः कार्यान्तं नाधिगच्छति ।
तुषेणापि विनिर्मुक्तस्तण्डुलो न प्ररोहति ॥१४५॥

## असह्यं ज्ञातिदुर्वाक्यम् ।

वरं रामशरो ग्राह्यो न च वैभीषणं वचः ।
असह्यं ज्ञातिदुर्वाक्यं मेघान्तरितरौद्रवत् (क) ॥१४६॥

## असारे खलु संसारे ।

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते हरिः शेते महोदधौ (ख) ॥१४७॥
असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनम् ॥१४८॥
—हलायुध—धर्मविवेकः ।

असारे खलु संसारे पूज्या सारङ्गलोचना ।
तदर्थं धनमिच्छन्ति तत्त्यागे च धनेन किम् ॥१४९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

असारे खलु संसारे सारं कान्ताकुचद्वयम् ।
यद्विश्लेषभयाच्छम्भुरर्द्धनारीश्वरोऽभवत् ॥१५०॥
असारे खलु संसारे सुखभ्रान्तिः शरीरिणाम् ।
लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥१५१॥

## असारभूते संसारे ।

असारभूते संसारे सारभूता नितम्बिनी ।
इति सञ्चिन्त्य वै शम्भुरर्धाङ्गे पार्वतीं दधौ ॥१५२॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) रावणस्य खेदोक्तिरियम् ।
(ख) 'क्षीराब्धौ च हरिः शेते शिवः शेते हिमालये' इति पाठान्तरम् ।

## असारं खलु संसारम् ।

असारं खलु संसारं वीक्ष्य कार्यं च भङ्गुरम् ।
नित्यानन्दमयं कृष्णपदमाश्रय रे मनः ॥ १५३ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## असारं त्यजतः सुखम् ।

जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम् ।
संसारमिममुत्पन्नमसारं त्यजतः सुखम् ॥ १५४ ॥

—विष्णुशर्मा—हितोपदेशः ।

## असिधाराव्रतमिदम् ।

भव पञ्चतपा जीव ! भवे कामानलैर्वृते ।
असिधाराव्रतमिदं चर वा भव भस्मसात् (क) ॥ १५५ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## असिवत्कुरुते कार्यम् ।

बने वसति को वीरो योऽस्थिमांसविवर्जितः ।
असिवत्कुरुते कार्यं कार्यं कृत्वा वनं गतः (ख) ॥ १५६ ॥

---

(क) 'पञ्चतप'—ग्रीष्मऋतु में चारों ओर अग्नि जलाकर सूर्य की ओर स्थिर दृष्टि हो योगसाधन करने का नाम 'पञ्चतप' है ।

'असिधाराव्रत'—युवक और युवती एकासन पर बैठ योग साधन करें, पर मुग्ध-स्वभाव दो शिशुओं के समान दोनों का मन सर्वथा निर्विकार रहे, इस प्रकार की तपस्या का नाम 'असिधाराव्रत' है। असिधारा अर्थात् खड्ग की तीक्ष्ण धार। तीक्ष्ण खड्ग की धार से देह संघर्षण के तुल्य यह व्रत अति दुष्कर है; इसी से इसका नाम 'असिधाराव्रत' है ।

'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् ।
अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत्' ॥

तथाहि—

'दर्शनं स्पर्शनं क्रीडा शृङ्गारो गुह्यभाषणम् ।
मृष्टान्नं प्रियमेकत्र शयनं भार्यया सह ।
निर्विकारं मनः कुर्यादसिधारा व्रतं त्विदम्' ॥

(ख) अत्रोत्तरं कुलालदोरकः । वने=जले । वनं गतः=जलं गतः ।

## अस्ति नास्ति—अस्ति नास्ति ।

अस्थि नास्ति शिरो नास्ति वाहुरस्ति निरङ्गुलिः ।
नास्ति पदद्वयं गाढमङ्गमालिङ्गति स्वयम् (क) ॥१५७॥
अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ ।
सीताहरणसामर्थ्यो न रामो न च रावणः (ख) ॥१५८॥

## अस्ति नास्ति न जानन्ति ।

अतिथिर्बालकश्चैव राजा भार्या तथैव च ।
अस्ति नास्ति न जानन्ति देहि देहि पुनः पुनः ॥१५९॥

## अस्तीत्येवोपलब्धव्यः ।

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति (ग) ॥१६०॥

—कठोपनिषद् ।

## अस्य दग्धोदरस्यार्थे किं किं न क्रियते मया ।

अस्य दग्धोदरस्यार्थे किं किं न क्रियते मया ।
वानरीमिव वाग्देवीं नर्त्तयामि गृहे गृहे (घ) ॥१६१॥

## अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ।

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥१६२॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) विषयदण्डः ।

(ख) कञ्चुकः ।

(ग) उभयोः सोपाधिकनिरुपाधिकयोः भावः अस्ति इति उपलब्धव्यः, तत्त्वभावेन निर्विषय—चिन्मयमात्रभावेन च उपलब्धव्यः । पूर्वम् 'अस्ति' सोपाधिकरूपेण, विश्वाधाररूपेण अस्ति इति उपलब्धस्य परमात्मानः तत्त्वभावः निरुपाधिकचिन्मयमात्रभावः पश्चात् प्रसीदति अभिमुखी भवतीति भावः । —शङ्करभाष्यम् ।

(घ) ब्राह्मणपण्डितगण धनवानों के घर जाकर उनको सन्तुष्ट करने के अभिप्राय से उत्तम उत्तम श्लोक सुनाकर अर्थ प्रार्थना किया करते हैं। यही सरस्वतीनर्त्तन कहा जाता है।

## अहह ! कलिकालः प्रभवति ।

न देवे देवत्वं कपटपटवस्तापसजना
जनो मिथ्यावादी विरलतरवृष्टिर्जलधरः ।
प्रसङ्गो नीचानामवनिपतयो दुष्टमनसो
जना भ्रष्टा नष्टा अहह ! कलिकालः प्रभवति ॥ १६३॥

## अहह ! गहनो मोहमहिमा ।

अजानन्माहात्म्यं पतति शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नाति पिशितम् ।
विजानन्तो ह्येते वयमिह विपज्जालजटिला—
न्न मुञ्चामः कामानहह ! गहनो मोहमहिमा (क) ॥ १६४॥

—भर्तृहरि—वैराग्यशतकम् ।

## अहितो देहजो व्याधिः ।

## अहेरिव गतिः प्रेम्णः ।

अहेरिव गतिः प्रेम्णः स्वभावकुटिला भवेत् ।
अतो हेतोरहेतोश्च यूनोर्मान उदञ्चति ॥ १६५॥

—श्रीमद्गोस्वामी—उज्ज्वलनीलमणौ शृङ्गारभेदकथने ।

## अहो गुणं पातकितारणं तम् ।

त्वां निर्गुणं नाम वदन्तु वेदाः
कुत्रास्ति को वा गुणवत्तरस्त्वत् ।
अहो गुणं पातकितारणं तं
हरे ! त्वदन्यो धरते भवे कः ॥ १६६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) पाठान्तरम्—'अजानन्दाहार्तिं विशति शलभो दीपदहनं
स मीनोऽपि ज्ञात्वा वृतबडिशमश्नाति पिशितम् ।
विजानन्तोऽप्येतान्वयमिह विपज्जालजटिला—
न्न मुञ्चामः कामानहह ! गहनो मोहमहिमा' ॥

—शान्तिशतकम्—

## अहो बत महत्कष्टम् ।

अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते (क) साधुरसाधुस्तेन तुष्यति ॥१६७॥

—व्यासस्य ।

## अहो बत महत्पापम् ।

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥१६८॥

—भगवद्गीता ।

## अहो विधातस्तव न क्वचिद्दया ।

अहो विधातस्तव न क्वचिद्दया
संयोज्य मैत्र्या प्रणयेन देहिनः ।
तांश्चाकृतार्थान्वियुनङ्क्ष्य पार्थकं
विक्रीडितं तेऽर्भकचेष्टितं यथा (ख) ॥१६९॥

—श्रीमद्भागवतम् ।

## अहो विधातुः शिशुता किलेयम् ।

अहो विधातुः शिशुता किलेय—
मकारणे त्रीणि चकार यस्मात् ।
नेत्रे प्रशस्ते विपिने मृगीणां
निकेतने वित्तमदातुरेव ॥१७०॥

## अहो महत्त्वं महतामपूर्वम् ।

अहो महत्त्वं महतामपूर्वं
विपत्तिकालेऽपि परोपकारः ।
यथास्यमध्ये पतितोऽपि राहोः
कलानिधिः पुण्यचयं ददाति ॥१७१॥

---

(क) अपत्रपते=लज्जां प्राप्नोति ।
(ख) श्रीकृष्णस्य विरहे विधिमुद्दिश्य गोपाङ्गनानामुक्तिरियम् ।

### अहो रूपमहो ध्वनिः ।

उष्ट्राणां च विवाहेषु गीतं गायन्ति गर्दभाः (क) ।
परस्परं प्रशंसन्ति अहो रूपमहो ध्वनिः ॥ १७२॥

### अहो सुमनसां प्रीतिः ।

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ १७३॥

### अहं द्रष्टृतया सिद्धः ।

अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः ।
ममायमिति निर्देशात्कथं स्याद्देहकः पुमान् ॥ १७४॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

### अहं प्राणेश्वरे मन्मथः ।

आयातामधुयामिनी यदि पुनर्नायात एव प्रभुः
प्राणा यान्तु विभावसौ यदि पुनर्जन्मग्रहं प्रार्थये ।
व्याधः कोकिलबन्धने हिमकरध्वंसे च राहुग्रहः
कन्दर्पे हरनेत्रदीधितिरहं प्राणेश्वरे मन्मथः (ख) ॥ १७५॥

—कालिदास—शृङ्गारतिलकम् ।

### अहं ब्रह्मेति निर्मलम् ।

आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षरम् ।
एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् (ग) ॥ १७६॥

—शङ्कराचार्य—आत्मबोधः ।

---

(क) 'उष्ट्राणां च गृहे लग्नं गर्दभाः शान्ति पाठकाः' इति पाठान्तरम् ।

(ख) विरहकातरा कापि सखी विदेशस्थं पतिमुद्दिश्य सख्यन्तरे सरोषा प्राह आयातेति ।

(ग) आविद्यकमिति । आविद्यकम् अविद्यानिबन्धनं दृश्यं शरीरादि बुद्बुदवत् क्षरं नश्वरम् । एतद्विलक्षणं क्षरातीतमित्यर्थः अहं निर्मलं ब्रह्म इति विद्यात् ।

## अहिंसा—अहिंसा—अहिंसा ।

अहिंसा परमो धर्मस्तथाप्यहिंसा परो दमः ।
अहिंसा परमं दानमहिंसा परमं तपः ॥१७७॥
अहिंसा परमो यज्ञस्तथाहिंसा परं फलम् ।
अहिंसा परमं मित्रमहिंसा परमं सुखम् ॥१७८॥
सर्वयज्ञेषु वा दानं सर्वतीर्थेषु वा प्लुतम् ।
सर्वदानफलं वापि नैतत्तुल्यमहिंसया ॥१७९॥

—महाभारते अनुशासनपर्वणि ।

## अहिंसा परमो धर्मः ।

अहिंसा परमो धर्म इत्येवं परमा मतिः ।
अहिंसा परमं दानमित्येवं कवयो विदुः ॥१८०॥

---

# आ

## आकाशपुष्पपरिकल्पितमेव माल्यम् ।

वाताभ्रविभ्रमनिभे विभवे भवेऽस्मि—
न्यः सौख्यबुद्धिमतिमन्दमतिः करोति ।
आकाशपुष्पपरिकल्पितमेव माल्यं
नूनं स धारयितुमिच्छति कण्ठदेशे ॥ १ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## आगमे सुखमाप्नोति ।

विषये नवगर्भे च ऋणे कुक्कुरसङ्गमे ।
आगमे सुखमाप्नोति निर्गमे प्राणसङ्कटम् ॥ २ ॥

## आचारः परमो धर्मः ।

आचारः परमो धर्म आचारः परमं तपः ।
आचारः परमं ज्ञानमाचारात्किं न साध्यते ॥ ३ ॥

## आज्ञा गुरूणां ह्यविचारणीया ।

स शुश्रुवान्मातरि भार्गवेण
पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
अत्यग्रहीदग्रजशासनं त—
दाज्ञा गुरूणां ह्यविचारणीया ॥ ४ ॥

—कालिदास—रघुवंशम् ।

## आतुरे नियमो नास्ति ।

आतुरे नियमो नास्ति बाले वृद्धे तथैव च ।
कुलाचाररते चैव एष धर्मः सनातनः ॥ ५ ॥

## आत्मज्योतिः शिवोऽस्म्यहम् ।

## आत्मनः प्रतिकूलानि परेषान्न समाचरेत् ।

श्रूयतां धर्मसर्वस्वं श्रुत्वाचैवावधार्य्यताम् ।
आत्मनः प्रतिकूलानि परेषान्न समाचरेत् ॥ ६ ॥

—महाभारतम् ।

## आत्मन्येव वशं नयेत् ।

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ ७ ॥

—भगवद्गीता ।

## आत्मबुद्धिः शुभकरी ।

आत्मबुद्धिः शुभकरी गुरुबुद्धिर्विशेषतः ।
परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयङ्करी (क) ॥ ८ ॥

## आत्मवत्सर्वभूतेषु ।

मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ ९ ॥

—चाणक्यशतकम् ।

## आत्मवन्मन्यते जगत् ।

आश्रमान्तर्गता वेश्या ऋष्यश्रृङ्ग ऋषेः सुतः ।
तपस्विनस्तु तां मेने आत्मवन्मन्यते जगत्(ख) ॥ १० ॥

## आत्मशक्त्यैव चात्मानम् ।

सूक्ष्ममात्मरसेनैवात्मानं पुष्णासि मातृके !
आत्मशक्त्यैव चात्मानं प्रवर्त्तयसि नित्यशः (ग) ॥ ११ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) पाठान्तरम्—'आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः। परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयान्तिका' ॥

(ख) राजा लोमपाद ने ऋष्यशृङ्ग मुनि को बुलाने के निमित्त एक वेश्या उनके आश्रम में भेजी। वेश्या जब उनके आश्रम में पहुँची तब ऋष्यशृङ्ग मुनि ने जिनको स्त्री पुरुष का भेदज्ञान नहीं रहा, उसको देखते ही अपने मन में उसे तपस्वी समझा। जो मनुष्य जिस प्रकृति का होता है वह अपनी प्रकृति के अनुसार सारे जगत् को समझता है।

(ग) ब्रह्मशक्ति भगवती प्रकृति देवी अपने रस से ही अपने को पोषण करती है। तन्त्रशास्त्रोक्त छिन्नमस्ता की मूर्ति इसका रूपकमात्र है। छिन्नमस्ता अपने देह से निःसृत तीन शोणित धाराएँ अपने मुण्ड को ही पान कराती है। वही तीन शोणितधारा शरीर की तीन प्रधान नाड़ियों से प्रवाहित होती हैं। इन तीन नाड़ियों का नाम इड़ा, पिङ्गला और सुषुम्ना है। सुषुम्ना सर्वप्रधान चन्द्र, सूर्य और अग्निस्वरूपा है। इड़ा नाड़ी में चन्द्र का, पिङ्गला में सूर्य का और सुषुम्ना में चन्द्र सूर्य दोनों का सञ्चार है; अर्थात् यही तीन नाड़ियाँ चन्द्र सूर्यादि से रस को आकर्षण कर असंख्य नाड़ी चक्रों को पोषण करती हुई जीवदेह की रक्षा करती हैं। इस रूपक के द्वारा यही प्रगट होता है कि त्रिगुणा प्रकृति देवी चन्द्र सूर्यादि रूप अपनी नाड़ियों से निःसृत शोणितादिरूप रस धातु के द्वारा सृष्टिप्रवाह को पोषण करती है।

—ताराकुमार।

## आत्मा तु सततं प्राप्तः ।

## आत्माग्नौ भक्तिहव्येन प्रीयते परमेश्वरः ।

क्षिपन्ति भस्मनि घृतं बाह्ययज्ञपरा जनाः ।
आत्माग्नौ भक्तिहव्येन प्रीयते परमेश्वरः ॥१२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## आत्मार्थे को न जीवति ।

जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य आत्मार्थे को न जीवति ॥१३॥

—विष्णुशर्मा—हितोपदेशः ।

## आत्मार्थे पृथिवीं त्यजेत् ।

त्यजेत्कुलार्थे पुरुषं(क) ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥१४॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## आत्मानं नानुशोचन्ति ।

म्रियमाणं मृतं बन्धुं शोचन्ति परिदेविनः ।
आत्मानं नानुशोन्ति कालेन कवलीकृतम् ॥१५॥

—श्रीदेवगणदेवानाम् ।

## आत्मानं रथिनं विद्धि ।

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥१६॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥१७॥

—कठोपनिषद् ।

---

(क) 'त्यजेदेकं कुलस्यार्थे' इति पाठान्तरम् ।

## आत्मानं सततं रक्षेत् ।

आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि (क) ॥१८॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## आत्मानमात्मना वेत्सि ।

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥१६॥
—कालिदास—कुमारसम्भवम् ।

## आत्मारामस्य निर्वाणम् ।

आत्मन्येव परात्मानं भक्तियोगेन पश्यतः ।
आत्मारामस्य निर्वाणमात्मन्येव प्रतिष्ठितम् ॥२०॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## आत्मैव परमं तीर्थम् ।

आत्मैव परमं तीर्थं मुक्तिक्षेत्रं सनातनम् ।
त्रितापहारिणी यत्र मुक्तिगङ्गा विराजते ॥२१॥
तीर्थे तीर्थे परिभ्रम्य मूढास्ताम्यन्ति मुक्तये ।
आत्मैव परमं तीर्थं यत्र मुक्तिमयो हरिः ॥२२॥
आत्मा काशीमहातीर्थं मुक्तिक्षेत्रं सनातनम् ।
नित्यं सन्निहितो यत्र राजराजेश्वरः शिवः ॥२३॥
तदेव भक्तहृदयं गयातीर्थं विमुक्तिदम् ।
पादपद्मं विनिदधे यत्र देवो गदाधरः ॥२४॥
श्रीक्षेत्रं परमं तीर्थं भक्तस्य हृदयं हि तत् ।
मुक्तिदाता स्वयं यत्र जगन्नाथो विराजते ॥२५॥

---

(क) पाठान्तरम्—'आत्मानं सततं रक्षेद्दारैरपि धनैरपि ।
पुनर्दाराः पुनर्वित्तं न शरीरं पुनः पुनः' ॥

नित्यानन्दमयो यत्र हृदये रमते हरिः ।
सर्वतीर्थोत्तमं तद्धि सर्वतीर्थोत्तमं हि तत् ॥२६॥
त्रैलोक्ये भ्रम रे जीव ! तृषाशान्त्यै निरन्तरम् ।
आत्मतीर्थं विना तृष्णा न ते क्वापि शमिष्यति (क) ॥२७॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## आत्मैव ह्यात्मनो बन्धुः ।

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥२८॥
बन्धुरात्माऽऽत्मनस्तस्य येनाऽत्मैवाऽत्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्त्ततात्मैव शत्रुवत् ॥२९॥

—भगवद्गीता ।

## आत्मैवेदं जगत्सर्वम् ।

आत्मैवेदं जगत्सर्वमात्मनाऽन्यत्र किञ्चन ।
मृदो यद्वद् घटादीनि स्वात्मानं सर्वमीक्षते ॥३०॥

—शङ्कराचार्य—आत्मबोधः ।

## आदावायुः परीक्षेत ।

आदावायुः परीक्षेत पश्चाल्लक्षणमुत्तमम् ।
आयुर्हीननराणां च लक्षणैः किं प्रयोजनम् ॥३१॥

## आदावेव प्रतिक्रिया ।

न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ।
चिन्तनीया हि विपदामादावेव प्रतिक्रिया ॥३२॥

---

(क) दृश्यताम्—'न वारिणा शुध्यति चान्तरात्मा' इति।

## आदौ तातो वरं पश्येत् ।

आदौ तातो वरं पश्येत्ततो वित्तं ततःकुलम् ।
यदि किञ्चिद्वरे दोषः किं धनेन कुलेन किम् ॥३३॥

## आद्य एव परो रसः ।

श्याममेव परं रूपं पुरी माधुपुरी वरा ।
वयः कैशोरकं ध्येयमाद्य एव परो रसः ॥३४॥
—चैतन्यचरितामृते पद्यावल्याम् ।

## आपत्सु वैराणि समुद्भवन्ति ।

## आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ।

## आपदर्थं धनं रक्षेत् ।

आपदर्थे धनं रक्षेत् श्रीमतामापदः कुतः ।
सा चेदपगता लक्ष्मीः सञ्चितार्थोऽपि नश्यति (क) ॥३५॥

## आपदि मित्रपरीक्षा ।

## आयादल्पतरो व्ययः ।

इदमेव हि पाण्डित्यं चातुर्यमिदमेव हि ।
इदमेव हि सुबुद्धित्वं आयादल्पतरो व्ययः ॥३६॥

## आयुर्मर्माणि रक्षति ।

निमग्नस्य पयोराशौ पर्वतात्पतितस्य च ।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥३७॥
—घटकर्पर—नीतिसारम् ।

---

(क) पाठान्तरम्—'आपदर्थं धनं रक्षेन्महतां कुत आपदः ।
कदाचित्कुपितो देवः सञ्चितं चापि नश्यति ॥

## आयुर्याति दिने दिने ।

लोकः पृच्छति संसारे शरीरे कुशलं तव ।
कुतः कुशलमस्माकमायुर्याति दिने दिने ॥३८॥
आसन्नतामेति मृत्युरायुर्याति दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥३९॥

## आयुष्यनाशकं नित्यम् ।

वृद्धार्कः प्रेतधूमश्च वृद्धा स्त्री थिल्लरोदकम् ।
आयुष्यनाशकं नित्यं रात्रौ दध्यन्नभोजनम् ॥४०॥

## आयुष्यवर्धकं नित्यम् ।

बालार्को यज्ञधूमश्च बाला स्त्री निर्भररोदकम् ।
आयुष्यवर्धकं नित्यं रात्रौ क्षीरान्नभोजनम् ॥४१॥

## आयू रक्षति मर्माणि ।

अर्जुनस्य प्रतिज्ञे द्वे न दैन्यं न पलायनम् ।
आयू रक्षति मर्माणि आयू रत्नं प्रयच्छति ॥४२॥

## आरभेतैव कर्माणि ।

आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥४३॥

## आरोग्यं भास्करादिच्छेत् ।

आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद्धुताशनात् ।
ज्ञानं महेश्वरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥४४॥

## आर्त्ता देवान्नमस्यन्ति ।

## आर्द्रकं च सदा पथ्यम् ।

वृन्ताकं कोमलं पथ्यं कूष्माण्डं कोमलं विषम् ।
आर्द्रकं च सदा पथ्यमपथ्यं बदरीफलम् ॥४५॥

## आलङ्कारिकस्याशीर्वचनम् ।

शृङ्गारहास्यसहिताद्भुतरौद्रवीराः
संप्राप्य कालमुचितं भवतो भवन्तु ।
किञ्च द्विषां गिरिदरीविनिवासभाजां
बीभत्सभूरिकरुणाभयशान्तयः स्युः (क) ॥४६॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

## आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वायं नावसीदति ॥४७॥

—भर्तृहरि—नीतिशतकम् ।

## आशा बलवती कष्टम् ।

## आशा येषां दासी ।

आशाया ये दासास्ते दासाः सर्वलोकस्य ।
आशा येषां दासी तेषां दासायते लोकः ॥४८॥

## आशा वैतरणी नदी ।

क्रोधो वैवस्वतो राजा आशा वैतरणी नदी ।
विद्या कामदुघा धेनुः सन्तोषो नन्दनवनम् ॥४९॥

---

(क) भावार्थ—हे राजन् ! समुचित समय के अनुसार आपके हृदय में शृङ्गार, हास्य, अद्भुत, रौद्र और वीर रसों का उदय हो और गिरिगुहानिवासी आपके शत्रुगण के हृदय में बीभत्स, करुणा, भय और शान्त रसों का संचार हो।

## आराधितोऽपि नृपतिः परिशङ्कनीयः ।

द्रश्यताम्—'अङ्के स्थितापि युवतिः परिरक्षणीया' इति ।

## आशावधिं को गतः ।

निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः ।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति
ब्रह्मा विष्णुपदं पुनः पुनरहो आशावधिं को गतः (क) ॥ ५० ॥

—शान्तिशतकम् ।

## आशीर्वचनम् ।

या सृष्टिःस्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः (ख) ॥ ५१ ॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

---

(क) पाठान्तरम्—'निःस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो ।
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशतां वाञ्छति ।
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्राह्मं पदं वाञ्छति
ब्रह्मा शैवपदं शिवो हरिपदम् आशावधिं को गतः' ॥

—अष्टरत्नम् ।

(ख) या (जलरूपा तनुः) स्रष्टुर्विधातुराद्या आदिभूता प्रथमेति यावत् सृष्टिः, या (अग्निरूपा तनुः) विधिना यथाशास्त्रं हुतं देवतोद्देशेनार्वाजितं हविः आज्यादिकं वहति धत्ते, या (यजमानरूपा तनुः) होत्री हवनकार्यसंपादयित्री, ये द्वे (सूर्यचन्द्ररूपे तनू ) कालं समयं विधत्तः कुरुतः दिवामानं रात्रिमानं च जनयत इत्यर्थः, या (आकाशरूपा तनुः) श्रुतेः श्रवणेन्द्रियस्य विषयः विषयीभूतः गुणः शब्दरूपः यस्याः तथोक्ता सती विश्वं जगत् व्याप्य स्थिता वर्त्तते, यां (क्षितिरूपां तनुं) सर्वेषां बीजानां प्रकृतिः आधारभूता इत्याहुः कथयन्ति पण्डिता इति शेषः, यया (वायुरूपया तन्वा) प्राणिनः जन्तवः प्राणवन्तः जीवन धारण-क्षमाः, अक्ष्नोः प्रतिगतं प्रत्यक्षं ताभिः प्रत्यक्षाभिः इन्द्रियगोचराभिः ताभिः जलादिभिरुल्लि-खिताभिः अष्टाभिः तनुभिः मूर्त्तिभिः प्रपन्नः युक्तः ईशः शिवः वः युष्मान् अवतु रक्षतु ।

—तेजश्चन्द्रविद्यानन्दकृता टीका ।

आश्चर्यमेतद्धि मनुष्यलोके ।

धर्मं प्रसङ्गादपि नाचरन्ति
पापं प्रयत्नेन समाचरन्ति ।
आश्चर्यमेतद्धि मनुष्यलोके—
ऽमृतं परित्यज्य विषं पिबन्ति ॥५२॥

आश्चर्यं परिपीडितोऽभिरमते ।

रे धाराधर ! धीरनीरनिकरैरेषा रसा नीरसा—
शेषा पृषकरोत्करैरतिवरैरापूरि भूरि त्वया ।
एकान्तेन भवन्तमन्तरगतं स्वान्तेन सञ्चिन्तय—
न्नाश्चर्यं परिपीडितोऽभिरमते यच्चातकस्तृष्णया (क) ॥५३॥

—उत्तरचातकाष्टकम् ।

---

भावार्थ यह है कि जो जलरूपा तनु जगत् स्रष्टा की प्रथम सृष्टि है, जो अग्निरूपा तनु यथाशास्त्र हुत हविः को देवलोक में वहन करती है, जो यजमानरूपा तनु हवनकार्य को संपादन किया करती है, जो सूर्यचन्द्ररूपा तनुद्वय दिवा रात्रि भेद में काल (समय) को विभाग करती है, श्रवणेन्द्रियग्राह्य शब्द है गुण जिस का ऐसी आकाशरूपा तनु जो इस सकल संसार में व्यापक है, जो पृथिवीरूपा तनु सर्व सस्यों का आधाररूप है, और जिस वायुरूपा तनु के द्वारा प्राणिगण जीवन धारण करते हैं, इन्द्रियगोचर वही जलादि अष्टमूर्त्तिधारी शिव आप लोगों की रक्षा करें ।

तथाहि भविष्यपुराणेः—

'शर्वाय क्षितिमूर्त्तये नमः, भवाय जलमूर्त्तयेनमः, रुद्राय अग्निमूर्त्तये नमः, उग्राय वायुमूर्त्तये नमः, भीमाय आकाशमूर्त्तये नमः, पशुपतये यजमानमूर्त्तये नमः, महादेवाय सोममूर्त्तये नमः, ईशानाय सूर्यमूर्त्तये नमः' ।

तथाहि शिवमहिम्नःस्तोत्रे—

'भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां—
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम् ।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥'

(क) सर्वस्त्वया सफलमनोरथः क्रियते केवलं नाहमिति केनचिदर्थिना कश्चित् धनी प्रोच्यते इति अप्रस्तुतप्रशंसया व्यज्यते ।

## आहारा राजसस्येष्टाः ।

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः (क) ॥५४॥

—भगवद्गीता ।

## आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ।

धनधान्यप्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥५५॥

—चाणक्यशतकम् ।

## आहाराः सात्त्विकप्रियाः ।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः (ख) ॥५६॥

—भगवद्गीता ।

---

# इ

## इतरेण तु जीवन्ति ।

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण (ग) तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ १ ॥

—कठोपनिषद् ।

## इतश्चेतश्च धावताम् ।

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ २ ॥

—विष्णशर्मा—हितोपदेशः ।

---

(क) (ख) दृश्यताम्—'भोजनं तामसप्रियम्' इति ।
(ग) इतरेण अन्येन परमात्मना इत्यर्थः ।

## इति केन सदा तुलनामर्हति ।

विधुरेति सदा विरूपतां
शतपत्रं वत शर्वरीमुखे ।
इति केन सदा श्रियोज्ज्वलं
तुलनामर्हति मत्प्रियाजनम्(क) ॥ ३ ॥

—श्रीरूप गोस्वामी—विदग्धमाधवम् ।

## इति चिन्त्यं मुहुर्मुहुः ।

को देशः कानि मित्राणि कः कालः कौ व्ययागमौ ।
कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ ४ ॥

## इति विधिर्विदधे रमणीमुखम् ।

कमलिनी मलिनी दिवसात्यये
शशिकला विकला क्षणदाक्षये ।
इति विधिर्विदधे रमणीमुखं
भवति विज्ञतमः क्रमशो जनः ॥ ५ ॥

## इतो न किञ्चित्परतो न किञ्चित् ।

इतो न किञ्चित्परतो न किञ्चि—
द्यतो यतो यामि ततो न किञ्चित् ।
विचार्य पश्यामि जगन्न किञ्चि—
त्स्वात्मावबोधादधिकं न किञ्चित् ॥ ६ ॥

—शान्तिशतकम् ।

## इतो भ्रष्टस्ततो भ्रष्टः ।

इतो भ्रष्टस्ततो भ्रष्टः परमेकान्तिवेषभाक् ।
न संसारसुखं तस्य नैव मुक्तिसुखं भवेत् ॥ ७ ॥

---

(क) मधुमङ्गलं प्रति श्रीकृष्णस्योक्तिरियम् ।

### इतः को न्वस्ति मूढात्मा ।

इतः को न्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥ ८ ॥
—शङ्कराचार्य—विवेकचूडामणिः ।

### इत्थं शीतं मया नीतम् ।

रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
इत्थं शीतं मया नीतं जानुभानुकृशानुभिः (क) ॥ ९ ॥

### इदमेव हि पाण्डित्यम् ।

दृश्यताम्—'आयादल्पतरो व्ययः' इति ।

### इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ।

हारो नारोपितः कण्ठे मया विश्लेषभीरुणा ।
इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः (ख) ॥१०॥
—वाल्मीकीमुनेः ।

### इन्द्रियाणीन्द्रियार्थेषु ।

### इन्द्रियाणि पराण्याहुः ।

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥११॥
—भगवद्गीता ।

---

(क) तथाहि चर्पटपञ्जरिकास्तोत्रे—'अग्रे वह्निः पृष्ठे भानू रात्रौ चिवुकसमर्पितजानुः ।
करतलभिक्षा तरुतलवासस्तदपि न मुञ्चत्याशापाशः'॥
—शङ्कराचार्य ।

(ख) सीतावियोगदूयमानमानसस्य सूर्यवंशमुक्तामणेः श्रीरामस्योक्तिरियम् ।
पाठान्तरम्—इदानीमावयोर्मध्ये सरित्सागरभूधराः'॥

## इन्द्रियेभ्यः परा ह्यर्थाः ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ १२॥

—कठोपनिषद् ।

## इन्द्रियेभ्यः परं मनः ।

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ १३॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यं ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥ १४॥

—कठोपनिषद् ।

## इन्धनीकुरुते मूढः ।

श्रुतं सत्यं तपः शीलं विज्ञानं तत्त्वमुत्तमम् ।
इन्धनीकुरुते मूढः प्रविश्य वनितानले ॥ १५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## इष्टं धर्मेण योजयेत् ।

सत्कुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत् ।
व्यसने योजयेच्छत्रुं इष्टं धर्मेण योजयेत ॥ १६॥

## इह हि मन्दमुपैति जाह्नवी।

सगरसन्ततितारणेच्छया प्रचलितातिजवेन हिमाचलात् ।
इह हि मन्दमुपैति सरस्वतीयमुनयोर्विरहादिव जाह्नवी ॥ १७॥

## इहैव तैर्जितः सर्गः ।

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १८॥

—भगवद्गीता ।

### इहैव फलमश्नुते ।

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते ॥ १६॥

—विष्णुशर्मा—हितोपदेशः ।

---

## ई

### ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभक्षकः ।

### ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ १॥

—भगवद्गीता ।

### ईश्वराः पिशुनाञ्शश्वद्बिभ्रतीति ।

ईश्वराः पिशुनाञ्शश्वद्बिभ्रतीति किमद्भुतम् ।
प्रायो निधय एवाहीन्द्विजिह्वान्दधतेतराम् ॥ २॥

---

## उ

### उचितमनुचितं वा वेत्ति कः पण्डितोऽपि ।

किमु कुवलयनेत्राः सन्ति नो नाकनार्य—
स्त्रिदशपतिरहल्यां तापसीं यत्सिषेवे ।
हृदयतृणकुटीरे दह्यमाने स्मराग्ना—
वुचितमनुचितं वा वेत्ति कः पण्डितोऽपि ॥ १॥

—कालिदास—द्वात्रिंशत्पुत्तलिका

## उत्तमा आत्मना ख्याताः ।

उत्तमा आत्मना ख्याताः पित्रा ख्याताश्च मध्यमाः ।
मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥२॥

## उत्तमा मानसी पूजा ।

उत्तमा मानसी पूजा मध्यमा ध्यानधारणे ।
अधमा जपयज्ञाश्च बाह्यपूजाधमाधमाः ॥३॥

## उत्तमे तु क्षणं कोपः ।

उत्तमे तु क्षणं कोपो मध्यमे घटिकाद्वयम् ।
अधमे स्यादहोरात्रं चाण्डाले मरणान्तिकः ॥४॥

## उत्तमोऽप्यधमस्य स्याद्याञ्चानम्रकरः क्वचित् ।

उत्तमोऽप्यधमस्य स्याद्याञ्चानम्रकरः क्वचित् ।
कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम् ॥५॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## उत्तमं—मध्यमं—कनिष्ठं—अधमाधमम् ।

उत्तमं स्वार्जितं भुक्तं मध्यमं पितुरर्जितम् ।
कनिष्ठं भ्रातृवित्तञ्च स्त्रीवित्तमधमाधमम् ॥६॥

## उत्तीर्णे च परे पारे नौकायाः किं प्रयोजनम् ।

कार्यार्थी भजते लोके यावत्कार्यं न सिध्यति ।
उत्तीर्णे च परे पारे नौकायाः किं प्रयोजनम् (क) ॥७॥

---

(क) पाठान्तरम्—'नौकां वै भजते तावद्यात्पारं न गच्छति ।
उत्तीर्णे तु परे पारे नौकायाः किं प्रयोजनम्' ॥

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव (क) ॥८॥

उत्थायोत्थाय बोद्धव्यम् ।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥९॥

—विष्णुशर्मा—हितोपदेशः ।

उत्सवान्ते च पारणम् ।

तिथ्यन्ते वाथ भान्ते वा उत्सवान्ते च पारणम् ।
कुर्यात्कृष्णार्चनान्ते वा न कुर्यान्निशि पारणम् ॥१०॥

उदरनिमित्तं बहुकृतवेषः ।

जटिलो मुण्डी लुञ्चितकेशः काषायम्बरबहुकृतवेषः ।
पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं बहुकृतवेषः ॥११॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

उदारचरितानान्तु वसुधैव कुटुम्बकम् ।

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥१२॥

—विष्णुशर्मा—हितोपदेशः ।

उदारस्य तृणं वित्तम् ।

---

(क) पाठान्तरम्—'उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः ।
बाल्ये वैधव्यदग्धानां कुलस्त्रीणां कुचाविव' ॥

## उद्दीप्ते भवने तु कूपखननम् ।

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
उद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ १३॥

—भर्तृहरि—वैराग्यशतकम् ।

## उदेतु मे त्वत्कृपया विशोका सत्त्ववृत्तिः ।

प्रसादनीः शीलयतश्चतस्रो
मैत्रादिरूपा हृदि भावनास्ताः ।
उदेतु मे त्वत्कृपया विशोका
ज्योतिष्मती केशव ! सत्त्ववृत्तिः (क) ॥ १४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) हे कृष्ण ! चित्त प्रसादनकारिणी चारों भावनाओं की साधना करते हुए आप की कृपा से वही शोकरहित ज्योतिर्मय स्थायी सात्विक भाव मेरी अन्तरात्मा के बीच में उदय हो। योगशास्त्रकारों ने मैत्री, करुणा, मुदिता और उपेक्षा इन चार प्रकार की भावनाओं का उल्लेख किया है। (१) मैत्री—सर्वभूतों से मित्रता, अर्थात् समभाव से सभों की हित कामना और सब के सुख में आनन्द अनुभव करना; (२) करुणा—दुःखित प्राणियों के दुःखमोचन के निमित्त सदा यत्न करना; (३) मुदिता—पुण्यशील मनुष्यों के पुण्यकर्मों का अन्तःकरण से अनुमोदन करना; (४) उपेक्षा—पापकर्मों का अनुमोदन न करना। यही चारों भावनाएँ 'चित्तप्रसादनी' हैं, अर्थात् मन के सब मालिन्य को दूर कर मन को सम्पूर्णरूप से निर्मल करने वाली हैं। ऐकान्तिक भाव से प्रतिनियत इन चारों भावनाओं के अभ्यास से अन्तरात्मा निर्मल हो कर एक अपूर्व शान्तिमयी अवस्था को प्राप्त होती है। उसी अवस्था का नाम सात्विक भाव है। उसी अवस्था के प्राप्त होने से मनुष्य काम, क्रोध, लोभ, मोह इत्यादि राजसिक और तामसिक विकारों से विमुक्त हो विशोक होता है, अर्थात् सब शोकों से मुक्ति पाता है। इसी कारण इस सात्विक भाव को ज्योतिर्मय कहते हैं। स्वच्छ मणि जैसे सूर्यरश्मि के संयोग से प्रभायुक्त होता है, उसी प्रकार निर्मल सात्विक भाव भी दिव्य ब्रह्मलोक से अपूर्व ज्योति धारण करता है।

—ताराकुमार।

तथाहि पातञ्जलदर्शने—
'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्त-प्रसादनम्'।

—योगपादः—सू० ३३।

## उद्धरेदात्मनाऽऽत्मानम् ।

उद्धरेदात्मनाऽऽत्मानं मग्नं संसारवारिधौ ।
योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया (क) ॥ १५॥

—शङ्कराचार्य—विवेकचूड़ामणिः ।

## उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।

दूतो म्लेच्छोऽप्यवध्यः स्याद्राज्ञा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥ १६॥

—विष्णुशर्मा—हितोपदेशः ।

## उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ १७॥

—नारायणपण्डित—हितोपदेशः ।

## उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः ।

## उद्योगे नास्ति दारिद्र्यम् ।

उद्योगे नास्ति दारिद्र्यं (ख) जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ १८॥

## उद्योगो नरलक्षणम् ।

अश्वस्य लक्षणं वेगो मदो मातङ्गलक्षणम् ।
चातुर्यं लक्षणं नार्या उद्योगो नरलक्षणम् ॥ १९॥

---

(क) दृश्यताम्—'आत्मैव ह्यात्मनो बन्धुः' इति।
(ख) 'पठतो नास्ति मूर्खत्वम्' इति पाठान्तरम् ।

## उद्योगः खलु कर्त्तव्यः ।

उद्योगः खलु कर्त्तव्यः फलं मार्जारवद्भवेत् ।
जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥२०॥

## उद्वेजयति दरिद्रान् ।

उद्वेजयति दरिद्रान्परमुद्रागणनझणत्कारः ।
निजपतिरतिमिलितायाः कङ्कणझणत्कार इव जारम् ॥२१॥

## उन्मत्तभूतञ्जगत् ।

आदित्यस्य गतागतैरहरहः संक्षीयते जीवनं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतञ्जगत्(क) ॥२२॥

—भर्तृहरि—वैराग्यशतकम् ।

## उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।

## उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।

पयः पानं भुजङ्गानां केवलं विषवर्धनम् ।
उपदेशो हि मूर्खानां प्रकोपाय न शान्तये (ख) ॥२३॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) पाठान्तरम्—'आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारै र्बहुकार्यकारणशतैः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजरावियोगमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमोदमदिरामुन्मत्तभूतञ्जगत्' ॥

—शान्तिशतकम् ।

प्रमादमदिरां=अनवधानसुरां ।

(ख) 'उपकारोऽपिनीचानामपकारो हि जायते' इति पाठान्तरम् ।

## उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।

उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तटाकोदरसंस्थानां परीवाह इवाम्भसाम् ॥२४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## उपाधित्रितयादन्यमात्मानमवधारयेत ।

दृश्यताम्—'अनाद्यविद्या निर्वाच्या' इति ।

## उपानहा वक्त्रभङ्गः ।

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया ।
उपानहा वक्त्रभङ्गो दूरतो वा विसर्जनम् ॥२५॥

## उपासकानां कार्यार्थे ब्रह्मणो रूपकल्पना ।

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थे ब्रह्मणो रूपकल्पना ॥२६॥
रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादिकल्पना ।
द्विचत्वारिषडष्टासां दश द्वादश षोडशः ॥२७॥
अष्टादशापि कथिता हस्ताः शङ्खादिभिश्शताः ।
सहस्रान्तास्तथा तासां वर्णवाहनकल्पनाः ॥२८॥
शक्तिसेना कल्पना च ब्रह्मण्येवं हि पञ्चधा ।
कल्पितस्य शरीरस्य तस्य सेनादिकल्पना ॥२९॥

—रामतापनीयोपनिषद् ।

## उपोषितस्य व्याघ्रस्य पारणं पशुमारणम् ।

दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् ।
उपोषितस्य व्याघ्रस्य पारणं पशुमारणम् ॥३०॥

## उभयमेतदुपैत्वथवा द्वयम् ।

वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिवा ।
उभयमेतदुपैत्वथवा द्वयं प्रियजनेन न यत्र समागमः ॥३१॥

—अमरुशतकम् ।

---

# ऊ

## ऊर्जितं सज्जनं दृष्ट्वा ।

ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः ।
कवलीकुरुते स्वस्थं विधुं दिवि विधुन्तुदः ॥१॥

—कुसुमदेव—दृष्टान्तशतकम ।

## ऊर्णा वातान्न शुध्यति ।

रेतःस्पर्शाच्छवस्पर्शात्स्पर्शान्मूत्रपुरीषयोः ।
रजस्वलादिसंस्पर्शादूर्णा वातान्न शुध्यति ॥२॥

## ऊर्णा वातेन शुध्यति ।

कार्पासं कटिनिर्मुक्तं कौशेयं भोजनावधि (क) ।
ऊर्णवस्त्रं सदा शुद्धं ऊर्णा वातेन शुध्यति (ख) ॥३॥

## ऊर्ध्वमूलमधःशाखम् ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥४॥

---

(क) 'भोजने घृतम्' इति पाठान्तरम् ।
(ख) दृश्यताम्—'झटित्येव विशुध्यति' इति ।

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।
अधश्चमूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥५॥

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ॥६॥

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्त्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी (क) ॥७॥

—भगवद्‌गीता ।

---

(क) इन कई श्लोकों का भावार्थ यह है—

जिस का मूल ऊपर की ओर है और जिसकी शाखाएँ नीचे की ओर हैं और जिसके पत्ते हैं, ऐसे अविनाशी अश्वत्थ वृक्ष का चतुर लोगों ने वर्णन किया है। इसे जो जानते हैं वह वेद के जानने वाले ज्ञानी हैं।

'श्वः' का अर्थ आनेवाला कल है। इस कारण अश्वत्थ का अर्थ कल तक टिकने वाला क्षणिक संसार है। संसार का प्रतिक्षण रूपान्तर हुआ करता है, इससे वह 'अश्वत्थ' है। परन्तु ऐसी स्थिति में वह रहने वाला है और उसका मूल ऊर्ध्व अर्थात् ईश्वर है इस कारण वह अविनाशी भी है। उस में वेद की अर्थात् धर्म के शुद्धज्ञानरूपी पत्तियाँ न हों तो वह शोभा नहीं दे सकता है। इस प्रकार के संसार का यथार्थ ज्ञान जिसे है और जो धर्म को जानने वाला है वही ज्ञानी है।

गुणों के स्पर्श द्वारा बढ़ी हुई और विषयरूपी कोपलों वाली उस अश्वत्थ की शाखाएँ नीचे ऊपर फैली हुई हैं, और कर्मों का बन्धन करने वाली उसकी जड़ें मनुष्य लोक में फैली हुई हैं।

यह संसारवृक्ष का वर्णन अज्ञानी की दृष्टि से है। वह ऊँचे अर्थात् ईश्वर में रहने वाले मूल को नहीं देखता है, परन्तु विषयों की रमणीयता पर मुग्ध होकर, तीनों गुणों के द्वारा वृक्ष का पोषण करता है और मनुष्य लोक में कर्मपाशों के द्वारा बँधा रहता है।

उसका यथार्थ स्वरूप देखने में नहीं आता है, उसका अन्त नहीं है, आदि नहीं है, उसकी नींव नहीं है। गहराई तक गई हुई जड़ों वाले इस अश्वत्थ वृक्ष को असंगरूपी बलवान् शस्त्र के द्वारा काट कर मनुष्य यह प्रार्थना करे—'जिसने सनातन प्रवृत्ति—माया—को फैलाया है उस आदि पुरुष के मैं शरण जाता हूँ'—और उस पद को खोजें जिसे पाने वाले को पुनः जन्म मरण के चक्कर में पड़ना नहीं पड़ता है।

'असंग' अर्थात् असहयोग, वैराग्य। जब तक मनुष्य विषयों से असहयोग न करेगा, उनके प्रलोभनों से दूर न रहेगा, तब तक वह उनमें फँसा ही रहेगा। तात्पर्य यह है कि विषयों के साथ खेल खेलना और उनमें अनासक्त रहना असम्भव है।

महात्मा गान्धी—अनासक्तियोग।

## ऊर्ध्वमूलोऽवाक्शाखः ।

ऊर्ध्वमूलोऽवाक्शाखः एषोऽश्वत्थः सनातनः
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे
तदु नात्येति कश्चन । एतद्वै तत् (क) ॥८॥

—कठोपनिषद् ।

## ऊर्ध्वं गच्छन्ति सत्त्वस्थाः ।

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥९॥

—भगवद्गीता ।

---

तथाहि महाभारते ब्रह्मवृक्षस्य वर्णनम्—
'अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटपः इन्द्रियान्तरकोटरः ॥
महाभूतविशाखश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एनं छित्वा च भित्वा च तत्त्वज्ञानासिना बुधः ॥
हित्वा सङ्गमयान् पाशान् मृत्युजन्मजरोदयान् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥

Its English translation as quoted in Tilak's *Gita Rahasya* is as given below :—

"The Imperceptible (Matter) is its seed, Reason (*mahân*) is its trunk, Inviduation (*ahamkâra*) is its principle foliage, the Mind and the ten organs are the hollows inside the trunk, the (subtle) primordial elements (the five *tanmâtras*) are its five large branches, and the Visesas or the five Gross primordial elements are its sub-branches, and it is always covered by leaves, flowers, and auspicious and inauspicious fruit, and is the fundamental support of all living things; such is the ancient gigantic Brahmavriksha. By cutting it with the philosophical sword and chopping it up into bits, a scient should destroy the bonds of attachment (*samga*) which cause life, old age, and death and should abandon the feeling of mine-ness and individuality. In this way alone can he be released."

(क) 'ऊर्ध्वमूल' और विष्णु से उत्पन्न और निम्नगामी शाखायुक्त यह 'अश्वत्थ' अर्थात् संसारवृक्ष चिरन्तन है। इस संसारवृक्ष का जो मूल है वही उज्ज्वल, वही ब्रह्म, वही अमृतस्वरूप कहलाता है। पृथिव्यादि समस्त लोक उसके आश्रित हैं। कोई उसे अतिक्रम नहीं कर सकता है। यह वही आत्मा है।

ऊर्ध्वं वहति कण्टकम् ।

विषभारसहस्रेण गर्वं नायाति वासुकिः ।
वृश्चिको विन्दुमात्रेण ऊर्ध्वं वहति कण्टकम् ॥ १० ॥

---

## ऋ

ऋणकर्त्ता पिता शत्रुः ।

ऋणकर्त्ता पिता शत्रुर्माता च व्यभिचारिणी ।
भार्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ १ ॥

—चाणक्यशतकम् ।

ऋणानुबन्धरूपेण दातुरुत्पद्यते मतिः ।

अपात्रे पात्रताबुद्धिः पात्रे बुद्धिरपात्रता ।
ऋणानुबन्धरूपेण दातुरुत्पद्यते मतिः ॥ २ ॥

ऋणानुबन्धरूपेण पशुपत्नीसुतालयाः ।

ऋणानुबन्धरूपेण पशुपत्नीसुतालयाः ।
ऋणक्षये विनश्यन्ति ऋणादौ प्रभवन्ति च ॥ ३ ॥

ऋणशेषोऽग्निशेषश्च ।

ऋणं कृत्वा घृतं पिबेत् ।

यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः (क) ॥ ४ ॥

—चार्वाक ।

---

(क) पाठान्तरम्—'भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।
तस्मात्सर्वप्रयत्नेन ऋणं कृत्वा घृतं पिबेत्' ॥

### ऋद्धा सिद्धिः चमत्कारयत्येव तावत् ।

ऋद्धा सिद्धिर्व्रजविजयिता सत्यधर्मा समाधि—
र्ब्रह्मानन्दो गुरुरपि चमत्कारयत्येव तावत् ।
यावत्प्रेम्णां मधुरिपुवशीकारसिद्धौषधीनां
गन्धोऽप्यन्तःकरणसरणीपान्थतां न प्रयाति ॥ ५॥

—चैतन्यचरितामृते ललितमाधवम् ।

---

## ए

### एक एव न भुञ्जीत ।

एक एव न भुञ्जीत य इच्छेत्सिद्धिमात्मनः ।
द्वित्रैर्वा बहुभिः सार्धं भोजनं कारयेन्नरः ॥ १ ॥

अभीष्टफलसंसिद्धिस्तुष्टिः काम्यं सुसम्पदः ।
द्वित्रैर्वा बहुभिः सार्धं भोजने तु प्रजायते ॥ २ ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### एक एव सुहृद्धर्मः ।

एक एव सुहृद्धर्मो निधनेप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ३ ॥

—विष्णुशर्मा—हितोपदेशः ।

### एकचक्षुर्न काकोऽयम् ।

एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः ।
क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः (क) ॥ ४ ॥

---

(क) अत्रोत्तरं सूचिका ।

## एकतः—एकतः—एकतः ।

एकतः क्रतवः सर्वे सहस्रवरदक्षिणाः ।
एकतो भयभीतानां प्राणिनां प्राणरक्षणम् ॥ ५ ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

एकतः सकला नीतिरेकतो मधुरं वचः ।
मधुरं वचनं यस्य तेन क्रीतमिदं जगत् ॥ ६ ॥
एकतः सकला वेदा ब्रह्मचर्यं तथैकतः ।
एकतः सर्वपापानि मद्यपानं तथैकतः ॥ ७ ॥

## एकतः सकला वेदा ब्रह्मचर्यं तथैकतः ।

दृश्यताम्—'एकतः—एकतः—एकतः' इति ।

## एकमेव महौषधम् ।

शोकशल्यप्रहाराणां गाढहृन्मर्मभेदिनाम् ।
भवेऽस्मिन्भगवद्भक्तिरेकमेव महौषधम् ॥ ८ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## एकश्चन्द्रो जगच्चक्षुः ।

एकोऽपि गुणवान्पुत्रो निर्गुणैः किं शतैरपि ।
एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् (क) ॥ ९ ॥

## एकस्य क्षणिका प्रीतिः ।

योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ १० ॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) पाठान्तरम्—'वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च' ॥

—चाणक्यशतकम् ।

## एका क्रिया द्व्यर्थकरी प्रसिद्धा ।

एकोबटुर्दर्भकुशाग्रपाणिर्वने वनैः (क) सिञ्चति बालचूतान् ।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रियाद्व्यर्थकरी प्रसिद्धा ॥ ११॥

## एका भार्या सुन्दरी वा दरी वा ।

## एकैकव्यसनाहता इति नराः ।

द्यूताद्धर्मसुतः पलादिह बको मद्याद्यदोर्नन्दना—
श्चौरः (ख) कामवशान्मृगान्तकरणात्स ब्रह्मदत्तो नृपः ।
चौरत्वाच्छिवभूतिरन्यवनितासङ्गाद्दशास्यो हठा—
देकैकव्यसनाहता इति नराः सर्वैर्न को नश्यति ॥ १२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## एको गुणः खलु निहन्ति समस्तदोषान् ।

व्यालाश्रितापि विफलापि सकण्टकापि
वक्रापि पङ्किलभवापि दुरासदापि ।
गन्धेन बन्धुरसि केतकि ! सर्वजन्तो—
रेको गुणः खलु निहन्ति समस्तदोषान् ॥ १३॥

## एको देवः केशवो वा शिवो वा ।

एको देवः केशवो वा शिवो वा एकं मित्रं भूपतिर्वा यतिर्वा ।
एको वासः पत्तने वा वने वा एका भार्या सुन्दरी वा दरी वा ॥ १४॥

—भर्तृहरि—नीतिशतकम् ।

## एको देवः सर्वभूतेषु गूढः ।

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ १५॥

—श्वेताश्वतरोपनिषद् ।

---

(क) वनैः=जलैः । (ख) चौरः=सुन्दरः ।

## एको धर्मः परं श्रेयः ।

एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥१६॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## एकं मित्रं भूपतिर्वा यतिर्वा ।

द्रश्यताम्—'एको देवः केशवो वा शिवो वा' इति ।

## एकं सांख्यं च योगं च यः पश्यति स पश्यति ।

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥१७॥

—भगवद्गीता ।

## एकं हन्यान्न वा हन्यात् ।

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राज्यं सराजकम् ॥१८॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## एकः पथा न गन्तव्यम् ।

एकः पथा न गन्तव्यं न सुप्तिं बाह्यमन्दिरे ।
जनवाक्यं तु कर्त्तव्यं स्त्रीणामालोचनं विना ॥१९॥

## एकः प्रमादी ।

## एकः स्वादु न भुञ्जीत ।

एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥२०॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## एत एव सतां दमाः ।

विद्यामदो धनमदस्तृतीयोभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥२१॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## एतत्त्रयं जगति पुण्यकृतो लभन्ते ।

प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्त्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समं प्रयाति
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥२२॥
—भर्तृहरि—नीतिशतकम् ।

## एतत्पण्डितलक्षणम् ।

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥२३॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## एतद्धि रामायणम् ।

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
बालेर्निग्रहणं समुद्रतरणं लङ्कापुरीदाहनं
पश्चाद्रावणकुम्भकर्णहननम् एतद्धि रामायणम् ॥२४॥

## एतद्ध्येवाक्षरं ब्रह्म ।

## एतद्भागवतं पुराणकथितम् ।

आदौ देवकिदेवगर्भजननं गोपीगृहे वर्धनं
मायापूतनजीवितापहरणं गोवर्द्धनोद्धारणम् ।
कंसच्छेदनकौरवादिहननं कुन्तीसुतापालनम्
एतद्भागवतं पुराणकथितं श्रीकृष्णलीलामृतम् ॥२५॥

## एतन्महाभारतम् ।

आदौ पाण्डवधार्त्तराष्ट्रजननं लाक्षागृहे दाहनं
द्यूतश्रीहरणं वने विचरणं मत्स्यालये वर्धनम् ।
लीलागोग्रहणं रणेऽवतरणं सन्धिक्रियावर्धनं
पश्चाद्भीष्मपितामहादिहननञ्चैतन्महाभारतम् ॥२६॥

## एतन्मांसवसादिविकारम् ।

## एतत्सतां चेष्टितम् ।

तृष्णां छिन्धि भज क्षमां जहि मदं पापे मतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान्गुणा—
न्कीर्त्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम् ॥२७॥

—भर्तृहरि—नीतिशतकम् ।

## एतस्य को विशेषस्तु ।

कल्पवृक्षोऽपि कालेन यदिस्यात्फलदायकः ।
एतस्य को विशेषस्तु वन्यैरन्यैर्महीरुहैः (क) ॥२८॥

## एतानि मानवान् घ्नन्ति ।

आत्मनोऽतिवादश्च तथाऽत्यागो नराधिप !
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥२९॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) पाठान्तरम्—'कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः' ॥

## एतान्यपि सतां गेहे।

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे (क) नोच्छिद्यन्ते कदाचन ॥३०॥
—विष्णुशर्मा—हितोपदेशः।

## एते गुणा वैरकरा भवन्ति।

मांसं मृगाणां दशनौ गजानां मृगद्विषां चर्म फलं द्रुमाणाम्।
स्त्रीणां सुरूपं च नृणां हिरण्यमेते गुणा वैरकरा भवन्ति ॥३१॥

## एते दर्शन हेतवः।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येयमेते दर्शनहेतवः ॥३२॥

## एतेनैव विजानाति।

येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान्।
एतेनैव विजानाति किमत्र परिशिष्यते। एतद्वैतत् ॥३३॥
—कठोपनिषद्।

## एते वै सप्तदोषाः स्युः।

एते वै सप्तदोषाः स्युः सदा विद्यार्थिनो मतः।
आलस्यं मदमोहौ च चापलं गोष्ठिरेव च।
स्तब्धता चाभिमानित्वं तथात्यागित्वमेव च ॥३४॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि।

## एरण्डोऽपि द्रुमायते।

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।
निरस्तपादपे देश एरण्डोऽपि द्रुमायते ॥३५॥
—विष्णुशर्मा—हितोपदेशः।

---

(क) 'सतामेतानि गेहेषु' इति पाठान्तरम् महाभारते उद्योगपर्वणि।

अपात्रं पात्रतां याति यत्र पात्रं न विद्यते ।
निरस्तपादपे देश एरण्डोऽपि द्रुमायते ॥३६॥

## एवमात्मकृतं कर्म ।

यथा मृत्पिण्डतः कर्त्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥३७॥

—नारायण पण्डित—हितोपदेशः ।

## एष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ।

कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय—
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥३८॥

## एष धर्मः सनातनः ।

दृश्यताम्—'आतुरे नियमो नास्ति' इति ।

## एष राजपुरोहितः ।

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादपरो नित्यमेष राजपुरोहितः ॥३९॥

—चाणक्यशतकम् ।

## एष वैद्यो विधीयते ।

आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ।
आर्यशीलगुणोपेत एष वैद्यो विधीयते ॥४०॥

—चाणक्यशतकम् ।

## एषा गता न पुनरेष्यति जीवितेश ।

त्वञ्चागमिष्यसि भविष्यति सङ्गमो नौ
सम्पत्स्यते च ननु मे मनसोऽभिलाषः ।
विद्युद्विलासचपला नवयौवनश्री—
रेषा गता न पुनरेष्यति जीवितेश ! ॥४१॥

## एषा भविष्यति विनिद्रसरोरुहाक्षी ।

एषा भविष्यति विनिद्रसरोरुहाक्षी
कामस्य कापि वनिता तनुजानुजा वा ।
यः पश्यति क्षणमिमां कथमन्यथासौ
कोपात्तमस्तकरुणं तरुणं निहन्ति ॥४२॥

## एहि गच्छ पतोत्तिष्ठ ।

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥४३॥

—विष्णुशर्मा—हितोपदेशः ।

---

# ऐ

## ऐतरयेस्तथा दशः ।

ईश केन कठ प्रश्न मुण्ड माण्डुक्य तित्तिरिः ।
छान्दोग्यं बृहदारण्यमैतरेयस्तथा दशः ॥१॥

## ऐश्वर्याद्भ्रंश्यते हि सः ।

अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रंश्यते हि सः ॥२॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

# ओ

## ओतःप्रोतमिदं यस्मिन् ।

नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
ओतःप्रोतमिदं यस्मिन्तन्तुष्वङ्ग यथा पटः ॥ १ ॥

—श्रीमद्भागवतम् ।

## ओमित्येकाक्षरं ब्रह्म ।

## ओमित्येतदक्षरमिदँ सर्वम् ।

ओमित्येतदक्षरमिदँ सर्वं तस्योपव्याख्यानं
भूतं भवद्भविष्यदिति सर्वमोङ्कार एव ।
यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव (क) ॥ २ ॥

—माण्डूकोपनिषद् ।

## ओं क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर ।

## ओं तत्सदिति निर्देशः ।

ओं तत्सदिति निर्देशः ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ ३ ॥

—भगवद्गीता ।

## ओंकारमूर्त्तिस्त्वमनन्त विष्णो ।

ओंकारमूर्त्तिस्त्वमनन्त विष्णो !
विभर्षि मूर्त्तित्रितयेन विश्वम् ।
त्वां योगिनो ऽनाहतचक्रमध्ये (ख)
नित्यं विचिन्वन्ति समाधियोगात् ॥ ४ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) तथाहि श्रुतौ—'पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति' ॥
यत् च अन्यत् त्रिकालातीतं (प्रकृत्यादि) तत् अपि ओंकार एव ।
(ख) अनाहतचक्र—चक्राणां विस्तीर्णवर्णनं 'यः पश्यति स वैष्णवः' इति श्लोके दृश्यताम् ।

## औ

### औदार्यं सहजं तथा ।

चम्पकेषु यथा गन्धः कान्तिर्मुक्ताफलेषु च ।
यथेक्षुदण्डे माधुर्यमौदार्यं सहजं तथा ॥१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### और्वा इवातिलुब्धा भवन्ति ।

और्वा (क) इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः ।
तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥२॥

### औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ।

शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे ।
औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥३॥

---

## क

### क इत्था वेद यत्र सः ।

यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनम् ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः (ख) ॥१॥

—कठोपनिषद् ।

---

(क) और्वाः=वडवानलाः ।

(ख) ब्रह्म (ब्राह्मणः) क्षत्रं च उभे यस्य (आत्मनः) ओदनम् (अन्नम्) भवतः, मृत्युः यस्य उपसेचनम् (दुग्धघृतादि उपकरणम्), सः(आत्मा) यत्र (अस्ति तत्) कः (पुरुषः) इत्था (एवम्) इति वेद (जानाति) ?

भावार्थ सम्भवतः यह है कि जो मृत्यु की सहायता से ब्राह्मण और क्षत्रिय इन दोनों श्रेष्ठ जातियों को विनाश करता है और मृत्यु को भी उन्हीं के साथ ग्रास करता है वही आत्मा जहाँ है उसे कौन 'वह इस प्रकार का है' जानता है ?

## कण्टकेनेव कण्टकम् ।

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥२॥

—चाणक्यशतकम् ।

## कण्ठे मुक्तावली यस्य ।

## कथमत्यन्तगता न मां दहेः ।

शशिनं पुनरेति शर्वरी दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ कथमत्यन्तगता न मां दहेः ॥३॥

—कालिदास—रघुवंशम् ।

## कथमर्थाः सुखावहाः ।

जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु ।
मोहयन्ति च सम्पत्तौ कथमर्थाः सुखावहाः ॥४॥

—विष्णुशर्मा—हितोपदेशः ।

## कथमहो समता मम तापने ।

पिक ! विधुस्तव हन्ति समं तम—
स्त्वमपि चन्द्रविरोधिकुहूरवः ।
तदुभयोरनिशं विरोधिता
कथमहो समता मम तापने ॥५॥

## कथमिन्दीवरद्वयम् ।

कुसुमे कुसुमोत्पत्तिः (क) श्रूयते न च दृश्यते ।
बाले ! तव मुखाम्भोजे कथमिन्दीवरद्वयम् ॥६॥

—कालिदास—शृङ्गारतिलकम् ।

---

(क) 'कमले कमलोत्पत्तिः' इति पाठान्तरम् ।

## कथय कथं न भवत्युपहासः ।

यस्तोषं न गतः कमलेषु मल्लीचम्पकबकुलकुलेषु ।
तस्यालेर्यदि निम्बे वासः कथय कथं न भवत्युपहासः ॥७॥

## कथं जनस्तं परितोषयिष्यति ।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि मनस्तु यस्य वै
कथं जनस्तं परितोषयिष्यति ॥८॥

विष्णुशर्मा—हितोपदेशः ।

## कथं नु विरहः सोढव्य इत्थं मया ।

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥९॥

—मयूरसूनोः शङ्कुकस्य ।

## कथं पुत्रः सुखावहः ।

जायमानो हरेद्दारान्वर्धमानो हरेद्धनम् ।
म्रियमाणो हरेत्प्राणान्कथं पुत्रः सुखावहः ॥१०॥

## कथं वा न्याय्या ते प्रथयितुमुदासीनपदवीम् ।

गृहान्तः खेलन्त्यो निजसहजबाल्यस्य बलना—
दभद्रं भद्रं वा किमपि नहि जानीमहि मनाक् ।
वयं नेतुं युक्ताः कथमशरणं कामपि दशां
कथं वा न्याय्या ते प्रथयितुमुदासीनपदवीम् (क) ॥११॥

—श्रीरूपगोस्वामी—विदग्धमाधवम् ।

---

(क) कृष्णं प्रति राधिकाया उक्तिरियम् ।

## कथं स्याद्देहकः पुमान् ।

यस्मात्परमिति श्रुत्या तया पुरुषलक्षणम् ।
विनिर्णीतं विमूढेन कथं स्याद्देहकः पुमान् (क) ॥ १२॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## कदा कान्तागारे निमिषमिव नेष्यामि रजनीम् ।

कदा कान्तागारे परिमलमिलत्पुष्पशयने
शयानः कान्तायाः कुचयुगमहं वक्षसि वहन् ।
अये कान्ते ! मुग्धे ! कुटिलनयने ! चन्द्रवदने !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि रजनीम् ॥ १३॥

—कालिदास—शृङ्गाररसाष्टकम् ।

## कदा कालिन्दीये निमिषमिव नेष्यामि दिवसान् ।

कदा कालिन्दीये हरिचरणमुद्राङ्कितटे
स्मरन्गोपीनाथं कमलनयनं सस्मितमुखम् ।
अहो पूर्णानन्दाम्बुजवदन ! भक्तैकललन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १४॥

—श्रीकृष्णलहरी ।

## कदा त्वां पुर एव पश्यन् तनुमुत्सृजामि ।

रामं यथाग्रे शरभङ्गयोगी
पश्यंस्तनुं होमशुचौ जुहाव ।
तथा कदा त्वां पुर एव पश्यन्
हरे ! चिताग्नौ तनुमुत्सृजामि (ख) ॥ १५॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) तथाहि श्रुतौ—'यस्मात्परं नापरमस्ति किञ्चित्, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' ।

(ख) जब रामचन्द्र शरभङ्गमुनि के आश्रम में पहुँचे, तब शरभङ्गमुनि ने राम का दर्शन पाकर अपने को पूर्णकाम जान अपने सन्मुख उसी राममूर्ति को देखते हुए होमानल में अपने शरीर को आहुति कर दिया—'ततोऽग्निं स समाधाय हुत्वा चाज्येन मन्त्रवत् ।
शरभङ्गो महातेजाः प्रविवेश हुताशनम्' ॥—रामायणम् ।

## कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशम् ।

कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशं
अहो विष्णो ! राधारसिक ! मुरलीमोहन ! विभो !
दयां कर्त्तुं दीने परमकरुणाब्धे ! समुचितं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥१६॥

—श्रीकृष्णलहरी ।

## कदा निकुञ्जकोटरे वसन्सदा सुखीभवाम्यहम् ।

कदा निलिम्पनिर्झरीनिकुञ्जकोटरे वस—
न्विमुक्तदुर्मतिः सदा शिरस्थमञ्जलिं वहन् ।
विलोललोललोचनाललामभाललग्नकं
शिवेति मन्त्रमुच्चरन्सदा सुखी भवाम्यहम् ॥१७॥

—रावणकृतशिवताण्डवस्तोत्रम् ।

## कदा भिक्षाभक्तैः शरीरं मे स्थास्यति ।

कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम् ।
कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥१८॥

## कदा यामि तपोवनम् ।

शिवार्पितमनः प्राणः शिवेति मुहुरुद्गिरन् ।
शिवयोगनिमग्नात्मा कदा यामि तपोवनम् ॥१९॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## कदा वा साकेते निमिषमिव नेष्यामि दिवसान् ।

कदा वा साकेते बिमलसरयूतीरपुलिने
चरन्तं श्रीरामं जनकतनयालक्ष्मणयुतम् ।
अये राम ! स्वामि नकतनयावल्लभ ! विभो !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥२०॥

कदा वाराणस्यां निमिषमिव नेष्यामि दिवसान् ।

कदा वाराणस्यामरतटिनीरोधसि वस—
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥२१॥

—भर्तृहरि—वैराग्यशतकम् ।

कदा वृन्दारण्ये निमिषमिव नेष्यामि दिवसान् ।

कदा वृन्दारण्ये विमलयमुनातीरपुलिने
चरन्तं गोविन्दं हलधरसुदामादिसहितम् ।
अये कृष्ण ! स्वामिन्मधुरमुरलीवादन ! विभो !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥२२॥

—श्रीकृष्णलहरी ।

कदा शम्भो ! भविष्यामि कर्मनिर्मूलनक्षमः ।

एकाकी निस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो ! भविष्यामि कर्मनिर्मूलनक्षमः ॥२३॥

—भर्तृहरि—वैराग्यशतकम् ।

कदाचित्कान्तारे निमिषमिव नेष्यामि दिवसान् ।

कदाचित्कान्तारे विजयसखमिष्टं नृपसुतं
वदन्तं पार्थेत्यं नृपसुत ! सखे ! बन्धुरिति च ।
भ्रमन्तं विश्रान्तं श्रितमुरसि रम्यं हरिमसुं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥२४॥

—श्रीकृष्णलहरी ।

कदाचित्खेलन्तं निमिषमिव नेष्यामि दिवसान् ।

कदाचित्खेलन्तं व्रजपरिसरे गोपतनयैः
कुतश्चित्संप्राप्तां किमपि भयितां गोपललनाम् ।
अये राधे ! किं वा हरसि रसिके ! कञ्चुकयुगं
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥२५॥

—श्रीकृष्णलहरी ।

## कदाम्यस्य वृन्दावने स्यां कृतार्थः ।

हरे कृष्ण कृष्णेति कृष्णेति मुख्यान्महाश्चर्यनामावलीसिद्धमन्त्रा-
न्कृपामूर्त्तिचैतन्यदेवेन गीतान्कदाम्यस्य वृन्दावने स्यां कृतार्थः ॥२६॥

—वृन्दावनशतकम् ।

## कदाहं वै नेष्याम्यपि युगसहस्रं निमिषवत् ।

सुधाधाराधारे दशशतदलाम्भोजनिलये
निमग्ने मे जीवे विगलितभवाशेषविषयः ।
द्रवीभूतः प्रेम्णा मधुरहरिसंकीर्त्तनरतः
कदाहं वै नेष्याम्यपि युगसहस्रं निमिषवत्(क)॥२७॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) 'दशशतदल चक्र' इत्यादि—इन चक्रों का विस्तारित वर्णन "यः पश्यति स वैष्णवः" इत्यादि श्लोक में देखिये। 'दशशतदल चक्र' अर्थात् ब्रह्मरन्ध्रस्थित सहस्रपत्र नामक चक्र। योगशास्त्रकारों ने मानवदेह में जो षट्चक्र का निर्देश किया है, उन में से एक सहस्र पत्र नामक चक्र ब्रह्मरन्ध्र में स्थित है। यह एक सुधा का आधारस्वरूप है; इस से निरन्तर अमृतरस बहकर समस्त देह को पोषण करता है। जीवात्मा इस चक्र के अमृतप्रवाह में मग्न हो सब कामनाओं से निवृत हो जाता है और तब भगवत्प्रेम में मग्न हो भगवत्संगीत में आसक्त हो जाता है। जीवात्मा जब इस शान्तिमयी अवस्था को प्राप्त होता है, तभी भगवत्संगीत से सिद्धिलाभ करता है। जो मनुष्य भक्तियोग के द्वारा भगवत्संगीत से सिद्धिलाभ करता है वही जीवन्मुक्त है। योगशास्त्रकारों ने कहा है—

'जपकोटिगुणं ध्यानं ध्यानकोटिगुणो लयः।
लयकोटिगुणं गानं गानात्परतरं न हि' ॥

अर्थात्, ध्यान से जप करने का कोटिगुण माहात्म्य है, लय, अर्थात् चित्तवृत्तियों की समाधि से ध्यान करने का कोटिगुण माहात्म्य है, और गान के द्वारा लय का कोटिगुण माहात्म्य है। अतएव गान से श्रेष्ठ और कुछ नहीं है।

अन्यच्च—'गीतविद्याप्रभावेन देवर्षिर्नारदो महान्।
मान्यो वैष्णवलोके वै श्रीशम्भोश्चातिवल्लभः' ॥

दृश्यताम्—'त्यागाच्छान्तिरनन्तरम्' इति।

## कन्दर्पदर्पदलने विरला मनुष्याः ।

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥२८॥

—भर्त्तृहरि—शृङ्गारशतकम् ।

## कन्यापितृत्वं खलु नाम कष्टम् ।

जातेति कन्या महती हि चिन्ता कस्मै प्रदेयेति महान्वितर्कः ।
दत्ता सुखं यास्यति वा न वेति कन्यापितृत्वं खलुनाम कष्टम् (क) ॥२६॥

## कन्यासुरतचातुर्यं जामाता वेत्ति नो पिता ।

## कपित्थं सर्वदा पथ्यम् ।

अभुक्त्वामलकं पथ्यं भुक्त्वा तु बदरीफलम् ।
कपित्थं सर्वदा पथ्यं कदली न कदाचन ॥३०॥

## कपिलानन्तपुण्यदा ।

आश्विने कृष्णपक्षे च षष्ठ्यां भौमोऽथ रोहिणी ।
व्यतीपादस्तदा षष्ठी कपिलानन्तपुण्यदा ॥३१॥

## कमलवनभूषा मधुकरः ।

## कमलिनी मलिनी दयितं विना ।

कमलिनी मलिनी दयितं विना
न सहते सह तेन निषेवितुम् ।
तमधुना मधुना निहितं हृदि
स्मरति सा रतिसारमहर्निशम् (ख) ॥३२॥

—भट्टरुद्रक ।

---

(क) तथाहि कथासरित्सागरे—'कन्या नाम महद्दुःखं धिगहो महतामपि' ।
(ख) दृश्यताम्—'इति विधिर्विदधे रमणीमुखम्' इति ।

## कमलिनी मलिनी रविणा विना ।

कति न सन्ति जना जगतीतले
तदपि तद्विरहाकुलितं मनः ।
कति न सन्ति निशाकरतारकाः
कमलिनी मलिनी रविणा विना (क) ॥३३॥

## करतलगतमपि नश्यति ।

## करा हिमांशोरपि तापयन्ति ।

विज्ञप्तिरेषा मम जीवबन्धो ! तत्रैव नेया दिवसाः कियन्तः ।
सम्प्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥३४॥
नैतत्प्रिये ! चेतसि शङ्कनीयं करा हिमांशोरपि तापयन्ति ।
वियोगतप्तं हृदयं मदीयं तत्र स्थिता त्वं परितापितासि (ख) ॥३५॥

## करिणी चिरेण सूते कलभम् ।

सूते सूकरगृहिणी कति कति पोतान्नु दुर्भगान्झटिति ।
करिणी चिरेण सूते नरपतिकरलालितं कलभम् (ग) ॥३६॥

## करिवर सञ्चर धीरम् ।

करिवर सञ्चर धीरं मा मर्दय मर्मराणि पत्राणि ।
इह पुरतो गिरिकुहरे किमु सुखशायी न गोचरः सिंहः ॥३७॥

## कर्त्तव्यमेव कर्त्तव्यम् ।

कर्त्तव्यमेव कर्त्तव्यं प्राणैः कण्ठगतैरपि ।
अकर्त्तव्यं न कर्त्तव्यं प्राणैः कण्ठगतैरपि ॥३८॥

---

(क) दृश्यताम्—'इति विधिर्विदधे रमणीमुखम्' इति ।
(ख) प्रथमश्लोकः (३४) नायकं प्रति नायिकाया उक्तिः । द्वितीयेन (३५) नायकः तदुत्तरं ददातीति ।
(ग) पाठान्तरम्—'सूते सूकरगृहिणी सुतशतमतिदुर्भगम् ।
करिणी चिराय सूते कमपि महीपाललालितं कलभम्' ॥

## कर्त्तव्यो धर्मसंग्रहः ।

अनित्यानि शरीराणि वैभवं न च शाश्वतम् ।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः ॥३९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## कर्त्तव्यो महदाश्रयः ।

हीनसेवा न कर्त्तव्या कर्त्तव्यो महदाश्रयः ।
पयोऽपि शौण्डिनीहस्ते वारुणीत्यभिधीयते ॥४०॥
—विष्णुशर्मा—हितोपदेशः ।

## कर्त्ता दोषेण लिप्यते ।

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते (क) ॥४१॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## कर्त्ताहमिति मन्यते ।

## कर्म ब्रह्मोद्भवं विद्धि ।

## कर्मणा बध्यते जन्तुः ।

कर्मणा बध्यते जन्तुर्ज्ञानान्मुक्तो भवाद्भवेत् ।
आत्मज्ञानमाश्रयेद्वै अज्ञानं वदतोऽन्यथा ॥४२॥
—शङ्कराचार्य—आत्मज्ञानकथनम् ।

## कर्मणा बाध्यते बुद्धिः ।

कर्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म बाध्यते ।
सुबुद्धिरपि यद्रामो हैमं हरिणमन्वगात् ॥४३॥

---

(क) तथाहि भाषायाम्—'अउर करइ अपराध कोउ अउर पाव फल भोगु।
अति विचित्र भगवंत गति को जग जानइ जोगु'॥

## कर्मणामीदृशी गतिः ।

विपत्तौ किं विषादेन सम्पत्तौ हर्षणेन किम् ।
भवितव्यं भवत्येव कर्मणामीदृशी गतिः ॥४४॥

## कर्मण्येवाधिकारस्ते ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥४५॥

—भगवद्गीता ।

## कर्मणैव हि संसिद्धिम् ।

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥४६॥

—भगवद्गीता ।

## कर्मणो गतिरीदृशी ।

तात वाग्भट्ट ! मा रोदीः कर्मणो गतिरीदृशी ।
दुषधातोरिवास्माकं दोषसम्पत्तये गुणः (क) ॥४७॥

## कर्मदोषाद्दरिद्रता ।

अदाता वंशदोषेण कर्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण (ख) पितृदोषेण मूर्खता ॥४८॥

—चाणक्यशतकम् ।

---

(क) वाग्भट्ट की कन्या परम रूपवती और गुणवती थी। जिस देश में वह रहती थी वहाँ का राजा उसके सौंदर्य को देख और उसके गुणों की विशेषताओं को सुनकर अतिशय मुग्ध हो उसे बलपूर्वक अपने घर ले गया। पित्रालय से जाने के समय अपने पिता को अत्यन्त कातर और रोदनपरायण देख कर उस कन्या की यह उक्ति है।

(ख) मातृदोषेण मातुः गर्भावस्थायां वायुरोगाविर्भावेण इति भावः उन्मादः क्षिप्तता।

## कर्मभिर्वर्णतां गतम् ।

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् (क) ॥४९॥

—महाभारते शान्तिपर्वणि ।

## कर्मानुगो गच्छति जीव एकः ।

धनानि भूमौ पशवश्च गोष्ठे
भार्या गृहद्वारि जनः श्मशाने ।
देहश्चितायां परलोकमार्गे
कर्मानुगो गच्छति जीव एकः (ख) ॥५०॥

## कर्मायत्तं फलं पुंसाम् ।

## कलासीमा काव्यम् ।

## कलौ—कलौ—कलौ ।

कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी ।
कलौ भागीरथी गङ्गा दानं कलियुगे महत् ॥५१॥

—सत्यज्ञानान्दतीर्थ—काशीस्तोत्रम् ।

---

(क) 'कामभोगप्रियस्तीक्ष्णाः क्रोधनः प्रियसाहसाः।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनाः।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजाः वैश्यतां गताः॥
हिंसानृताप्रिया लुब्धाः सर्वकर्मोपजीविनः।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः।
धर्मो यज्ञक्रिया तेषां नित्यं न प्रतिषिध्यते॥
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती।
विहिता ब्रह्मणा पूर्वं लोभात्त्वजानतां गताः॥' —महाभारते शान्तिपर्वणि।

तथाहि भगवद्गीतायाम्—'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्'॥

(ख) दृश्यताम्—'परलोकगतस्य को बन्धुः' इति।

## कलौ कृत्या गृहे गृहे ।

कृते च रेणुका कृत्या त्रेतायां जानकी तथा ।
द्वापरे द्रौपदी कृत्या कलौ कृत्या गृहे गृहे ॥५२॥

## कलौ पञ्च विवर्जयेत् ।

अश्वमेधं गवालम्भं संन्यास पलपैत्रिकम् ।
देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥५३॥

—ब्रह्मवैवर्त्ते—कृष्णजन्मखण्डे ।

## कलौ पाराशरस्मृतिः ।

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखितौ कलौ पाराशरस्मृतिः ॥५४॥

## कलौ वेदान्तिनो भान्ति ।

वागुच्चारोत्सवं मात्रं तत्क्रियां कर्तुमक्षमाः (क) ।
कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥५५॥

## कवयः—कपयः—गवयः ।

विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः ।
कुलजा या सा जाया केवलजाया तु केवलं माया ॥५६॥
अवयः केवलकवयः कीराः स्युः केवलं धीराः ।
वीराः पण्डितकवयस्तानवमन्ता तु केवलं गवयः ॥५७॥

## कवयः किं न पश्यन्ति ।

## कविना विभुना च विभाति सभा ।

## कविः करोति काव्यानि ।

कविः करोति काव्यानि रसं जानन्ति पण्डिताः ।
सुन्दर्या अपि लावण्यं पतिर्जानाति नो पिता (ख) ॥५८॥

---

(क) पाठान्तरम्—'कुशलाः शब्दवार्त्तायां वृत्तिहीनाः सुरागिणः' इति।
(ख) पाठान्तरम्—'कवितारसचातुर्यं रसज्ञो वेत्ति नो कविः।
कन्यासुरतचातुर्यं जामाता वेत्ति नो पिता'॥

## कविः करोति पद्यानि ।

कविः करोति पद्यानि लालयत्युत्तमो जनः ।
तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम् ॥५९॥

## कश्चिन्मां वेत्ति तत्त्वतः ।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥६०॥

—भगवद्गीता ।

## कष्टात्कष्टतरं किम् ।

कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् ।
कष्टात्कष्टतरं किं परगृहवासः परान्नं च ॥६१॥

## कष्टं निर्धनिकस्य जीवितमहो ।

वासश्चर्म विभूषणं शवशिरो भस्माङ्गलेपः सदा !
ह्येको गौः स च लाङ्गलाद्यकुशलः संपत्तिरेतादृशी ।
इत्यालोच्य विमुच्य शङ्करमगाद्रत्नाकरं जाह्नवी
कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥६२॥

## कष्टः खलु पराश्रयः ।

शिरसा धार्यमाणोऽपि सोमः सोमेन शम्भुना ।
तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥६३॥

## कस्तूरीतिलकं तथापि तनुते ।

केयूरं न करे पदे न कटकं मौलौ न माला पुनः
कस्तूरीतिलकं तथापि तनुते संसारसारश्रियम् ।
सर्वाधिक्यमलेखि भालफलके यत्सुभ्रुवो वेधसा
जानीमः किमु तत्र मन्मथमहीपालेन मुद्रा कृता ॥६४॥

## कस्ते स्वरूपं वद वेद कृष्ण ! ।

वसन्विदूरेऽपि वसस्यदूरे जराविहीनोऽसि पुरातनोऽपि ।
दुःखैरधृष्योऽपि दयाश्रयोऽसि कस्ते स्वरूपं वद वेद कृष्ण ! ॥६५॥
अनादिमध्यो जगदादिमध्यो निरन्तकस्त्वं जगदन्तकोऽपि ।
अगम्यरूपोऽपि समाधिगम्यः कस्ते स्वरूपं वद वेद कृष्ण ! ॥६६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## कस्त्वं कोऽहं कुत आयातः ।

कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः ।
इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् ॥६७॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

## कस्त्वां स्तुवीत यदि कालभयं नु न स्यात् ।

सर्वस्वदं बलिमधो नयसिच्छलेन
प्राणाधिकां जनकजां विपिने जहासि ।
उत्पाद्य यादवकुलं स्वयमेव हंसि
कस्त्वां स्तुवीत यदि कालभयं नु न स्यात् ॥६८॥

## कस्मात्कोऽहं किमपि च भवान् ।

कस्मात्कोऽहं किमपि च भवान्कोऽयमत्र प्रपञ्चः
स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् ।
आनन्दाख्यं समरसघने बाह्यमन्तर्विहीने
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः (क) ॥६९॥

—परमहंस शुकदेव—शुकाष्टकम् ।

---

(क) कस्मादिति। कस्मात् जनात् अहं कः उत्पन्न इति शेषः भवान् किमपि च कश्चेत्यर्थः अत्र जगति अयं प्रपञ्चः विस्तारः कः न किमप्येतदिति भावः। पूर्णः तत्त्वस्य प्रकाशो यस्य तादृशम् गगनसदृशम् आकाशोपमम् आनन्दाख्यं स्वं स्वं वेद्यं ज्ञेयं वस्त्विति शेषः समरसघने निविडैकरसरूपे बाह्यम् अन्तश्च बह्याभ्यन्तराभ्यामित्यर्थः विहीने रहिते सर्वतः समे इति भावः निस्त्रैगुण्ये त्रिगुणातीते पथि मार्गे आत्मज्ञानरूपे इति भावः विचरतः जनस्येति शेषः विधिः नित्यकाम्यनैमित्तिकव्यापारनियमः कः? न कोऽपीत्यर्थः, निषेधः प्रतिषेधः कः? न कोऽपीत्यर्थः।—जीवानन्द विद्यासागर।

## कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ।

सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥७०॥

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः किमजितोऽवति नोपसन्ना—
न्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥७१॥

—श्रीमद्भागवतम् ।

## कस्माद्भयं योगिनः ।

धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी
सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
यस्यैते हि कुटुम्बिनो वद सखे ! कस्माद्भयं योगिनः ॥७२॥

—शान्तिशतकम् ।

## कस्मै किमाचक्ष्महे ।

देवानामृषभः सतीमपि मुनेः पत्नीं जहारच्छला—
द्ब्रह्मापि श्रुतिधर्ममर्मनिपुणः कन्याभिगः श्रूयते ।
शीतांशुर्गुरुतल्पगोऽभवदहो वार्त्ता सुराणामियं
मर्त्त्येषु स्मरकिङ्करेषु नितरां कस्मै किमाचक्ष्महे ॥७३॥

## कस्मै देवाय हविषा विधेम ।

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथ्वीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥७४॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥७५॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥७६॥

यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः ।
यस्येमा प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥७७॥
येन द्यौरुग्रा पृथ्वी च दृढ़ा येन स्वः स्तभितं येन नाकः ।
योऽन्तरीक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥७८॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥७९॥
आपोह यद् बृहतीर्विश्वमायन् गर्भं दधानाः जनयन्तीरग्निम् ।
ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम ॥८०॥
यश्चिदापो महिनापर्यपश्यद् दक्षं दधानाः जनयन्तीर्यज्ञम् ।
यो देवानामधिदेव एक आसीत कस्मै देवाय हविषा विधेम ॥८१॥
मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥८२॥
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्(क) ॥८३॥

—ऋग्वेद म० १० सू० १२१ मन्त्र १—१० ।

---

(क) The above quoted hymn from the Rigveda shows what a clear and consistent, pure and perfect monotheism is taught in the Vedas. An English translation of it by Prof. Max Müller as given below will, I think, not be out of place here:—

"In the beginning there existed God, the source of light. He was the *one* Lord of all created beings. He upholds the earth and the heavens. He, it is to Whom we shall offer our prayers."

"He, who is the giver of spiritual knowledge and giver of strength, Whom the world worships; Whose command all learned men obey; Whose shelter is immortality; Whose shadow is death; He, it is to Whom we shall offer our prayers."

"He, who by his greatness is the *one* Sole King of this animate and inanimate world, Who is the creator and lord of all bipeds and quadrupeds; He, it is to Whom we shall offer our prayers."

"Whose greatness these snowy mountains and the ocean with its waters proclaim; Whose arms are these vast regions; He, it is to Whom we shall offer our prayers."

"By Whom the heavenly bodies are uplifted and the earth is made stable; by Whom the firmament and heaven are established; Who pervades

## कस्य ते कस्य वा भवान् ।

मातापितृसहस्राणि पुत्रदारशतानि च ।
तवानन्तानि यातानि कस्य ते कस्य वा भवान् ॥८४॥

## कस्य दोषो न जातः ।

ख्यातः शक्रो भगाङ्को विधुरपि मलिनो माधवो गोपजातो
वेश्यापुत्रो वशिष्ठः सरुजपदयमः सर्वभक्ष्यो हुताशः ।
व्यासो मत्स्योदरीयः सलवण उदधिः पाण्डवा जारजाता
रुद्रः प्रेतास्थिधारी त्रिभुवनवसतां कस्य दोषो न जातः ॥८५॥

—भट्टकवि—पद्यसंग्रहः ।

---

the entire space by His Spiritual essence; He, it is to Whom we shall offer our prayers."

"To Whom the earth and heavens look up, being upheld by His protection, and moved by His will; in Whom the sun rises and shines forth; He, it is to Whom we shall offer our prayers."

"When this vast diffused matter producing an igneous condition, and holding in its womb this universe, manifested itself, then, He was the *one* life of all shining beings; He, it is to Whom we shall offer our prayers."

"He, who with His greatness looked on that diffused matter possessed of heat and energy and producing the cosmos; Who is the *one* supreme Lord (*adhideva*) of bright things (*devas*); He, it is to Whom we shall offer our prayers."

"May the Lord of truth and righteousness, creator of the earth, who has also created the heavens, and who manifested the vast and shining diffused matter; may He not inflict pain upon us; He, it is to Whom we shall offer our prayers."

"O Lord of all creatures! No other than Thee can control and govern all these created things. May the things desiring which we pray to Thee, be ours. May we be lord of good things of the world."

No less than four times in this hymn of ten verses has the word "One" एक been used. The reader will search in vain for a more clear and unambiguous beautiful and spirited description of the unity of God in the Scriptures of any other religion.

—*The Fountainhead of Religion by*
*Prof. Gangaprasada, M. A., M. R. A. S.*

## कस्य वश्या वराङ्गना ।

दृश्यताम्—'अचला कमला कस्य' इति

## कस्य सुखं न करोति विरागः ।

सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः (क) कस्य सुखं न करोति विरागः ॥८६॥
—शङ्कराचार्य—मोहमुद्गरः ।

## कस्य सौख्यं निरन्तरम् ।

कस्य दोषः कुले नास्ति व्याधिना को न पीडितः ।
व्यसनं केन न प्राप्तं कस्य सौख्यं निरन्तरम् ॥८७॥

## कस्यास्ति को वल्लभः ।

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः
पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टश्रियं मन्त्रिणः
सर्वः कार्यवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः(ख) ॥८८॥
—वानर्य्यष्टकम्—सप्तरत्नम् ।

## कस्येदं हस्तलाघवम् ।

चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः ।
नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥८९॥

---

(क) सर्वस्य वस्तुनः परिग्रहे भोगे च त्यागो यत्र तथाभूतः विरागः वासनाराहित्यमित्यर्थः ।

(ख) इस श्लोक का यथार्थ पद्यानुवाद कोई कवि महाशय ने कैसा सुललित भाषा में किया है यथा—'फलहीन महीरुह को खगवृन्द तजैं बन को मृग भस्म भये ।
मकरन्द तजैं अरविन्द मिलिन्द तजैं सर सारस सूखि गये ॥
धनहीन मनुष्य तजैं गणिका नृप को शठ सेवक राज हये ।
बिन स्वारथ कौन सखा जग में सब कारज के हित होत भये'॥

## का कथा नृणाम् ।

दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् ।
सुखाद्दुःखं सुराणामप्यधिकं का कथा नृणाम् ॥९०॥

## का कस्य परिदेवना ।

अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलाम् ।
शीतलाश्च पुनर्यान्ति का कस्य परिदेवना ॥९१॥

—घटकर्पर—नीतिसारम् ।

एकवृक्षसमारूढा नानापक्षिविहङ्गमाः ।
प्रभाते तु दिशो यान्ति का कस्य परिदेवना ॥९२॥
कस्य माता कस्य पिता कस्य भ्राता सहोदरः ।
कायप्राणैर्न संबन्धः का कस्य परिदेवना ॥९३॥

## का चिन्ता मरणे रणे ।

यदि कृष्णपदे चिन्ता भक्तिस्तत्पदपङ्कजे ।
विषमे दुर्गमे वापि का चिन्ता मरणे रणे ॥९४॥

—हलायुध—धर्मविवेकः ।

जये च लभते लक्ष्मीं मृतेनापि सुराङ्गनाम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥९५॥

—विष्णुशर्मा—हितोपदेशः ।

## का तव कान्ता कस्ते पुत्रः ।

का तव कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः ।
कस्य त्वं वा कुत आयातस्तत्त्वं चिन्तय तदिदं भ्रातः ! ॥९६॥

—शङ्कराचार्य—मोहमुद्गरः ।

## का नीतिरीतिरियती रघुवंशवीर ! ।

मुक्ताफलाय करिणं हरिणं पलाय
सिंहं निहन्ति भुजविक्रमसूचनाय ।
का नीतिरीतिरियती रघुवंशवीर !
शाखामृगे जरति यत्तव बाणमोक्षः (क) ॥९७॥

## का नु हानिस्ततोधिका ।

आयुषः क्षण एकोऽपि न लभ्यःस्वर्णकोटिभिः ।
स चेन्निरर्थकं नीतः का नु हानिस्ततोधिका ॥९८॥

## का प्रीतिर्भिक्षुकैः सह ।

का प्रीतिः सह मार्जारैः का प्रीतिरवनीपतौ ।
गणिकाभिश्च का प्रीतिः का प्रीतिर्भिक्षुकैःसह ॥९९॥

## का मालतीकुसुमदाम हरस्य मूर्ध्नि ।

सूर्यस्य का तिमिरकुञ्जरवृन्दसिंही
सत्यस्य का सुकृतवारिधिचन्द्रलेखा ।
पार्थश्च कीदृगरिदावहुताशनोऽभू—
त्का मालतीकुसुमदाम हरस्य मूर्ध्नि (ख) ॥१००॥

—धर्मदास—विदग्धमुखमण्डनम् ।

## काकतालीयवत्प्राप्तम् ।

काकतालीयवत्प्राप्तं (ग) दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥१०१॥

---

(क) कपिराजबालेराक्षेपोक्तिरियं यदा सः श्रीरामचन्द्रस्य बाणैराहतोऽभवत् ।

(ख) अत्रोत्तरम्—'भागीरथी'—भा=कान्तिः, गीः=वाणी, रथी=रथो विद्यते यस्य सः। तत्र योजना भागीरथी=गङ्गा ।

(ग) अकस्मात्प्राप्तम् । काकागमनमिव तालपतनमिव अवितर्कितसम्भवम् इति भावः ।

## काकोऽपि किं न कुरुते ।

यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति ।
काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ १०२॥

—विष्णुशर्मा—हितोपदेशः।

## काकोऽपि जीवति चिरम् ।

यज्जीवति क्षणमपि प्रथितो मनुष्यो
विज्ञानशौर्यविभवादिगुणैः समेतः ।
तत्तस्य जीवितफलं प्रवदन्ति सन्तः
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ १०३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

यो नात्मजे न च गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च बन्धुवर्गे ।
किं तस्य जीवितफलेन मनुष्य लोके
काकोऽपि जीवति चिरञ्च बलिञ्च भुङ्क्ते ॥ १०४॥

—विष्णुशर्मा—हितोपदेशः।

## काकः काकः पिकः पिकः ।

काकः कृष्णः पिकः कृष्णस्त्वभेदः पिककाकयोः ।
वसन्ते समुपायाते काकः काकः पिकः पिकः ॥ १०५॥

—वररुचि—नीतिरत्नम्।

## काकः किं गरुडायते ।

## काकः कृशोऽपि फलमालभते ।

## काकाः किं किं न कुर्वन्ति ।

काकाः किं किं न कुर्वन्ति क्रेङ्कारं यत्र तत्र वा ।
शुक एव परं वक्ति नृपहस्तोपलालितः ॥ १०६॥

## काचः काचो मणिर्मणिः ।

मणिर्लुठति पादेषु काचः शिरसि धार्यते ।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः (क) ॥१०७॥

—विष्णुशर्मा—हितोपदेशः ।

काचे मणिर्मणौ काचो येषां तेऽन्ये हि देहिनः ।
सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥१०८॥

—भट्टभल्लटस्य ।

## काचं मणिं काञ्चनमेकसूत्रे ।

काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नन्ति मूढाः किमु तत्र चित्रम् ।
अशेषवित्पाणिनिरेकसूत्रे (ख) श्वानं युवानं मघवानमाह ॥१०९॥

## काणेन चक्षुषा किं वा चक्षुः पीडैव केवलम् ।

## कातरे कविता कुतः ।

दृश्यताम्—'अन्नचिन्ता चमत्कारा' इति ।

## कान्तावियोगविधुरो निशि चक्रवाकः ।

आयाति याति पुनरेव जलं प्रयाति
पद्माङ्कुराणि विचिनोति धुनोति पक्षौ ।
उन्मत्तवद्भ्रमति कूजति मन्दमन्दं
कान्तावियोगविधुरो निशि चक्रवाकः ॥११०॥

—कालिदास—शृङ्गाररसाष्टकम् ।

---

(क) पाठान्तरम्—'मणिं वहन्ति पादाग्रे काचः शिरसि धार्यते।
क्रयविक्रयवेलायां काचः काचो मणिर्मणिः' ॥

(ख) श्वयुवमघोनामतद्धिते। ६।४।१३३।

## कान्ते ! कथं घटितवानुपलेन चेतः ।

इन्दीवरेण नयनं मुखमम्बुजेन
कुन्देन दन्तमधरं नवपल्लवेन ।
अङ्गानि चम्पकदलैः स विधाय धाता
कान्ते ! कथं घटितवानुपलेन चेतः (क) ॥१११॥

—कालिदास—शृङ्गारतिलकम् ।

## कापूरुषः कुक्कुरश्च भोजनैकपरायणः ।

कापूरुषः कुक्कुरश्च भोजनैकपरायणः ।
लालितः पार्श्वमायाति वारितो न च गच्छति ॥११२॥

## कामात्क्रोधोऽभिजायते ।

## कामातुराणां न भयं न लज्जा ।

## कामान्धो नैव पश्यति ।

द्रश्यताम्—'अर्थी दोषान्न पश्यति' इति ॥

## कामी लोको न पश्यति ।

इतिवृत्तं बलस्यान्तं स्वकुलस्यापि लाञ्छनम् ।
मरणन्तु समीपस्थं कामी लोको न पश्यति ॥११३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥११४॥

—भगवद्गीता ।

---

(क) काञ्चित् अन्यपुरुषालिङ्गनमसहमानां सुन्दरीं मानभरेण नमिताननां प्रियां प्रति प्रियस्य उक्तिरियम् ।

## काये कृतान्ताद्भयम् ।

## कायः कस्य न वल्लभः ।

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥११५॥

—विष्णुशर्मा—हितोपदेशः ।

## कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥११६॥

—भगवद्गीता ।

## कार्यध्वंसो हि मूर्खता ।

अपमानं पुरस्कृत्य मानं कृत्वा च मस्तके (क) ।
स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता ॥११७॥

—घटकर्पर—नीतिसारम् ।

## कार्यं निदानाद्धि गुणानधीते ।

स्वर्गापगाहेममृणालिनीनां
नालामृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं
कार्यं निदानाद्धि गुणानधीते ॥११८॥

—श्रीहर्ष—नैषधीयचरितम् ।

## कालशब्देन निर्दिष्टः ।

कलनात्सर्वभूतानां (ख) ब्रह्मादीनां निमेषतः ।
कालशब्देन निर्दिष्टश्चाखण्डानन्दकाद्वयः ॥११९॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

---

(क) 'पृष्ठके' इति पाठान्तरम् ।
(ख) कलनात्=सृष्टिस्थितिविनाशहेतोः ।

## कालस्य किं गच्छति याति यौवनम् ।

## कालस्य कुटिला गतिः ।

मातुलो यस्य कृष्णश्च पिता यस्य धनञ्जयः ।
अभिमन्योर्गतः प्राणः कालस्य कुटिला गतिः (क) ॥१२०॥
अप्सु प्लवन्ते पाषाणा मानुषा घ्नन्ति राक्षसान् ।
कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ॥१२१॥
यावत्कण्ठगताः प्राणा यावन्नास्ति निरिन्द्रियम् ।
तावच्चिकित्सा कर्त्तव्या कालस्य कुटिला गतिः ॥१२२॥
पुरा यत्र तपो-ज्ञान-याग-दानानि भारते ।
तत्रैवाद्य दुराचारः कालस्य कुटिला गतिः (ख) ॥१२३॥

## काले फलन्ति पुरुषस्य यथैव वृक्षाः ।

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥१२४॥

—भर्तृहरि—नीतिशतकम् ।

## काले विलीयते सर्वम् ।

काले विलीयते सर्वं जगत् स्थावरजङ्गमम् ।
समाहितात्मा गोविन्दे प्रलयेऽपि न लीयते ॥१२५॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## कालेन क्षीयते फलम् ।

महतामपि यज्ञानां कालेन क्षीयते फलम् ।
अथाभयप्रदानस्य कलां नार्हति षोडशीम् ॥१२६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) दृश्यताम्—'नियतिः केन बाध्यते' इति ।
(ख) 'कालस्य कुटिला गतिः' इति समस्या ।

## कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः ।

विद्या नाधिगता कलङ्करहिता वित्तञ्च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न सम्पादिता ।
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः ॥१२७॥

—भर्तृहरि—वैराग्यशतकम् ।

## कालो गच्छति धीमताम् ।

प्रातर्द्यूतप्रसङ्गेन (क) मध्याह्ने स्त्रीप्रसङ्गतः (ख) ।
रात्रो चौरप्रसङ्गेन (ग) कालो गच्छति धीमताम् ॥१२८॥
देवताराधनैः शास्त्रैः कालो गच्छति धीमताम् ।
मूर्खाणां तु दिवारात्रं द्यूतेन कलहेन वा ॥१२९॥

## कालो जगद्भक्षकः ।

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवनं
तस्मान्मां शरणागतं शरणद ! त्वं रक्ष रक्षाधुना ॥१३०॥

—कुलशेखर—मुकुन्दमाला ।

## कालो न यातो वयमेव याताः ।

## कालो हि दुरतिक्रमः ।

कालः सृजति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः ॥१३१॥

—महाभारतम् ।

---

(क) महाभारतपाठेन ।
(ख) रामायणपाठेन ।
(ग) श्रीमद्भागवतपाठेन ।

मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः ।
सोऽपि कालवशं प्राप्तः (क) कालो हि दुरतिक्रमः ॥१३२॥

—भगवतो व्यासस्य ।

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीता हि दुःखार्त्ता कालो हि दुरतिक्रमः ॥१३३॥

## कालो हि व्यसनप्रसारितकरः ।

व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि ।
दुर्नीते हि विधौ कुतः सुचरितं (ख) कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥१३४॥

—वेतालभट्ट—नीतिप्रदीपः ।

## कालः समविषमकरः ।

कालः समविषमकरः परिभवसंमानकारकः कालः ।
कालः करोति पुरुषं दातारं याचितारं च ॥१३५॥

## काव्येषु नाटकं रम्यम् ।

काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् (ग) ॥१३६॥

---

(क) पाठान्तरम्—'सोऽभिमन्यू रणे शेते' इति ।
(ख) पाठान्तरम्—'किमस्ति चरितं' इति ।
(ग) श्लोकचतुष्टयं यथा—

'यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितवाष्पवृत्तिकलुषचिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः ।
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः' ॥१॥
'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्' ॥२॥

## काव्येषु माघः कविकालिदासः ।

पुष्पेषु चम्पा नगरीषु लङ्का (क) नदीषु गङ्गा च नृपेषु रामः ।
योषित्सु रम्भा पुरुषेषु विष्णुः काव्येषु माघः कविकालिदासः ॥ १३७॥

## काश्यां हि काशते काशी ।

काश्यां हि काशते काशी काशी सर्वप्रकाशिका ।
सा काशी विदिता येन तेन प्राप्ता हि काशिका (ख) ॥ १३८॥

—शङ्कराचार्य—काशीपञ्चकम् ।

## किन्तस्य कान्तापरिवर्त्तनेन ।

गोप्यो न दोषो मथुराङ्गनानां तस्यैव कृष्णस्य हि रीतिरेषा ।
विपर्य्ययो येन कृतो नु पित्रोः किन्तस्य कान्तापरिवर्त्तनेन ॥ १३९॥

## किन्तु कौलव्रतोद्भङ्गप्रसङ्गः परदुःसहः ।

शक्यते येन केनापि जीवनेनैव जीवितुम् ।
किन्तु कौलव्रतोद्भङ्गप्रसङ्गः परदुःसहः (ग) ॥ १४०॥

—पूर्वचातकाष्टकम् ।

---

'अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतःपरं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥३॥'
'शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥४॥

(क) पाठान्तरम्—'पुष्पेषु जातिर्नगरीषु काशी (नगरीषु काँची)'।

(ख) ज्ञान के द्वारा ही काशी का प्रकाश होता है। वही ज्ञानरूपा काशी सकल वस्तुओं को प्रकाश करती है। इस ज्ञानरूपा काशी को जो जानता है वही काशी लाभ करता है। ज्ञान के उदय होने से और तीर्थरूपा काशी की कोई आवश्यकता नहीं रहती है।

(ग) कुलधर्मरतानां यत् व्रतं तत्परित्यागो दुःसह इत्यनेन श्लोकेन ध्वन्यते।

## किन्तु जीवति चातकः ।

कति वा सरितः सन्ति कति वा सन्ति सागराः (क) ।
किन्तु जीवति जीमूत ! चातकस्तव पाथसा ॥१४१॥

## किन्तु त्वां परिचिन्तयामि सततम् ।

न स्नानं न च भोजनं न पठनं नान्यत्र सौख्यं धृति—
र्नान्यस्त्रीजनसेवनं न च कथा निद्रा विलासोद्यमः ।
किन्तु त्वां परिचिन्तयामि सततं ध्यानेन चेतःस्थितां
स्वप्नालोकनकामकेलिविधिना जीवामि कान्ते ! तव ॥१४२॥

—विह्लण—विद्यासुन्दरम् ।

## किन्त्वेकं त्वसमञ्जसम् ।

मेघ ! त्वं निजजीवनेन भुवनं सन्तापमाप्यायसे
प्रायस्त्वत्सदृशो न कोऽपि भविता भूतोऽथवा वर्त्तते ।
किन्त्वेकं त्वसमञ्जसं व्यथयति प्रज्ञावतां मानसं
यन्मण्डूकमयूरयोरुदयते तुल्यस्तवानुग्रहः ॥१४३॥

## किन्नाम वामनयना न समाचरन्ति ।

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किन्नाम वामनयना न समाचरन्ति ॥१४४॥

—भर्त्तृहरि—शृङ्गारशतकम् ।

## किमज्ञानमतःपरम् ।

आत्मा नियामकश्चान्तर्देहो नियम्यो वाह्यकः ।
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥१४५॥

---

(क) पाठान्तरम्—'कति वा सरितः सन्ति कति सन्ति विहङ्गमा' इति ।

आत्मा प्रकाशकः स्वच्छो देहस्तामस उच्यते ।
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥१४६॥
आत्मा नित्यो हि सद्रूपो देहोऽनित्यो ह्यसन्मयः ।
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥१४७॥
आत्मा विनिष्कलो ह्येको देहो बहुभिरावृतः ।
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥१४८॥
आत्मा ज्ञानमयः पुण्यो देहो मांसमयोऽशुचिः ।
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥१४९॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## किमन्ते कृतान्ते मयावेदनीयम् ।

न चाकारि कामारिकंसारिसेवा न वा स्वेष्टमाचेष्टितं हन्त किञ्चित् ।
मनः प्रेयसीरूपपङ्के निमग्नं किमन्ते कृतान्ते मयावेदनीयम् ॥१५०॥

## किमपरं हेयं भवेन्मानिनाम् ।

स्वच्छाः सौम्य ! जलाशयाः प्रतिदिनं ते सन्तु मा सन्तु वा
स्वल्पं वा बहु वा जलं जलधर ! त्वं देहि मा देहि वा ।
कासारेषु (क) सरित्सु सिन्धुषु तथा नीचेषु नीरग्रहं
धिक् तत्रापि शिरोनतिः किमपरं हेयं भवेन्मानिनाम् ॥१५१॥

—उत्तरचातकाष्टकम् ।

## किमपि किल रूपं विलसति ।

बलादक्ष्णोर्लक्ष्मीः कवलयति नव्यं कुवलयं
मुखोल्लासः फुल्लं कमलवनमुल्लङ्घयति च ।
दशां कष्टामष्टापदमपि नयत्याङ्गिकरुचि—
र्विचित्रं राधायाः किमपि किल रूपं विलसति(ख) ॥१५२॥

—श्रीरूपगोस्वामी—विदग्धमाधवम् ।

---

(क) कासारेषु सरसीषु, कासारः सरसी सर इत्यमरः ।
(ख) पौर्णमास्या उक्तिरियं श्रीमतीराधिकां प्रति ।

## किमयोग्ये नखमर्पयाम्यहम् ।

करिकुम्भविदारणक्षमं किमयोग्ये नखमर्पयाम्यहम् ।
इति मौनमुपैति केशरी सरमासूनुरतिप्रगल्भते ॥१५३॥

## किमसतीचित्ते पतिप्रेम वा ।

भ्रातः कोकिल ! भीतभीत इव किं पत्रावृतो वर्त्तसे
नीचैः पश्य धनुर्भृतस्तत इतो धावन्ति भिल्लार्भकाः ।
का भीतिस्तव यत्कुहूरिति परा विद्या मधुस्यन्दिनी
किं क्रूरे गुणगौरवं किमसतीचित्ते पतिप्रेम वा ॥१५४॥

## किमसौ न भयङ्करः ।

दुर्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥१५५॥

—चाणक्यशतकम् ।

## किमात्मना यो न जितेन्द्रियो भवेत् ।

धनेन किं ? यो न ददाति याचके (क)
बलेन किं ? यश्च रिपुं न बाधते ।
श्रुतेन किं ? यो न च धर्ममाचरे—
त्किमात्मना ? यो न जितेन्द्रियो भवेत् ॥१५६॥

—सप्तरत्नम् ।

## किमाश्चर्यमतः परम् ।

अहन्यहनि भूतानि गच्छन्तीह यमालयम् ।
शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥१५७॥

—महाभारते वनपर्वणि ।

---

(क) 'नाश्नुते' इति पाठान्तरं हितोपदेशे ।

## किमिति सखे ! परदेशे गमयसि दिवसान् ।

किमिति सखे ! परदेशे गमयसि दिवसान्धनाशया मुग्धः ।
विकरति मौक्तिकमनिशं तव भवने काञ्चनीलतिका ॥ १५८॥

## किमिदं विचित्रम् ।

स्थाणुःस्वयं मूलविहीन एव पुत्रो विशाखो रमणी त्वपर्णा ।
परोपनीतैः कुसुमैरजस्रं फलत्यभीष्टं किमिदं विचित्रम् (क) ॥ १५९॥

## किमिव हि मधुराणां मण्डनं नाकृतीनाम् ।

सरसिजमनुविद्धं शैवालेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म(ख)लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १६०॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## किमिष्टमन्नं खरसूकराणाम् ।

## किमिह न हि रम्यं मृगदृशः ।

स्मितं किञ्चिद्वक्त्रे सरलतरलो दृष्टिविभवः
परिस्यन्दो वाचामभिनवविलासोक्तिसरसः (ग) ।
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिह न हि रम्यं मृगदृशः ॥ १६१॥

—भर्तृहरि—शृङ्गारशतकम् ।

---

(क) अद्भुतरसात्मकः श्लोकोऽयम् । विशाखः शाखाविहीनः; (पक्षे) कार्त्तिकः स्कन्दः । बाहुलयेस्तारकजिद्विशाखः शिखिवाहन. इत्यमरः । अपर्णा पत्रविहीना; (पक्षे) पार्वती ।

(ख) लक्ष्म=कलङ्कः ।

(ग) वाचां परिस्यन्दः कथनम् अभिनवया विलासोक्त्या विलासभाषितेन सरसः मधुरः इत्यर्थः ।

## किमु—किं—किमु ।

निर्वाणदीपे किमु तैलदानं ? चौरे गते वा किमु सावधानम् ? ।
वयोगते किं वनिताविलासः ? पयोगते किं खलु सेतुबन्धः ? ॥१६२॥

—वेतालभट्ट—नीतिप्रदीपः ।

—कविभट्ट—पद्यसंग्रहः ।

## किमु कुमुदवनानां प्रेमभङ्गं करोति ।

न हि भवति वियोगः स्नेहविच्छेदहेतु—
र्जगति गुणनिधीनां सज्जनानां कदाचित् ।
घनतिमिरनिबद्धो दूरसंस्थोऽपिचन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥१६३॥

## किमु भाति विभाति वा ।

तदेतदिति मन्यन्तेऽनिर्देश्यम्परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति विभाति वा (क) ॥१६४॥

—कठोपनिषद् ।

## किमुतान्या विभूतयः ।

स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि ।
आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥१६५॥

## किं—किं—किम् ।

लोभश्चास्ति गुणेन किं ? पिशुनता यद्यस्ति किम्पातकैः ?
सत्यञ्चेत्तपसा च किं ? शुचिमनो यद्यस्ति तीर्थेन किम् ? ।

---

(क) यतयः यत् ब्रह्म 'तत् एतत्' इति मत्वा अनिर्देश्यं परमं सुखं मन्यन्ते तत् अहं कथं केन प्रकारेण नु विजानीयाम् ? तत् किम् भाति स्वतः दीप्यते ? वा विभाति प्रकाशान्तरेण दीप्यते ? —'शङ्करकृपा' टीका।

दृश्यताम्—'तस्य भासा सर्वमिदं विभाति' इति।

सौजन्यं यदि किं निजैः ? स्वमहिमा यद्यस्ति किम्मण्डनैः ?
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ? (क) ॥ १६६॥

—भर्त्तृहरि—नीतिशतकम्।

स्वर्गः किं ? यदि वल्लभा निजवधूः किं वा विभूषाविधि—
र्लावण्यं यदि किं सुधाकरकरैः ? शृङ्गारगर्भा गिरः।
मृत्युः किं ? यदि दुर्जनेष्ववनतिः किं धिग्यदि प्रार्थना ?
प्राप्तेष्टः करिकेतनो यदि भवेत्किं कल्पभूमीरुहैः ? ॥ १६७॥

—सप्तरत्नम्।

किं जिह्वया हरिगुणालपनालसाया ?
किं वा करेण हरिकार्यपराङ्मुखेन ?।
नेत्रेण किं हरिविलोकनवञ्चितेन ?
श्रोत्रेण किं हरिकथाश्रवणालसेन ? ॥ १६८॥

—ताराकुमार—कृष्णभक्तिरसामृतम्।

क्षान्तिश्चेत्कवचेन किं ? किमरिभिः ? क्रोधोऽस्तिचेद्देहिनां
ज्ञातिश्चेदनलेन किं ? यदि सुहृद्दिव्यौषधैः किं फलम् ?।
किं सर्पैर्यदि दुर्जनाः ? किमु धनैर्विद्यानवद्या यदि
व्रीडा चेत्किमु भूषणैः ? सुकविता यद्यस्ति राज्येन किम् ? ॥ १६९॥

—पञ्चरत्नम्।

वित्तेन किं ? वितरणं यदि नास्ति दीने
किं सेवया ? यदि परोपकृतौ न यत्नः।
किं सङ्गमेन ? तनयो यदि नेक्षणीयः
किं यौवनेन ? विरहो यदि वल्लभायाः ॥ १७०॥

—सप्तरत्नम्

---

(क) पाठान्तरम्—'लोभोऽप्यस्ति परेण किं ? पिशुनता यद्यस्ति किं पातकैः ?
सौजन्यं यदि किं गुणैः ? सुमहिमा यद्यस्ति किं मण्डनैः ?।
सत्यञ्चेत्तपसा च किं ? शुचिमनो यद्यस्ति तीर्थेन किं ?
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ? ॥'

—षड्रत्नम्।

विवेकः किं सोऽपि स्वरसजनिता यत्र न कृपा
स किं योगो यस्मिन्न भवति परानुग्रहरसः ।
स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः
श्रुतं किं तद्वा स्यादुपशमफलं यन्न भवति ॥ १७१॥

—शान्तिशतकम् ।

कवयः किं न पश्यन्ति किं न भक्षन्ति वायसाः ।
मद्यपा किं न जल्पन्ति किं न कुर्वन्ति योषितः ॥ १७२॥

## किं किं न सम्भाव्यते ।

भ्रातः पान्थ ! कुतो भवान्नगरतो वार्ता नवा वर्त्तते
बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति ।
सत्यं जीवति जीवतीति कथिता वार्त्ता मयापि श्रुता
विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न सम्भाव्यते ॥ १७३ ॥

## किं किं न साधयति कल्पलतेव विद्या ।

मातेव रक्षति पितेव हिते नियुङ्क्ते
भार्येव चाभिरमयत्यपनीय खेदम् ।
कीर्त्तिं च दिक्षु वितनोति करोति वित्तं
किं किं न साधयति कल्पलतेव विद्या ॥ १७४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## किं करिष्यामि न पुनर्विनिवर्त्तते ।

विशालाक्ष्याः कटाक्षेण विकृष्टं रश्मिनेव मे ।
हृदयं किं करिष्यामि न पुनर्विनिवर्त्तते ॥ १७५॥

## किं कारणं भोज! भवामि मूर्खः।

गतं न शोचामि कृतं नु मन्ये खादन्न गच्छामि हसन्न जल्पे ।
द्वाभ्यां तृतीयो न भवामि राजन्किं कारणं भोज ! भवामि मूर्खः (क) ॥ १७६॥

---

(क) पाठान्तरम्—'स्थितो न खादामि हसन्न जल्पे गतं न शोचामि कृतं न मन्ये।
द्वयोस्तृतीयो न भवामि राजन्केनास्मि मूर्खो वद कारणेन' ॥

## किं कार्यं परिशिष्टमस्ति भवतो जानामि नाहं कले ।

वेदं वेद न कोऽपि भूधरदरीलीना मुनीनां गिरः
स्वच्छं म्लेच्छमतं जनास्तदनुगाः का नाम धर्म्याः क्रियाः ।
मद्यं हृद्यमतीव वारवनिताः सेव्या न गुर्वादयः
किं कार्यं परिशिष्टमस्ति भवतो जानामि नाहं कले ! ॥१७७॥

## किं कुर्वन्ति ग्रहाः सर्वे ।

एकादशस्थे गोविन्दे मुकुन्दे श्रीनिकेतने ।
किं कुर्वन्ति ग्रहाः सर्वे शन्यर्काङ्गारकादयः (क) ॥१७८॥

## किं कृतं तेन ।

प्राप्य चलानधिकाराञ्शत्रुषु मित्रेषु बन्धुवर्गेषु ।
नापकृतं नोपकृतं न सत्कृतं किं कृतं तेन ॥१७९॥

## किं—को—कः ।

कोऽतिभारः समर्थानां ? किं दूरं व्यवसायिनाम् ? ।
को विदेशः सविद्यानां ? कः परः प्रियवादिनाम् ? ॥१८०॥

—चाणक्यशतकम् ।

## किं—कः—किं—कः ।

किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः ।
को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम् ॥१८१॥

## किं क्रूरे गुणगौरवम् ।

दृश्यताम्—'किमसतीचित्ते पतिप्रेम वा' इति ।

---

(क) पाठान्तरम्—'एकादशस्थे गोविन्दे सर्वेप्येकादशे स्थिताः ।
किं कुर्वन्ति ग्रहाः सर्वे शनिरङ्गारको गुरुः' ॥

## किं जन्मना भवति पैत्रगुणेन किं वा ।

किं जन्मना भवति पैत्रगुणेन किं वा
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ।
कुम्भो हि कूपमपि शोषयितुं न शक्तः
कुम्भोद्भवेन मुनिनाम्बुधिरेव पीतः (क) ॥ १८२ ॥

## किं तीर्थैः किं तपोयज्ञैः ।

किं तीर्थैः किं तपोयज्ञैः किं सन्ध्याश्राद्धतर्पणैः ।
हृदये रसनायाञ्च हरिरेवास्ति चेत्सदा ॥ १८३ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## किं तेन हेमगिरिणा ।

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र स्थिता हि तरवस्तरवस्त एव ।
वन्दामहे मलयमेव यदाश्रयेण
शाखोट-निम्ब-कुटजान्यपि चन्दनानि ॥ १८४ ॥

—वेतालभट्ट—नीतिप्रदीपः ।

## किं दोष एष जलदस्य दीयते ।

चातकस्य खलु चञ्चुपुटके न पतन्ति किल वारिविन्दवः ।
सागरीकृतमहीतलस्य किं दोष एष जलदस्य दीयते ॥ १८५ ॥

---

(क) पाठान्तरम्—'पुंसः स्वरूपविनिरूपणमेव युक्तम् ।
तज्जन्मभूमिगुणदोषकथा वृथैव' ॥

जन्म से अथवा पिता के गुण से क्या होता है, पुरुष अपनी शक्ति के द्वारा प्रतिष्ठा को प्राप्त होता है। कुम्भ में कूप को भी शोषण करने की शक्ति नहीं है, परन्तु कुम्भ से उत्पन्न जो अगस्त्य मुनि थे उन्होंने अपने सामर्थ्य से समुद्र को पान कर लिया। यह एक पौराणिकी कथा है।

## किं नु दुःखमतःपरम् ।

जन्मनि क्लेशबहुले किं नु दुःखमतःपरम् ।
इच्छासंपद्यतो नास्ति यथेच्छा न निवर्त्तते ॥ १८६ ॥

—विष्णुशर्मा—हितोपदेशः ।

## किं पुनः श्रद्धया गृणन् ।

म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् ॥ १८७ ॥

—श्रीमद्भागवतम् ।

दंष्ट्रि-दंष्ट्राहतो म्लेच्छो हा रामेति पुनः पुनः ।
उक्त्वापि मुक्तिमाप्नोति किं पुनः श्रद्धया गृणन् ॥ १८८ ॥

—नृसिंहपुराणम् ।

## किं ब्रूमो भवितव्यतां हतविधे ।

जामाता पुरुषोत्तमो भगवती लक्ष्मीःस्वयं कन्यका
दूतो यस्य बभूव कौशिकमुनिर्यज्वा वशिष्ठः स्वयम् ।
दाता श्रीजनकः प्रदानसमये चैकादशस्था ग्रहाः
किं ब्रूमो भवितव्यतां हतविधे रामोऽपि यातो वनम् ॥ १८९ ॥

## किं ब्रूमः शशिनो भाग्यम् ।

किं ब्रूमः शशिनो भाग्यं हरस्य शिरसि स्थितिः ।
अभाग्यमपि किं ब्रूमस्तत्र स्थित्वाप्यपूर्णता ॥ १९० ॥

## किं मधुना किं विधुना ।

किं मधुना किं विधुना किं सुधया किं च वसुधयाखिलया ।
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ॥ १९१ ॥

## किं रत्नहारो मृगपक्षिणां च ।

## किं वा करिष्यति नयनखञ्जनयुग्ममेतत् ।

एको हि खञ्जनवरो नलिनादलस्थो
दृष्टः करोति चतुरङ्गबलाधिपत्यम् ।
किं वा करिष्यति भवद्वदनारविन्दे
जानामि नो नयनखञ्जनयुग्ममेतत् ॥१९२॥

—कालिदास—शृङ्गारतिलकम् ।

## किं वा शिशुस्ते पतिः ।

कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्डस्थले
नो लुप्तं सखि ! चन्दनं स्तनपटे धौतं न नेत्राञ्जनम् ।
रागो न स्खलितस्तवाधरपुटे ताम्बूलसंवर्धितः
किं रुष्टासि गजेन्द्रमन्दगमने ! किं वा शिशुस्ते पतिः (क) ॥१९३॥

—कालिदास—शृङ्गारतिलकम् ।

## किं वृद्धैरपि सस्पृहम् ।

आपाण्डुपीनकठिनं वर्त्तुलं सुमनोहरम् ।
करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् (ख) ॥१९४॥

—धर्मदास—विदग्धमुखमण्डनम् ।

## किं वैद्यस्य प्रयोजनम् ।

दिनान्ते च पिबेद्दुग्धं निशान्ते च पिबेत्पयः ।
भोजनान्ते पिबेत्तक्रं किं वैद्यस्य प्रयोजनम् ॥१९५॥

## किंशुक मा कुरु गर्वम् ।

किंशुक ! मा कुरु गर्वं तव शिरसि भ्रमरोपवेशनेन ।
अमलकमलविप्रयोगादनलधिया त्वयि मज्जति द्विरेफः ॥१९६॥

---

(क) नवपतिसहवासानन्तरं प्रातरुत्थितां नागरीं प्रति कस्याश्चित् सख्या उक्तिरियम् ।

(ख) अत्रोत्तरं पक्वविल्वफलं कुचयुगलं च । वृद्धैरपि सस्पृहं नासिकाचूर्णनिक्षेपणार्थं वृद्धैरपि ध्रियत इति प्रसिद्धिः ।

### कीर्तिर्धर्मश्च निश्चलः ।

चला लक्ष्मीश्चलाः प्राणाश्चलो देहोऽथ यौवनम् ।
चलाचलमिदं सर्वं कीर्तिर्धर्मश्च निश्चलः ॥१९७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### कीर्त्तनीयः सदा हरिः ।

तृणादपि सुनीचेन तरोरपि सहिष्णुना ।
अमानिना मानदेन कीर्त्तनीयः सदा हरिः ॥१९८॥

—चैतन्यचरितामृते पद्यावल्याम् ।

दुर्जेय इन्द्रियग्रामो मनश्चात्यन्तदुर्जयम् ।
किं कार्यं तत्पदप्राप्त्यै कीर्त्तनीयः सदा हरिः (क) ॥१९९॥

### कीर्त्तिर्यस्य स जीवति ।

चलच्चित्तं चलद्वित्तं चलज्जीवनयौवनम् ।
चलाचलमिदं सर्वं कीर्त्तिर्यस्य स जीवति ॥२००॥
स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति ।
अयशोऽकीर्त्तिसंयुक्तो जीवन्नपि मृतोपमः ॥२०१॥

—घटकर्पर—नीतिसारम् ।

### कीदृशेन पुरुषेण पक्षिणां बन्धनम् ।

का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता ।
कीदृशेन पुरुषेण पक्षिणां बन्धनं समभिलष्यते सदा (ख) ॥२०२॥

### कुगेहिनीं प्राप्य गृहे कुतः सुखम् ।

### कुण्डे कुण्डे नवं पयः ।

---

(क) 'कीर्त्तनीयः सदा हरिः' इति समस्या।

(ख) अत्रोत्तरं 'शकुन्तलाभरतेन'। शकुन्तलानाम्नी ऋषेः पुत्री भरतनामा पुत्रेण नन्दिता इत्यर्थः। शकुन्तानां पक्षिणां लाभोऽर्जनं तत्र रत आसक्तस्तेन व्याधेनेत्यर्थः। तथाहि प्रथमस्य शकुन्तला, द्वितीयस्य भरतेन, ततीयस्य शकुन्तलाभरतेन।

—सुभाषितरत्नभाण्डागारम्।

## कुतो दुःखत्रयस्तस्य ।

कुतो दुःखत्रयस्तस्य ब्रह्मलोकेऽपि तिष्ठतः ।
अस्ति नैकान्तिको यस्य भावः सर्वेश्वरे हरौ ॥२०३॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## कुतो विद्यार्थिनः सुखम् ।

सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥२०४॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## कुतः सत्यञ्च कामिनाम् ।

## कुतः—कुतः—कुतः ।

तस्करस्य कुतो धर्मो दुर्जनस्य कुतः क्षमा ।
वेश्यानाञ्च कुतः स्नेहः कुतः सत्यञ्च कामिनाम् ॥२०५॥
प्रेषितस्य कुतो मानः कोपनस्य कुतः सुखम् ।
स्त्रीणां कुतः सतीत्वञ्च कुतो मैत्री खलस्य च ॥२०६॥
कुदेशमासाद्य कुतोऽर्थसञ्चयः कुपुत्रमासाद्य कुतो जलाञ्जलिः ।
कुगेहिनीं प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ॥२०७॥

—चाणक्यशतकम् ।

## कुत्र यातु मधुव्रतः ।

मालतीमुकुला याताः कुन्दा मन्दायितास्तथा ।
पङ्कज ! त्वामिदं ब्रूमः कुत्र यातु मधुव्रतः ॥२०८॥

## कुन्तीसुतो रावणकुम्भकर्णाः ।

का पाण्डुपत्नी गृहभूषणं किं को रामशत्रुः किमगस्त्यजन्म ।
कः सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतो रावणकुम्भकर्णाः (क) ॥२०९॥

---

(क) चतुर्थपादस्थपदैः प्रश्नोत्तरम् ।

कुपात्रदानाच्च भवेद्दरिद्रः ।

कुपुत्रेण कुलं यथा ।

एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥२१०॥

—चाणक्यशतकम् ।

कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ।

पृथिव्यां पुत्रास्ते जननि ! बहवः सन्ति सरलाः
परं तेषां मध्ये विगलितरसोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे !
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२११॥
जगन्मातर्मातस्तव चरणसेवा न रचिता
नवा दत्तं देवि ! द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२१२॥

—शङ्कराचार्य—देव्यपराधक्षमापनस्तोत्रम् ।

कुरङ्गमातङ्गपतङ्गमीनभृङ्गाः ।

कुरु जीव ! महायज्ञम् ।

कुरु जीव ! महायज्ञं कृष्णप्रेमहुताशने ।
कृष्णाय नम इत्युक्त्वा निक्षिपात्मानमाहुतिम् ॥२१३॥

—ताराकुमार—कृष्णभक्तिरसामृतम्

कुरु जीव ! महाश्राद्धम् ।

कुरु जीव ! महाश्राद्धं परमं पितृतर्पणम् ।
विश्वपित्रे मुकुन्दाय भक्त्या हृत्पिण्डमुत्सृज ॥२१४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः ।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२१५॥

—ईशावास्योपनिषद् ।

कुलजा या सा जाया ।

दृश्यताम्—'कवयः—कपयः—गवयः' इति ।

कुशिष्यमध्यापयतः कुतो यशः ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

कूटस्थोऽक्षर उच्यते ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते (क) ॥२१६॥

—भगवद्गीता

कृतप्रयत्नोऽपि गृहे न जीवति ।

पथिच्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे न जीवति (ख) ॥२१७॥

—विष्णुशर्मा—हितोपदेशः ।

कृतस्य करणं नास्ति ।

कृतान्तात्किं शङ्का न हि भवति रे जागृत जनाः ।

गृहे पर्यन्तस्थे द्रविणकणमोषं श्रुतवता
स्ववेश्मन्यारक्षा क्रियत इति मार्गोऽयमुचितः ।
नरान्गेहाद्गेहात्प्रतिदिवसमाकृष्य नयतः
कृतान्तात्किं शङ्का न हि भवति रे जागृत जनाः ! ॥२१८॥

—शान्तिशतकम् ।

---

(क) अर्थात् जिसमें विकार है उसी ब्रह्मादि स्थावर पर्यन्त समस्त भौतिक शरीर को 'क्षर' कहते हैं, और जिसमें विकार नहीं है उसी जीवस्वरूप को 'अक्षर' कहते हैं।

(ख) पाठान्तरम्—'अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथो विपिनेऽप्यरक्षितः कृतप्रयत्नोऽपि गृहे विनश्यति' ॥

## कृते च प्रतिकर्तव्यम् ।

स त्वां राम ! हिते युक्तं प्रत्यर्चयति सागरः ।
कृते च प्रतिकर्तव्यं एष धर्मः सनातनः (क) ॥२१९॥

## कृष्ण इत्यभिधीयते ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते (ख) ॥२२०॥

—गोपालतापनीयोपनिषद् ।

## कृष्णपक्षे यथा शशी ।

विना कार्येण ये मूढा गच्छन्ति परमन्दिरम् ।
अवश्यं लघुतां यान्ति कृष्णपक्षे यथा शशी ॥२२१॥

## कृष्णपक्षे विधोरिव ।

धर्मार्थे क्षीणकोषस्य क्षीणत्वमपि शोभते ।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥२२२॥

—कामन्दकीयनीतिसारम् ।

---

(क) दृश्यताम्—'एष धर्मः सनातनः' इति।

(ख) 'कृषि' शब्द का अर्थ 'सत्' और 'ण' शब्द का अर्थ 'निर्वृत्ति' अर्थात् 'चिदानन्द' है। 'कृषि' और 'ण' इन दोनों शब्दों के योग से 'कृष्ण' शब्द की उत्पत्ति हुई है। सच्चिदानन्द ब्रह्म का नाम कृष्ण है।

'कृष्ण' शब्द के और भी कई अर्थ हो सकते हैं यथा—

'भक्तानां पापादिदोषान् कृषति निवारयति इति कृष्णः'।

जो भक्तों के सकल पाप ताप को दूर करने वाला है उसी को 'कृष्ण' कहते हैं। अथवा 'तेषां दुर्लभानपि पुरुषार्थान् आकर्षति प्रापयति इति कृष्णः'। अर्थात् जो भक्तों को दुर्लभ पुरुषार्थ देता है उसी को 'कृष्ण' कहते हैं। अथवा 'कर्षति आत्मनि सर्वलोकान् इति कृष्णः'—जो प्रलयकाल में सारे जगत् को अपने में आकर्षण करता है। 'कर्षति अरीन् इति कृष्णः' अर्थात् जो दुष्टों का दर्प हरण करने वाला है, उसी का नाम 'कृष्ण' है।

तथाहि महाभारते—'कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः।
विष्णुस्तद्भावभावित्वात्कृष्णो भवति शाश्वतः'॥

## कृष्णप्रणामी न पुनर्भवाय ।

एकोऽपि कृष्णस्य सकृत्प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥२२३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## कृष्णस्तु भगवान्स्वयम् ।

ऋषयो मनवा देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयस्तथा ॥२२४॥
एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे (क) ॥२२५॥

—श्रीमद्भागवतम् ।

## कृष्णोऽयमभ्युदयते मम लोचनाय ।

मारः स्वयं नु मधुरद्युतिमण्डलं नु
माधुर्यमेव नु मनोनयनामृतं नु ।
वेणीमृजो नु मम जीवितवल्लभो नु
कृष्णोऽयमभ्युदयते मम लोचनाय ॥२२६॥

—चैतन्यचरितामृते कृष्णकर्णामृतम् ।

## कृष्णः प्रसन्नोऽस्तु ते ।

कालिन्दीतटसन्निधावुपवने गोपाङ्गनालिङ्गन—
क्रीडाकर्षणचुम्बनादिरसितः संमूर्च्छितो वेणुना ।
स्थित्वा कल्पमहीरुहाश्रितलतावासे सुपुष्पान्विते
नानाभूषणभूषितो विहसितः कृष्णः प्रसन्नोऽस्तु ते ॥२२७॥

—विह्लण—विद्यासुन्दरम् ।

## के विन्ध्याद्रिवने वसन्ति ।

दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः
का रूपं विनिहन्ति को मधुबधूवैधव्यदीक्षागुरुः ।

---

(क) दृश्यताम्—'अवताराः दशैते स्युः' इति ।

स्वच्छन्दं नवशल्लकीकवलनैः पम्पासरोमज्जनैः
के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः (क) ॥२२८॥
—धर्मदास—विदग्धमुखमण्डनम्।

## केतकी गुरुपत्रेभ्यो लघुपत्रस्य गौरवम्।

## केन दृष्टं श्रुतं वा।

काके शौचं द्यूतकारे च सत्यं क्लीबे शौर्यं मद्यपे तत्त्वचिन्ता।
सर्पे क्षान्तिः स्त्रीषु कामोपशान्ती राजा मित्रं केन दृष्टं श्रुतं वा ॥२२९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका।

## केनापरेण कमले! बत शिक्षितानि।

रत्नाकरस्तव पिता कमले निवासो
भ्राता सुधामयतनुः पतिरादिदेवः।
केनापरेण कमले! बत शिक्षितानि
सारङ्गशृङ्गकुटिलानि विचेष्टितानि ॥२३०॥

## केयमपूर्वापि च दृश्यसे।

मुग्धे! धनुष्मती केयमपूर्वापि च दृश्यसे।
यथाविध्यसि चेतांसि गुणैरेव न सायकैः ॥२३१॥
—भर्तृहरि—शृङ्गारशतकम्।

## केशाः कुशेशयदृशां कुशलीभवन्तु।

यत्नादृतस्त्वमलिना मलिनाशयेन
किन्तेन चम्पक! विषादमुरीकरोषि।
विश्वाभिरामनवनीरदनीलवेशाः
केशाःकुशेशयदृशां(ख)कुशलीभवन्तु ॥२३२॥

---

(क) अत्रोत्तरं 'कुञ्जराः'। कुं पृथिवीमिति प्रथमस्य, जरा इति द्वितीयस्य, कः विष्णुरिति तृतीयस्य तस्य मधुसूदनत्वादिति भावः, कुञ्जराः हस्तिन इति चतुर्थस्य।
नवशल्लकीकवलनैः नवशल्लीकानां अभिनवगजप्रियवृक्षविशेषाणां कवलनैः ग्रसनैः भक्षणैरित्यर्थः।

(ख) कमललोचनानां रमणीनामित्यर्थः।
सहस्रपत्रं कमलं शतपत्रं कुशेशयं इत्यमरः।

## केषां न ते वन्द्याः ।

वदनं प्रसादसदनं हृदयं सदयं सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥२३३॥

## कोऽतिभारः समर्थानाम् ।

## कोऽयमद्वैतवादः ।

## कोऽयं चौरो हृदयमहरत् ।

मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्ता—
त्कर्णात्स्वर्णाभरणमपि वा नीतवान्नैव रागात् ।
आहो स्वप्ने वकुलकुसुमं भूषणं संदधानः
कोऽयं चौरो हृदयमहरत्तन्वि ! तन्न प्रतीमः ॥२३४॥
—भानुदत्त मिश्र—रसमञ्जरी।

## कोऽर्थः पुत्रेण जातेन ।

कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ।
तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी (क) ॥२३५॥
—कालिदास—द्वात्रिंशत्पुत्तलिका।

## को जातो मयि सर्ववृत्तिरहिते दारिद्र्यनामा सुतः ।

स्वग्रासं पथिकाय देहि सुभगे ! नो नो गिरो निष्फलाः
कस्माद्ब्रूहि सखे ! नु सूतकमिदं कालावधिर्नास्ति किम् ।
यावज्जीवमिदं न याति विषमं पुत्रोद्भवं सूतकं
को जातो मयि सर्ववित्तरहिते दारिद्र्यनामा सुतः ॥२३६॥
—कालिदास—द्वात्रिंशत्पुत्तलिका।

---

(क) 'काणेन चक्षुषा किं वा चक्षुः पीडैव केवलम्' इति पाठान्तरम् हितोपदेशे।

## को न मुच्येत बन्धनात ।

पुराणान्ते श्मशानान्ते मैथुनान्ते च या मतिः ।
सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥२३७॥
आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्त्तारं को न मुच्येत बन्धनात् ॥२३८॥

## को नाम संपरिहरेत्सिततण्डुलांश्च ।

यद्यत्सुखं विषयसङ्गमजन्म तच्च दुःखाय सृष्टमिति मूर्खविचारणैव ।
को नाम संपरिहरेत्सिततण्डुलांश्च भोक्तुं यतेत तुषमिश्रकणान्मनुष्यः॥२३९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## को भारः परिखापारः ।

को भारः परिखापारः पारावारविहारिणः ।
निपीतकालकूटस्य हरस्येवाहिखेलनम् ॥२४०॥

## को भेदः शत्रुमित्रयोः ।

शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो ।
उभयोर्दुःखदायित्वं को भेदः शत्रुमित्रयोः ॥२४१॥

## को लोभोऽयं मनस्विनः ।

ब्रह्माण्डो मण्डलीमात्रं को लोभोऽयं मनस्विनः ।
शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥२४२॥
—भर्त्तृहरि—वैराग्यशतकम ।

## को वा दुर्जनवागुरासु पतितः क्षेमेण जातः पुमान् ।

## को वा लोके गर्दभस्यापराधः ।

वाङ्माधुर्यात्सर्वलोकप्रियत्वं
वाक्पारुष्यात्सर्वलोकाप्रियत्वम् ।
किं वा लोके कोकिलेनोपनीतं
को वा लोके गर्दभस्यापराधः ॥२४३॥

## को हि विज्ञातुमर्हति ।

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥२४४॥
—भवभूति—वीरचरित्रस्यउत्तरचरिते ।

## कोकिलानां स्वरो रूपम् ।

## कोकिलोऽहं भवान्काकः ।

कोकिलोऽहं भवान्काकः समानः कालिमावयोः ।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥२४५॥

## कोटिं त्यक्त्वा हरिं भजेत् ।

शतं विहाय भोक्तव्यं सहस्रं स्नानमाचरेत् ।
लक्षं विहाय दातव्यं कोटिं त्यक्त्वा हरिं भजेत् ॥२४६॥

## कोपनस्य कुतः सुखम् ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

## कोशः कोशवतः प्राणाः ।

## कौपीनवन्तः खलु भाग्यवन्तः ।

वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः ।
विशोकमन्तःकरणे रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥२४७॥

मूलं तरोः केवलमाश्रयन्तः पाणिद्वयं भोक्तुममन्त्रयन्तः ।
कन्थामिव (क) श्रीमपि कुत्सयन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥२४८॥

---

(क) कत्थामिव=आत्मश्लाघामिव ।

देहादिभावं परिवर्त्तयन्त (क) आत्मानमात्मन्यवलोकयन्तः ।
नान्तं न मध्यं न बहिः स्मरन्तः (ख) कौपीनवन्तः खलु भाग्यवन्तः ॥२४९॥

स्वानन्दभावे परितुष्टिमन्तः सुशान्तसर्वेन्द्रियतुष्टिमन्तः ।
अहर्निशं ब्रह्मसुखे रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥२५०॥

पञ्चाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः ।
भिक्षाशिनो दिक्षु परिभ्रमन्तः कौपीनवन्तः खलु भाग्यवन्तः (ग) ॥२५१॥

—शङ्कराचार्य—यतिपञ्चकम् ।

## कं न निहन्ति मृत्युः ।

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
सन्तापयन्ति कमपथ्यभुजं न रोगाः ? ।
कं श्रीर्न मोहयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परितापयन्ति ? ॥२५२॥

—विष्णुशर्मा—हितोपदेशः ।

## कं न वशीकुरुते भुवि रामा ।

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥२५३॥

—भर्तृहरि—शृङ्गारशतकम् ।

## कं बलवन्तं न बाधते शीतम् ।

कं संजघान कृष्णः का शीतलवाहिनी गङ्गा ।
के दारपोषणरताः कं बलवन्तं न बाधते शीतम् (घ) ॥२५४॥

---

(क) देहादिभावं देहस्य शरीरस्य आदिभावं सुखासक्तिवासनां परिवर्त्तयन्तः परित्यजन्त इत्यर्थः ।

(ख) अन्तम् अवसानं न, मध्यं मध्यदशां न, बहिः बाह्यं विषयञ्च पुत्रकलत्रादिरूपं न स्मरन्तः न चिन्तयन्तः इत्यर्थः ।

(ग) कौपीनवन्तः वसनखण्डपरिधायिनः योगिन इति भावः भाग्यवन्तः सुखिन इति भावः ।

(घ) अत्रोत्तरम्—'कंसं जघान कृष्णः काशीतलवाहिनी गङ्गा ।
केदारपोषणरताः कंबलवन्तं न बाधते शीतम्' ॥

## कं यामि शरणम् ।

परित्यक्ता देवा विविधविधिसेवाकुलतया
मया पञ्चाशीतेरधिकमुपनीते च वयसि ।
इदानीं मे मातस्तव यदि कृपा नापि भविता
निरालम्बो लम्बोदरजननि ! कं यामि शरणम् (क) ॥२५५॥

—शङ्कराचार्य—देव्यपराधक्षमापनस्तोत्रम् ।

## कः—कस्य—कः—कस्य ।

कोऽर्थान्प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तंगताः ?
स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ? ।
कः कालस्य न गोचरत्वमगमत्कोऽर्थी गतो गौरवं ?
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? ॥२५६॥

—विष्णुशर्मा—पञ्चतन्त्रम् ।
—कालिदास—षड्रत्नम् वा द्वा० पु० ।

## कः कालं लङ्घितुं क्षमः ।

ब्रह्मा विष्णुदिने याति विष्णू रुद्रस्य वासरे ।
ईश्वरस्य तथा सोऽपि कः कालं लङ्घितुं क्षमः ॥२५७॥

## कः कृष्णेन हतः रिपुः ।

किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा ।
पूजायां किं पदं कोऽग्निः कः कृष्णेन हतः रिपुः (ख) ॥२५८॥

—धर्मदास—विदग्धमुखमण्डनम् ।

---

(क) पाठान्तरम्—'शिशौ नासीद्वाक्यं जननि ! तव मन्त्रं प्रजपितुं
किशोरे विद्यायां विषमविषये तिष्ठति मनः ॥
इदानीं भीतोऽहं महिषगलघण्टाघनरवा-
न्निरालम्बो लम्बोदरजननि ! कं यामि शरणम्' ॥

(ख) अत्रोत्तरं कंसासुरः । कं जलमिति प्रथमस्य, सा लक्ष्मीरिति द्वितीयस्य, सु इति तृतीयस्य, रः अग्निरिति चतुर्थस्य, कंसासुर इति पञ्चमस्य ।

## कः—केन—कः ।

केनाञ्जितानि नयनानि मृगाङ्गनानां
को वा करोति रुचिराङ्गरुहान्मयूरान् ।
कश्चोत्पलेषु दलसंनिचयं करोति
को वा करोति विनयं कुलजेषु पुंसु ॥२५९॥

## कः केन शोच्यते ।

एकेऽद्य प्रातरपरे पश्चादन्ये पुनः परे ।
सर्वे निःसीम्नि संसारे यान्ति कः केन शोच्यते ॥२६०॥

—क्षेमेन्द्रस्य ।

## कः कौ के कं कौ कान् ।

कः कौ के कं कौ कान्
हसति च हसतो हसन्ति हरिणाक्ष्याः ।
अधरः पल्लवमङ्घ्री हंसौ कुन्दस्य कोरकान्दन्ताः (क) ॥२६१॥

## कः परः प्रियवादिनाम् ।

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥२६२॥

—चाणक्यशतकम् ।

## कः शब्दस्तुल्यवाचकः ।

विष्णोः का वल्लभा देवी लोकत्रितयपावनी ।
वर्णावाद्यन्तयोर्दत्त्वा कः शब्दस्तुल्यवाचकः (ख) ॥२६३॥

---

(क) हरिणाक्ष्याः कः कं हसति—अधरः पल्लवं हसति, कौ कौ हसतः—अङ्घ्री हंसौ हसतः, के कान् हसन्ति—दन्ताः कुन्दस्य कोरकान् हसन्ति ।

(ख) अत्रोत्तरम्—'समानः', मा=लक्ष्मीः, समानः=तुल्यः ।

## कः संरक्षेद्विमुखे हरौ ।

त्रैलोक्ये प्रतिकूलेऽपि का भीतिः सदये हरौ ।
त्रैलोक्येऽप्यनुकूले कः संरक्षेद्विमुखे हरौ ॥२६४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## काःस्मेरवक्त्रसुभगास्तरणिप्रभाभिः ।

मेघात्यये भवति किं सुभगावगाहं
का वा विडम्बयति चारणमल्लवेश्याः ।
दुर्वारवीर्यविभवस्य रणे भवेत्कः
काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः (क) ॥२६५॥

—धर्मदास—विदग्धमुखमण्डनम् ।

## क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ।

विजेतव्या लङ्का चरणतरणीयो जलनिधि—
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥२६६॥

रथस्यैकं चक्रं भुजगयमिताः सप्ततुरगा
निरालम्बो मार्गश्चरणरहितः सारथिरपि ।
रविर्गच्छत्यन्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥२६७॥

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥२६८॥

---

(क) अत्रोत्तरं 'सरोजराजयः' । सरस्तडाग इति प्रथमस्य, जरा वयोहानिरिति द्वितीयस्य; जय इति तृतीयस्य, तरणिप्रभाभिः सूर्यकिरणैः काः स्मेरवक्त्रसुभगाः विकसद्वदनमनोहारिण्यः भवन्तीति शेषः? सरोजराजयः कमलश्रेणय इति चतुर्थपादस्य ।

विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो
वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः ।
तथापि त्रैलोक्यं जयति मदनो देहरहितः
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥२६९॥

घटो जन्मस्थानं मृगपरिजनो भूर्जवसनो
वने वासः कन्दाशनमपि च दुःस्थं वपुरिदम् ।
तथाप्येकोऽगस्त्यः सकलमपिबद्वारिधिजलं
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥२७०॥

## क्रूरकर्मा विधाता ।

कुत्रायोध्या क्व रामो दशरथवचनाद्दण्डकारण्यमागा—
त्क्वासौ मारीचनामा कनकमयमृगः कुत्र सीतापहारः ।
सुग्रीवे राममैत्री क्व जनकतनयान्वेषणे प्रेषितोऽहं
योऽर्थोऽसंभावनीयस्तमपि घटयते क्रूरकर्मा विधाता (क) ॥२७१॥

## क्रोडे कृतापि यतते बहिरेव गन्तुम् ।

हस्ते धृतापि शयने विनिवेशितापि
क्रोडे कृतापि यतते बहिरेव गन्तुम् ।
मन्यामहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥२७२॥

—भानुदत्तमिश्र—रसमञ्जरी ।

## क्रोधाद्भवति सम्मोहः ।

## क्रोधो वैवस्वतो राजा ।

दृश्यताम्—'आशा वैतरणी नदी' इति ।

---

(क) हनुमदुक्तिरियम् ।

## क्व च नाकपुरी क्व च मोक्षपदम् ।

द्विजराजमुखी मृगराजकटिर्गजराजविराजितमन्दगतिः ।
यदि चुम्बति वक्त्रमुपेत्य मुदा क्व च नाकपुरी क्व च मोक्षपदम् (क) ॥२७३॥

## क्व त्वं क्वाहं क्व च जलपातः ।

गर्जसि मेघ ! न यच्छसि तोयं चातकपक्षी व्याकुलितोऽहम् ।
दैवादिह यदि दक्षिणवातः क्व त्वं क्वाहं क्व च जलपातः (ख) ॥२७४॥

—पूर्वचातकाष्टकम् ।

## क्व भ्रातश्चलितोऽसि ।

क्व भ्रातश्चलितोऽसि ? वैद्यकगृहं किन्तत्र ? शान्त्यै रुजां
किन्ते नास्ति गृहे सखे ! प्रियतमा सर्वान्गदान्हन्ति या ? ।
वातश्चेत्कुचकुम्भमर्दनवशात्पित्तश्च वक्त्रामृता—
च्छ्लेष्माणं विनिहन्ति हन्त ! सुरतव्यापारकेलिश्रमात् ॥२७५॥

—कालिदास—शृङ्गारतिलकम् ।

## क्व यामः किं कुर्मः ।

पुरो रेवापारे गिरिरतिदुरारोहशिखरो
धनुष्पाणिः पश्चाच्छबरनिकरो धावति पुनः ।
सरः सव्येऽसव्ये दवदहनदाहव्यतिकरः
क्व यामः ! किं कुर्मो ! हरिणशिशुरेवं विलपति ॥२७६॥

—वररुचि—नीतिरत्नम् ।

---

(क) पाठान्तरम्—'यदि सा प्रमदा हृदये वसति क्व जपः क्व तपः क्व समाधिविधिः'।

(ख) यावज्जीवनम् अर्थिनः कामः पूरयितव्यः, जीवने गते सर्वं नश्यतीति भावः। अर्थात् यावज्जीवन अर्थियों की प्रार्थना पूर्ण करना उचित है, इस कारण कि जीवन गत होने पर सब कुछ नष्ट हो जाता है।

वशीकर्त्तुं शक्यो न हि न हि मनागिन्द्रियगणो
गुणोऽभून्नैकोऽपि प्रविशति सदा दोषनिचयः ।
क्व यामः ! किं कुर्मो ! हरि हरि (क) मयीशोप्यकरुणः
स्ववासं श्रीवृन्दावन ! वितर मानन्यगतिकम् (ख) ॥२७७॥

—वृन्दावनशतकम् ।

न भिक्षा दुर्भिक्षे मिलति दुरवस्थाः कथमृणं
लभन्ते कर्माणि द्विजपरिवृढान्कारयतु कः ।
अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते
क्व यामः ! किं कुर्मो ! गृहिणि गहनो जीवनविधिः (ग) ॥२७८॥

## क्वचित्—क्वचित्—क्वचित् ।

क्वचिद्दन्तालको मूर्खः क्वचिद्गानवती सती ।
क्वचित्काणो भवेत्साधुः खल्वाटो निर्धनः क्वचित् ॥२७९॥

## क्वचित्पुण्येऽरण्ये ।

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः ॥२८०॥

—भर्त्तृहरि—वैराग्यशतकम् ।

---

(क) 'हरि हरि' इति खेदे।
(ख) मानन्यगतिकं अनन्यगतिकं मामित्यर्थः ।
(ग) द्विजपरिवृढान् श्रेष्ठब्राह्मणान् कर्माणि कः कारयतु अर्थात् न कोऽपि सेवायां नियुक्तान् करोति। दुरवस्थाः ऋणं कथं लभन्ते। असौ ग्रहपतिः सूर्यः ग्रासम् अदत्त्वैव अस्तम् अयते गच्छति। अर्थात् श्रेष्ठ ब्राह्मणों से काम कौन करावे। उन्हें कोई नौकर भी नहीं रखता है। हमको ग्रास दिये बिना ही सूर्य अस्त हो रहा है।
अनेन श्लोकेन दारिद्र्यवर्णनम् व्यज्यते।

क्षणिकमिति समस्तं विद्धि संसारवृत्तम् ।

गगननगरकल्पं सङ्गमं वल्लभानां
जलदपटलतुल्यं यौवनं वा धनं वा ।
स्वजनसुतशरीरादीनि विद्युच्चलानि
क्षणिकमिति समस्तं विद्धि संसारवृत्तम् ॥२८१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

क्षते प्रहारा निपतन्त्यभीक्ष्णम् ।

क्षमया किं न साध्यते ।

क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः (क) ॥२८२॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

क्षमा हि परमं बलम् ।

सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥२८३॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

क्षमातले न श्रुतं न वा दृष्टम् ।

गुणवानपि चिरजीवी सधनो विनतः सती विदग्धा स्त्री ।
हरिभक्तोऽपि धनाढ्यः क्षमातले न श्रुतं न वा दृष्टम् ॥२८४॥

क्षमारूपं तपस्विनाम् ।

कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥२८५॥

—चाणक्यशतकम् ।

---

(क) पाठान्तरम्—'क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमा वशीकृतिर्लोके क्षमया किं न सिध्यति' ॥
दृश्यताम्—'अतृणे पतितो वह्निः' इति ।

## क्षमाशस्त्रं करे यस्य ।

क्षमाशस्त्रं करे यस्य (क) दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥२८६॥

## क्षान्तिश्चेत्कवचेन किम् ।

दृश्यताम्—'किं—किं—किम्' इति ।

## क्षितीशानां भयप्रदः ।

दृश्यताम्—'अनिष्टदः क्षितीशानाम्' इति ।

## क्षीणा नरा निष्करुणा भवन्ति ।

## क्षीणे कस्यास्ति गौरवम् ।

वनानि दहतो वह्नेः (ख) सखा भवति मारुतः ।
स एव दीपनाशाय क्षीणे कस्यास्ति गौरवम् ॥२८७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## क्षुधातुराणां न बलं न तेजः ।

---

# ख

## खगचञ्चूपुटद्रोणीपूरणे वद कः क्षमः ।

धाराधर ! धरा वारिधाराभिः परिपूरिता ।
खगचञ्चूपुटद्रोणीपूरणे वद कः क्षमः ॥१॥

---

(क) 'क्षमाधनुः करे यस्य' इति पाठान्तरम् ।
दृश्यताम्—'अतृणे पतितो वह्निः' इति ।
(ख) पाठान्तरम्—'वनं दहति दावाग्निः' इति ।

### खद्योतमुद्योतयसीत्यसह्यम् ।

पिकं न मूकीकुरुषे पयोद ! भेकञ्च सेकैर्मुखरीकरोषि ।
किन्तु त्वमिन्दोरपिधाय विम्बं खद्योतमुद्योतयसीत्यसह्यम् ॥२॥

### खलस्य साधोर्विपरीतमेतत् ।

विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥३॥

—भवभूति—गुणरत्नम् ।

### खलः केन निवार्यते ।

सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः ।
मन्त्रौषधिवशः सर्पः खलः केन निवार्यते ॥४॥

—चाणक्यशतकम् ।

### खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो विल्वमात्राणि पश्यन्नपि न पश्यति ॥५॥

—व्यासस्य ।

### खल्वाटो निर्धनः क्वचित् ।

दृश्यताम्—'क्वचित्—क्वचित्—क्वचित्' इति ।

### खादेत क्षुधार्त्ता भुजगी स्वमण्डम् ।

---

## ग

### गगनतलरत्नं दिनमणिः ।

### गगननगरकल्पं सङ्गमं वल्लभानाम् ।

दृश्यताम्—'क्षणिकमिति समस्तम्' इति ।

## गगने नीलतादिवत् ।

देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि ।
अध्यासतेऽविवेकेन गगने नीलतादिवत् ॥१॥

—शङ्कराचार्य—आत्मबोधः ।

## गच्छन्त्यपुनरावृत्तिम् ।

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥२॥

—भगवद्गीता ।

## गजभुक्तकपित्थवत् ।

आजगाम यदा लक्ष्मीर्नारिकेलफलाम्बुवत् ।
निर्जगाम यदा लक्ष्मीर्गजभुक्तकपित्थवत् (क) ॥३॥

## गणयति गगने गणकः

गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः ।
विविधभुजङ्गक्रीडासक्तां गृहिणीं न जानाति (ख) ॥४॥

## गणिकागणकौ समानधर्मौ ।

गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ ।
जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ (ग) ॥५॥

## गणिकाभिश्च का प्रीतिः ।

दृश्यताम्—'का प्रीतिर्भिक्षुकैः सह:' इति ।

---

(क) कपित्थान्तर्गतः कीटः गज इत्यभीधीयते ।
(ख) हास्यरसात्मकः श्लोकोऽयम् । भुजङ्गः जार इत्यर्थः ।
(ग) हास्यरसात्मकः श्लोकोऽयम् ।

## गतयो भिन्नपथा हि देहिनाम् ।

रुदता कुत एव सा पुनर्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥६॥

—कालिदास—रघुवंशम् ।

## गतशोको न कर्त्तव्यः ।

## गतस्य शोचनं नास्ति ।

कृतस्य करणं नास्ति मृतस्य मरणं तथा ।
गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥७॥

—घटकर्पर—नीतिसारम् ।

## गतं तारुण्यमौक्तिकम् ।

अधः पश्यसि किं बाले ! तव किं पतितं भुवि ।
रे रे मूढ ! न जानासि गतं तारुण्यमौक्तिकम् ॥८॥

## गतं न शोचामि कृतं नु मन्ये ।

दृश्यताम्—'किं कारणं भोज ! भवामि मूर्खः' इति ।

## गतं मे जन्माग्र्यं न दशरथजन्मा परिगतः ।

चिरं ध्याता रामा क्षणमपि न रामप्रतिकृतिः
परं पीतं रामाधरमधु न रामाङ्घ्रिसलिलम् ।
नता रुष्टा रामा यदरचि न रामाय विनति—
र्गतं मे जन्माग्र्यं न दशरथजन्मा परिगतः ॥६॥

## गतागतं कामकामा लभन्ते ।

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥१०॥

—भगवदगीता ।

## गतिरिह नान्या यतस्तस्य ।

यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् ।
तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य ॥११॥
—उत्तरचातकाष्टकम् ।

## गन्तव्यं चात्मनः पथम् ।

सङ्कटे न च गन्तव्यं विषमे न कदाचन ।
महापथे न गन्तव्यं गन्तव्यं चात्मनः पथम् (क) ॥१२॥

## गन्धस्तेषां पृथक् पृथक् ।

भवत्येकस्थले जन्म गन्धस्तेषां पृथक् पृथक् ।
उत्पलस्य मृणालस्य मत्स्यस्य कुमुदस्य च ॥१३॥

## गर्दभी चाप्सरायते ।

अप्राप्तयौवना नारी न कामाय न शान्तये ।
संप्राप्ते षोडशे वर्षे गर्दभी चाप्सरायते ॥१४॥

## गर्दभः किमु हयो भवेत्क्वचित् ।

बोधितोऽपि बहुसूक्तविस्तरैः
किं खलो जगति सज्जनो भवेत् ।
स्नापितोऽपि बहुशो नदीजलै—
र्गर्दभः किमु हयो भवेत्क्वचित् ॥१५॥

## गले रवं गानम् ।

## गहना कर्मणो गतिः ।

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः (ख) ॥१६॥
—भगवद्गीता ।

---

(क) 'परस्त्री सङ्कटं प्रोक्तं रण्डा च विषमं पथम् ।
वेश्या महापथं प्रोक्तं स्वपर्यायः पिता श्रुतः' ॥
(ख) विहितकर्म अविहितकर्म कर्मत्यागश्च । एतेषां मध्ये यदन्तरं तत् बोद्धव्यम् ।

**गाढं मनो धारय कृष्णपादम् ।**

यथा निशीथे स्तनितं निशम्य
शिशुः समालिङ्गति मातृवक्षः ।
श्रुत्वा तथा भीमभवार्त्तनादं
गाढं मनो धारय कृष्णपादम् ॥१७॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

**गानरसिकस्तद्भेक मूको भव ।**

अस्मिन्पद्मपरागपिञ्जरपयःपूर्णे नु नीराशये
गुञ्जन्तो मधुरं हरन्ति मधुपाश्चित्तं नृणां शृण्वताम् ।
नैतत्पल्वलमङ्कपङ्किलजलप्रोद्भूतकुम्भीकुलं
न श्रोतास्ति तवेह गानरसिकस्तद्भेक मूको भव ॥१८॥

**गिरौ वर्षति माधवः ।**

लक्ष्मीर्लक्षणहीनेषु कुलहीने सरस्वती ।
कुपात्रे रमते नारी गिरौ वर्षति माधवः ॥१९॥

**गुणलुब्धाः स्वयमेव सम्पदः ।**

दृश्यताम्—'अविवेकः परमापदां पदम्' इति ।

**गुणवानपि हन्त ! हास्यतामेति ।**

अस्थानस्थितिहेतोर्गुणवानपि हन्त ! हास्यतामेति ।
जरतीस्तनावलम्बी ननु रमणीयो न शोभते हारः ॥२०॥

**गुणवान्सुचिरस्थायी देवोऽपि न हि जायते ।**

गुणवान्सुचिरस्थायी देवोऽपि न हि जायते ।
तिष्ठत्येकां निशां चन्द्रः श्रीमान्सम्पूर्णमण्डलः ॥२१॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## गुणवेत्तारः सुदुर्लभा जगति ।

गुणिनोऽपि सन्ति बहवो गुणवेत्तारः सुदुर्लभा जगति ।
हिमकरकररसरसने रसनाचतुराश्चकोरका एव ॥२२॥

## गुणा गुणज्ञेषु गुणा भवन्ति ।

गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥२३॥

—भवभूति—गुणरत्नम् ।

## गुणा गुणेषु वर्त्तन्ते ।

तत्त्ववित्तु महावाहो ! गुणकर्मविभागयोः !
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते (क) ॥२४॥

—भगवद्गीता ।

## गुणा दश स्नानशीलं भजन्ते ।

गुणा दश स्नानशीलं भजन्ते वलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च श्री सौकुमार्यं प्रवराश्च नार्यः ॥२५॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) तु किन्तु हे महावाहो ! गुणकर्मविभागयोः गुणेभ्यः आत्मनः विभागः कर्मभ्यश्च आत्मनः विभागः एतयोः तत्ववित् स्वरूपवित् गुणाः इन्द्रियाणि गुणेषु विषयेषु वर्त्तन्ते न तु अहं इति मत्वा न सज्जते कर्त्तृत्वाभिनिवेशं न करोति इति भावः ।
भावार्थ यह है कि आत्मा से गुण और कर्म पृथक् हैं, इन दोनों का स्वरूप जानने वाला, इन्द्रियगण ही विषयों में प्रवृत्त होते हैं यह जान कर स्वयं कर्तृत्वाभिमान नहीं करता है ।

—कालीप्रसन्न सिंह का बङ्गानुवाद ।

The qualities as sense-organs move amid the qualities as sense-objects. A suggested reading is: "The functions dwell in the propensities." **गुणकर्मविभागयोः** (*a*) Shankara says: "of guna-vibhaga and karma-vibhaga"=of the *class* of gunas and the *class* of Karmas; or (*b*) vibhaga=apportionment, arrangement, the arrangements of guṇas and of Karmas, or the *relations* of them.——*Bhagavadgita by Dr. Annie Besant.*

## गुणाद्गुरुत्वमायाति ।

## गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः ।

गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः ।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥२६॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## गुणायन्ते दोषाः सुजनवदने ।

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते किमिति जगतां विस्मयपदम् ।
यथा जीमूतोऽयं लवणजलधेर्वारि मधुरं
फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ॥२७॥

—भवभूति—गुणरत्नम् ।

## गुणाश्च षण्मितभुक्तं भजन्ते ।

गुणाश्च षण्मितमुक्तं भजन्ते आरोग्यमायुश्च बलं सुखं च ।
अनाविलं चास्य भवत्यपत्यं न चैनमद्यून इति क्षिपन्ति ॥२८॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## गुणाः सर्वत्र पूज्यन्ते ।

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।
वासुदेवं नमस्यन्ति वसुदेवं न मानवाः (क) ॥२९॥

गुणाः सर्वत्र पूज्यन्ते दूरेऽपि वसतां सताम् ।
केतकीगन्धमाघ्रातुं स्वयं गच्छन्ति षट्पदाः ॥३०॥

गुणाः सर्वत्र पूज्यन्ते न महत्योऽपि सम्पदः ।
पूर्णेन्दुः किं तथा वन्द्यो निष्कलङ्को यथा कृशः ॥३१॥

---

(क) पाठान्तरम्—'वसुदेवं परित्यज्य वासुदेवमुपासते' ।

## गुणाः स्थाने पूज्याः ।

उभौ शुक्लौ पक्षौ भुवि वियति चावारितगतिः
सदा मीनं (क) भुङ्क्ते वसति सकलस्थाणुशिरसि (ख) ।
बके सर्वश्चान्द्रो विलसति गुणः किञ्चिदधिको
गुणाः स्थाने पूज्या नरवर ! न तु स्थानविकलाः (ग) ॥३२॥

## गुणिनि गुणज्ञो रमते ।

गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः ।
अलिरेति वनात्कमलं न हि भेकस्त्वेकवासोऽपि ॥३३॥

## गुणी गुणं वेत्ति न वेत्ति निर्गुणः ।

गुणी गुणं वेत्ति न वेत्ति निर्गुणो
बली बलं वेत्ति न वेत्ति निर्बलः ।
पिको वसन्तस्य गुणं न वायसः
करी च सिंहस्य बलं न मूषिकः ॥३४॥

—भवभूति—गुणरत्नम् ।

## गुणेन स्पृहणीयः स्यान्नरः ।

गुणेन स्पृहणीयः स्यान्न रूपेण युतो नरः ।
सौगन्ध्यहीनं नादेयं पुष्पं कान्तमपि क्वचित् ॥३५॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## गुणैरुत्तुङ्गतां याति ।

गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः ।
प्रासादशिखरस्थोऽपि काकः किं गरुडायते ॥३६॥

---

(क) मत्स्यान्; (पक्षे) मीनराशिम् ।
(ख) तरुशैलादयः; (पक्षे) शिवः ।
(ग) पाठान्तरम्—'उभौ श्वेतौ पक्षौ चरति गगनेऽवारितगतिः
सदा मीनं भुङ्क्ते वसति सकलः स्थाणुशिरसि ।
वके चान्द्रः सर्वो गुणसमुदयः किञ्चिदधिको
गुणाः स्थाने मान्या नरवर ! न तु स्थानरहिताः' ॥

### गुणैर्ज्येष्ठत्वमुच्यते ।

न हि ज्येष्ठस्य ज्येष्ठत्वं गुणैर्ज्येष्ठत्वमुच्यते ।
केतकीगुरुपत्रेभ्यो लघुपत्रस्य गौरवम् (क) ॥३७॥

### गुणैर्विहीना बहु जल्पयन्ति ।

सम्पूर्णकुम्भो न करोति शब्द—
मर्धो घटो घोषमुपैति नूनम् ।
विद्वान्कुलीनो न करोति गर्वं
गुणैर्विहीना बहु जल्पयन्ति ॥३८॥

### गुणैः पूजा भवेत्पुंसाम् ।

गुणैः पूजा भवेत्पुंसां नैकस्माज्जायते कुलात् ।
चूडारत्नं शशी शम्भोर्यानमुच्चैःश्रवा हरेः ॥३९॥

—कुसुमदेव—दृष्टान्तशतकम् ।

### गुणोऽपि दोषतां याति ।

गुणोऽपि दोषतां याति वक्रीभूते विधातरि ।
सानुकूले पुनस्तस्मिन्दोषोऽपि च गुणायते ॥४०॥

### गुणो गुणान्तरापेक्षी ।

गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे ।
स्वभावरम्यं लावण्यं तारुण्येन मनोहरम् ॥४१॥

—कुसुमदेव—दृष्टान्तशतकम् ।

### गुरवो बहवः सन्ति ।

गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
दुर्लभः स गुरुर्लोके शिष्यचित्तापहारकः ॥४२॥

---

(क) पाठान्तरम्—'श्रेष्ठता जन्मना नैव गुणैः श्रेष्ठत्वमुच्यते ।
केतकीवरपत्रेभ्यो लघुपत्रस्य गौरवम्' ॥

## गुरवः कवयः कलाधराः सर्वे ।

गुरुरेकः कविरेकः सदसि मघोनः कलाधरोऽप्येकः ।
अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे (क) ॥४३॥

## गुरुः—गुरुः—गुरुः ।

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥४४॥

—चाणक्यशतकम् ।

## गृहागमे दुर्गतयः षडेते ।

कुले कलङ्कः कवले कदन्नता सुतः कुबुद्धिर्भवने दरिद्रता ।
रुजः शरीरे कलहप्रिया प्रिया गृहागमे दुर्गतयः षडेते ॥४५॥

## गृहासक्तस्य नो विद्या ।

गृहासक्तस्य नो विद्या नो दया मांसभोजिनः ।
द्रव्यलुब्धस्य नो सत्यं स्त्रैणस्य न पवित्रता ॥४६॥

## गृहिणि गहनो जीवनविधिः ।

दृश्यताम्—'क्व यामः किं कुर्मः' इति ।

## गृहिणी गृहमुच्यते ।

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते (ख) ॥४७॥

## गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ।

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥४८॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥४९॥

—भगवद्गीता ।

---

(क) गुरुः=बृहस्पतिः; कविः=शुक्रः; मघोनः=इन्द्रस्य; कलाधरः=चन्द्रः। राजसभा-वर्णनमित्यनेन श्लोकेन ध्वन्यते।

(ख) पाठान्तरम्—'तया हि सहितः सर्वान्पुरुषार्थान्समश्नुते' इति।

## गृहे च गृहलक्ष्मीश्च ।

स्वर्गे च स्वर्गलक्ष्मीश्च राजलक्ष्मीश्च राजसु ।
गृहे च गृहलक्ष्मीश्च मर्त्यानां गृहिणां तथा ॥५०॥
—ब्रह्मवैवर्त्तपुराणम् ।

## गृहे रोदिति तत्पतिः ।

सुवर्णालङ्कृता कन्या हेमालङ्कारवर्जिता ।
सा कन्या विधवा जाता गृहे रोदिति तत्पतिः (क) ॥५१॥

## गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।

## गेयं गीतानामसहस्रम् ।

गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम् ।
नेयं सज्जनसङ्गे चित्तं देयं दीनजनाय च वित्तम् ॥५२॥
भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते ।
प्राप्ते सन्निहिते मरणे न हि न हि रक्षति डुकृञ् करणे ॥५३॥
—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

## गोरसं—गोरसं—गोरसम् ।

विना गोरसं[1] को रसो भोजनानां
विना गोरसं[2] को रसो भूपतीनाम् ।
विना गोरसं[3] को रसः कामिनीनां
विना गोरसं[4] को रसः पण्डितानाम् (ख) ॥५४॥

## गोविन्दमादिपुरुषं तमहं भजामि ।

यस्य प्रभाप्रभवतो जगदण्डकोटि—
कोटिष्वशेषवसुधादिविभूतिभिन्नम् ।
तद्ब्रह्म निष्कलमनन्तमशेषभूतं
गोविन्दमादिपुरुषं तमहं भजामि ॥५५॥

---

(क) सुष्ठु वर्णेन कान्त्यालङ्कृता, सा विद्युदित्यर्थः, विधवा विविधा धवाः पतयो यस्याः सा, जारिणीत्यर्थः। कूटश्लोकोऽयम्।

(ख) [1] घृतम्, [2] करं राजस्वमित्यर्थः, [3] इन्द्रियरसं, [4] वाणीरसं।

यस्यैकनिःश्वसितकालमथावलम्ब्य
जीवन्ति लोमबिलजा जगदण्डनाथाः ।
विष्णुर्महान्स इह यस्य कलाविशेषा
गोविन्दमादिपुरुषं तमहं भजामि ॥५६॥

चैतन्यचरितामृते ब्रह्मसंहितायाम् ।

## गौरी चिरं पातु वः ।

चापल्यादिह वः सदास्मि विधुरा यास्यामि तातालयं
तातस्ते जनयित्रि ! को गिरिगणस्येशो हि तातो मम ।
मातस्त्वं किमहो गिरीशतनयेत्याभाषमाणे गुहे
प्रोन्मीलन्मृदुमञ्जुलस्मितमुखी गौरी चिरं पातु वः ॥५७॥

## गौरीमुखं चुम्बति वासुदेवः ।

का शम्भुकान्ता किमु चन्द्रकान्तं कान्तामुखं किं कुरुते भुजङ्गः ।
कःश्रीपतिः का विषमा समस्या गौरीमुखं चुम्बति वासुदेवः ॥५८॥

का लोकमाता किमु देहमुख्यं रतेः किमादौ कुरुते मनुष्यः ।
को दैत्यहन्ता वद वै क्रमेण गौरीमुखं चुम्बति वासुदेवः ॥५९॥

का शैलपुत्री किमु नेत्ररम्यं शुकार्भकः किं कुरुते फलानि ।
मोक्षस्य दाता स्मरणेन को वा गौरीमुखं चुम्बति वासुदेवः (क) ॥६०॥

## ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ।

झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते !
ग्रहणसमयवेला वर्त्तते शीतरश्मेः ।
तदिह विमलकान्तिं वीक्ष्य नूनं स राहु—
र्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय (ख) ॥६१॥

—कालिदास—शृङ्गारतिलकम् ।

---

(क) अत्रोत्तरम्—गौरीति प्रथमस्य, मुखमिति द्वितीयस्य, चुम्बतीति तृतीयस्य, वासुदेव इति चतुर्थस्य, तत्र योजना गौरीमुखं चुम्बति वासुदेव इति समस्या। भुजङ्गो जार इत्यर्थः।

(ख) कश्चित् नायकः काञ्चित् नायिकां प्रति आह।

ग्रीष्मे मदश्च मदनश्च विवर्धयन्ति ।

अच्छाच्छचन्दनरसार्द्रकरा (क) मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ।
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदश्च मदनश्च विवर्धयन्ति ॥६२॥

—भर्तृहरि—शृङ्गारशतकम् ।

---

## घ

घटेत शातोदरि ! कः सहायः ।

तमोजटाले हरिदन्तराले काले निशायां तव निर्गतायाः ।
तटे नदीनां निकटे वनानां घटेत शातोदरि ! कः सहायः ॥ १॥

—भानुदत्तमिश्र—रसमञ्जरी ।

घूर्णन्मूर्धा बत नतशिरा व्रीडया निर्जगाम ।

दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात ।
नास्मिन्गन्धो न च मधुकणा नास्ति तत्सौकुमार्यं
घूर्णन्मूर्धा बत नतशिरा व्रीडया निर्जगाम (ख) ॥२॥

—भ्रमराष्टकम् ।

घृतकुम्भसमा नारी ।

घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्माद्घृतञ्च वह्निञ्च नैकत्र स्थापयेद्बुधः ॥३॥

—चाणक्यशतकम् ।

---

(क) अच्छाच्छैरतिविशदैः चन्दनरसैः आर्द्रकराः इत्यर्थः ।

(ख) यथा कोऽपि कमपि समृद्धं जनं विज्ञाय तत्र गत्वा हताशः तस्मान्निवर्त्तते तद्वदिति ध्वन्यते । भावार्थ यह है कि किसी समृद्धिशाली के मकान पर कोई दरिद्र अर्थ प्रार्थना के अभिप्राय से गया तो अपूर्णमनोरथ होने के कारण हताश होकर जब वहाँ से लौटा उस समय के अनुकूल यह उसका आक्षेपवाक्य है ।

## घृतस्य धारा पतिता न जाने ।

सञ्चारिणी काञ्चनवल्लरीव विद्युल्लता वा पतिता नभस्तः ।
घृतस्य धारा पतिता न जाने दिवं गता वाथ भुवं गता वा ॥४॥

## घृतं न श्रूयते कर्णे ।

## घ्राणं वेत्ति न लोचनम् ।

दृश्यताम्—'गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः' इति ।

---

# च

## चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च ।

सुखमापतितं सेव्यं दुःखमापतितं तथा (क) ।
चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥१॥

—विष्णुशर्मा—हितोपदेशः ।

## चक्री त्रिशूली न हरो न विष्णुः ।

चक्री त्रिशूली न हरो न विष्णु—
र्महान्बलिष्ठो न च भीमसेनः ।
स्वच्छन्दचारी नृपतिर्न योगी
सीतावियोगी न च रामचन्द्रः (ख) ॥२॥

## चक्रं भ्रमति मस्तके ।

दृश्यताम्—'अतिलोभो न कर्त्तव्यः' इति ।

---

(क) पाठान्तरम्—'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं' इति ।
(ख) अत्रोत्तरम्—वृषभः ।

## चक्रः सेव्यो नृपः सेव्यो नो सेव्यः केवलो नृपः।

## चक्षुःपूतं न्यसेत्पादम्।

## चञ्चलं हि मनः कृष्ण !

चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्॥३॥

—भगवद्गीता।

## चतुर्थे किं करिष्यति।

प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्।
तृतीये नार्जितं पुण्यं (क) चतुर्थे किं करिष्यति॥४॥

—चाणक्यशतकम्।

## चतुर्थेनोपपद्यते।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थेनोपपद्यते॥५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## चतुर्विधा भजन्ते माम्।

चतुर्विधा भजन्ते मां जनः सुकृतिनोऽर्जुन !।
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ !॥६॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥७॥

—भगवद्गीता।

## चन्दनं न वने वने।

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे।
साधवो न हि सर्वत्र चन्दनं न वने वने॥८॥

—चाणक्यशतकम्।

---

(क) 'तृतीये न तपस्तप्तं' इति पाठान्तरम्।

## चन्दनं न विषायते ।

विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः ।
आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥९॥

## चन्द्रायते शुक्लरुचापि हंसः ।

चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥१०॥

## चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥११॥

—चाणक्यशतकम् ।

## चलाचलमिदं सर्वम् ।

दृश्यताम्—'कीर्तिर्यस्य स जीवति' इति ।
'कीर्त्तिर्धर्मश्च निश्चलः' इति ।

## चारैः पश्यन्ति राजानः ।

## चार्वाकस्योक्तिः ।

अहिंसा परमो धर्मः पापमात्मप्रपीडनम् ।
अपराधीनता मुक्तिः स्वर्गोऽभिलषिताशनम् ॥१२॥
स्वदारपरदारेषु यथेच्छं विहरेत्सदा ।
गुरुशिष्यप्रणालीश्च त्यजेत्स्वहितमाचरन् ॥१३॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

## चित्तस्य शुद्धये कर्म ।

चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुसिद्धिर्विचारेण न किञ्चित्कर्मकोटिभिः ॥१४॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## चित्ते सदोदेतु स मे मुरारिः ।

पापापहारी नरकान्तकारी निस्तारकारी यमभीतिहारी ।
संसारवारांनिधिकर्णधारी चित्ते सदोदेतु स मे मुरारिः ॥१५॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## चित्रमत्रमहतामुदारता ।

चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासितः ।
सोऽपि पूरयति भूयसाम्भसा चित्रमत्र महतामुदारता (क) ॥१६॥
—पूर्वचातकाष्टकम् ।

## चित्रा गतिः कर्मणाम् ।

आहारे शुचिता ध्वनौ मधुरता नीडे पराधीनता
बन्धौ निर्ममता वने रसिकता वाचालता माधवे (ख) ।
यस्यैते गुणराशयः पिकवरं त्यक्त्वा किमेते जना
वन्दन्ते खलु खञ्जनं कृमिभुजं चित्रा गतिः कर्मणाम् ॥१७॥
—हलायुध—धर्मविवेकः ।

## चित्राचन्द्रमसोरिव ।

काप्यभिख्या तयोरासीत् व्रजतोः शुद्धवेशयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥१८॥
—कालिदास—रघुवंशम् ।

## चिदानन्दरूपः शिवोऽहं शिवोऽहम् ।

मनोबुद्ध्यहङ्कारचित्तादि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे ।
न च व्योमभूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥१९॥
अहं प्राणसंज्ञो न च पञ्चवायुर्न वा सप्तधातुर्न वा पञ्चकोषाः ।
न वाक्पाणिपादो न चोपस्थपायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥२०॥

---

(क) महान् जनः स्वल्पं प्रार्थितोऽपि बहु ददातीति भावः।
(ख) माधवे=वसन्ते।

अहं निर्विकल्पो निराकाररूपो विभुर्व्यापी सर्वत्र सर्वेन्द्रियाणाम् ।
न वा बन्धनं नैव मुक्तिर्न भीतिश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥२१॥

—शङ्कराचार्य—निर्वाणषट्कम् ।

## चिन्तय हृदय ! सदा परमेशम् ।

जन्मजरामृतिवारणहेतुं भीमभवाम्बुधितारणसेतुम् ।
एकममृतमजमभयमशेषं चिन्तय हृदय ! सदा परमेशम् ॥२२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## चिन्ता जरा मनुष्याणाम् ।

## चिन्ता नाम गरीयसी ।

चिता चिन्ता द्वयोर्मध्ये चिन्ता नाम गरीयसी ।
चिता दहति निर्जीवं चिन्ता प्राणसमं वपुः (क) ॥२३॥

## चिन्ता बहुतरी तृणात् ।

माता गुरुतरा भूमेः खात्पितोच्चतरस्तथा ।
मनः शीघ्रतरं वाताच्चिन्ता बहुतरी तृणात् ॥२४॥

—महाभारते बनपर्वणि ।

## चिन्ताज्वरो मनुष्याणाम् ।

चिन्ताज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः ।
असौभाग्यं ज्वरः स्त्रीणामश्वानां मैथुनं ज्वरः ॥२५॥

—चाणक्यशतकम् ।

## चिन्तातुराणां न सुखं न निद्रा ।

## चिन्तासमं नास्ति शरीरशोषणं ।

---

(क) पाठान्तरम्—'चिता चिंता समा ह्युक्ता बिन्दुमात्रं विशेषतः ।
सजीवं दहते चिंता निर्जीवं दहते चिता' ॥

## चिरमिह सीदति रोदिति दीनः ।

ध्यायति यस्त्वां भक्त्या हृदये न पतति स पुनः संसृतिनिरये ।
न भजति मुक्तिं भक्तिविहीनश्चिरमिह सीदति रोदिति दीनः ॥२६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## चिरं जीवति वायसः ।

यज्जीव्यते यशोधर्मसहितं तद्धि जीवितम् ।
बलिं कवलयन् क्लिश्यन् चिरं जीवति वायसः ॥२७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## चिह्नमेतन्महात्मनाम् ।

विवेकः सह संयत्या विनयो विद्यया सह ।
प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥२८॥

## चुल्ली चिरं रोदिति ।

मद्‌गेहे मुषकीव मूषकवधूर्मूषीव मार्जारिका
मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः ।
मूर्च्छापन्नशिशूनसून्विजहतः संवीक्ष्य झिल्लीरवै—
र्लूतातन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति (क) ॥२९॥

## चेतस्तु तव सन्निधौ ।

स्मरसि त्वमये बन्धो ! न पुनस्त्वां स्मराम्यहम् ।
स्मरणं चेतसो धर्मश्चेतस्तु तव सन्निधौ (ख) ॥३०॥

## चेतो धुनोति च धिनोति च ।

मन्दस्मितेन मधुराधरपल्लवेन कुम्भोन्नमत्कुचभरेण कृशोदरेण ।
विद्युन्निभाङ्गलतया च विचिन्त्यमाना चेतो धुनोति च धिनोति च चञ्चलाक्षी ॥३१॥

---

(क) दारिद्र्यवर्णनमित्यनेन श्लोकेन ध्वन्यते
(ख) 'चित्तन्तु भवदन्तिके' इति पाठान्तरम् ।

## चेतो ! भज श्रीहरिपादपद्मम् ।

अपारसंसारपयोधिपारं नेतुं यदेका तरणी नराणाम् ।
कीनाशपाशाभयडिण्डिमं तच्चेतो ! भज श्रीहरिपादपद्मम् ।।३२।।

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## चेतः स्वयं यास्यति ।

नायातः सखि ! निर्दयो यदि शठस्त्वं दूति ! किं दूयसे
स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम् ।
पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणै-
रुत्कण्ठार्त्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ।।३३।।

—जयदेव—गीतगोविन्दम् ।

## चैत्रस्य चित्रा गतिः

माध्वीकं सततं पिबन्ति मधुपा माद्यन्ति पुंस्कोकिला
घूर्णन्ते तरवः पतन्ति पथिका मूर्च्छन्ति तद्योषितः ।
दोर्मूलं नयनाम्बुभिर्मृगदृशः सिञ्चन्ति चूतद्रुमाः
सद्यः पल्लवमुद्गिरन्ति तदहो चैत्रस्य चित्रा गतिः ।।३४।।

## चौरजारशिखामणे ।

चौरोऽसि नवनीतानां जारोऽसि ब्रजयोषिताम् ।
ध्येयोऽसि योगिनां कृष्ण ! चौरजारशिखामणे ।।३५।।

## चौराणां चन्द्रमा रिपुः ।

## चौराणामनृतं बलम्

## चौरे गते वा किमु सावधानम् ।

दृश्यताम्—'किमु—किं—किमु' इति ।

# छ

## छत्रधारी न राजासौ ।

छत्रधारी न राजासौ जटाधारी न चेश्वरः ।
सृष्टिकर्त्ता न स ब्रह्मा छिद्रकर्त्ता न तस्करः (क) ॥१॥

## छाया केन निवार्यते ।

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात्फलं नास्तिच्छाया केन निवार्यते ॥२॥

—चाणक्यशतकम् ।

## छायातपौ ब्रह्मविदो वदन्ति ।

ऋतं पिबन्तौ सुकृतस्य लोके
गुहाम्प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिणाचिकेताः (ख) ॥३॥

—कठोपनिषद् ।

---

(क) अत्रोत्तरं सूचिका।

(ख) इस जगत् में ब्रह्म का सर्वोत्कृष्ट स्थान जो गुहारूप हृदयाकाश है उसमें दो जन (जीवात्मा और परमात्मा) वास कर अपना अपना अवश्यम्भावी कर्मफल भोग कर रहे हैं। इनको ब्रह्मविद् लोग छाया और आतप के समान कहते हैं। त्रिणाचिकेता (अर्थात् जो तीन बार अग्निचयन किया करते हैं) पञ्चाग्नि (गृहस्थ) भी ऐसा कहते हैं। इस श्लोक का अर्थ भाष्यकार ने अन्य प्रकार से किया है यथाः—"एकः तत्र कर्मफलं 'पिवति' भुङक्ते, न इतरः। तथापि पातृसम्बन्धात् 'पिबन्तौ' इति उच्यते छत्रिन्यायेन"। अर्थात् यद्यपि जीव ही कर्मफल भोग करता है, तथापि यहाँ पर आनुषङ्गिक जीवात्मा और परमात्मा दोनों का उल्लेख किया गया है। वेदाचार्य सामश्रमी महाशय इस भाष्य को उपलक्ष कर कहते हैं—'अपराधी का रक्षक जो उसका चिरसहचर है, वह निरपराधी होने पर भी साधारण के दृष्टि में अपराधी के समान दण्डभोगकारी मान लिया जावे यह कोई आश्चर्य की बात नहीं है।' वास्तव में इस श्रुति का अर्थान्तर भी है।

### छायासुशीतलतलं भज जीव पान्थ ।

ग्रीष्मार्कभीष्मकरतप्तमराविवास्मिन्
ज्वालामये बत भवे कुत एव शान्तिः ।
श्रीकृष्णकल्पतरुपादमनन्तशान्ति-
च्छायासुशीतलतलं भज जीव पान्थ ! ॥४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

### छायेव न त्यजति कर्मफलानुबन्धः ।

आकाशमुत्पततु गच्छतु वा दिगन्त—
मम्भोनिधिं विशतु तिष्ठतु वा यथेष्टम् ।
जन्मान्तरार्जितशुभाशुभकृन्नराणां
छायेव न त्यजति कर्मफलानुबन्धः ॥५॥

—शान्तिशतकम् ।

### छायेव मैत्री खलसज्जनानाम् ।

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥६॥

—भर्तृहरि—नीतिशतकम् ।

### छिद्रेष्वनर्था बहुलीभवन्ति ।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥७॥

—विष्णुशर्मा—हितोपदेशः ।

क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीप्यति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥८॥

### छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ॥९॥

—विष्णुशर्मा—हितोपदेशः ।

## ज

### जकाराः पञ्चदुर्भराः ।

जामाता जठरं जाया जातवेदा जलाशयः ।
पूरितानैव पूर्यन्ते जकाराः पञ्चदुर्भराः ॥१॥

### जकाराः पञ्चदुर्लभाः ।

जननी जन्मभूमिश्च जाह्नवी च जनार्दनः ।
जनकः पञ्चमश्चैव जकाराः पञ्चदुर्लभाः ॥२॥

### जगज्जालं जाने जननि ! तृणजालेन सदृशम् ।

यजन्त्येके देवान्कठिनतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहन्तु त्वन्नामस्मरणश्रुतकामस्त्रिपथगे !
जगज्जालं जाने जननि! तृणजालेन सदृशम् ॥३॥

—श्रीजगन्नाथ कवि—गङ्गालहरी।

### जगत्प्राणः प्राणानपहरति केयं परिणतिः ।

पिकाली वाचालीभवति बहुधालीकवचने
मृणाली व्यालीव व्यथयतितरामङ्गमनिशम् ।
विषज्वालाजालं सखि ! किरति पीयूषकिरणो
जगत्प्राणः प्राणानपहरति केयं परिणतिः ॥४॥

### जगत्प्राणः प्राणानपहरसि किन्ते व्यवसितम् ।

कलङ्की निःशङ्कं परितपतु शीतद्युतिरसौ
भुजङ्गव्यासङ्गी वमतु गरलं चन्दनरसः ।
स्वयं दग्धो दाहं जनयतु मनोभूरकरुणो
जगत्प्राणः प्राणानपहरसि किन्ते व्यवसितम् ॥५॥

## जगदिदमनङ्गो विजयते ।

दृश्यताम्—'अपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते' इति ।

## जगद्धिताय जनिता साधवः ।

परोपकारनिरता ये स्वार्थसुखनिःस्पृहाः ।
जगद्धिताय जनिता साधवस्त्वीदृशा भुवि ॥६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## जगन्नाथः स्वामी नयनपथगामी भवतु मे ।

कदाचित्कालिन्दीतटविपिनसङ्गीतकपरो
मुदाभीरीनारीवदनकमलास्वादमधुपः ।
रमाशम्भुब्रह्मामरपतिगणेशार्चितपदो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥७॥

भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे
दुकूलं नेत्रान्ते सहचरकटाक्षं विदधत् ।
सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥८॥

न याचेऽहं राज्यं न च कनकमाणिक्यविभवं
न याचेऽहं रम्यां सकलजनकाम्यां वरवधूम् ।
सदा काले काले प्रमथपतिनोद्गीतचरितो
जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥९॥

—चैतन्यदेव—जगन्नाथाष्टकम् ।

## जनानां लोचनानन्दं के ।

किमनन्ततया ख्यातं पदेन व्यङ्गमाह्वय ।
जनानां लोचनानन्दं के तन्वन्ति घनात्यये (क) ॥१०॥

—धर्मदास—विदग्धमुखमण्डनम् ।

---

(क) अत्रोत्तरं खञ्जनाः । खमाकाशमिति प्रथमस्य, खञ्जेति द्वितीयस्य, खञ्जनाः पक्षिविशेषा इति तृतीयस्य ।

जनोऽन्यथा भर्त्तृमतीं विशङ्कते ।

जन्तवो ये हि जीवन्ति परस्य हितकाम्यया ।

सुजनाः सुधनास्ते हि कृतिनः सुखिनस्तथा ।
जन्तवो ये हि जीवन्ति परस्य हितकाम्यया ॥११॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

जपतो नास्ति पातकम् ।

दृश्यताम्—'उद्योगे नास्ति दारिद्र्यम्' इति ।

जरा—जरा—जरा ।

अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असम्भोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा (क) ॥१२॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

जरा करोत्यकृतपुण्यमपि ।

यममिव करधृतदण्डं हरिमिव सगदं (ख) शशाङ्कमिव वक्रम् ।
शिवमिव च विरूपाक्षं (ग) जरा करोत्यकृतपुण्यमपि ॥१३॥

जलदपटलतुल्यं यौवनं वा धनं वा ।

दृश्यताम्—'क्षणिकमिति समस्तम्' इति ।

जलविन्दुनिपातेन क्रमशः पूर्यते घटः ।

जलं केतकरेणुवत् ।

अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्विनिर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं केतकरेणुवत् (घ) ॥१४॥
—शङ्कराचार्य—आत्मबोधः ।

---

(क) पाठान्तरम्—'चिन्ता जरा मनुष्याणामनध्वा वाजिनं जरा। असम्भोगो जरा स्त्रीणां वस्त्राणामातपो जरा'।

(ख) गदया आयुधविशेषेण सहितम्। (पक्षे) गदेन रोगेण सहितम्।

(ग) विकृताक्षम्।

(घ) यथा केतकरेणुः कलुषितं जलं निर्मलं कृत्वा स्वयमपि नश्यति तथा ज्ञानं जीवं निर्मलं कृत्वा तस्मिन स्वयं निभृतं तिष्ठतीति निष्कर्षः ।

## जातमात्रा विनश्यति ।

नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता ।
अमुखी कुरुते शब्दं जातमात्रा विनश्यति (क) ॥१५॥

## जातस्य हि ध्रुवो मृत्युः ।

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितमर्हसि ॥१६॥

—भगवद्गीता ।

## जातापत्या पतिं द्वेष्टि ।

## जाते पुत्रे पितुः स्नानम् ।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥१७॥

## जातौ जातौ नवाचाराः ।

## जानाति कः स्वयमृते बत शीतरश्मेः ।

आस्ते विधुः परमनिर्वृत एष मौलौ
शम्भोरिति त्रिजगतीजनचित्तवृत्तिः ।
अन्तर्निगूढनयनानलदाहदुःखं
जानाति कः स्वयमृते बत शीतरश्मेः ॥१८॥

## जानीयात्प्रेषणे भृत्यान् ।

जानीयात्प्रेषणे भृत्यान्बान्धवान् व्यसनागमे ।
मित्रञ्चापदिकाले च भार्याञ्च विभवक्षये ॥१९॥

—चाणक्यशतकम् ।

---

(क) अत्रोत्तरं छोटिका । नरनारीसमुत्पन्ना अङ्गुष्ठमध्यमाङ्गुलीयोगेन उत्पन्ना ।

## जाने भूयांस्ततो धर्मः ।

जाने भूयांस्ततो धर्मः कश्चिन्नान्योऽस्ति देहिनः ।
प्राणिनां भयभीतानामभयं यत्प्रयच्छति ॥२०॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## जामाता कृष्णसर्पश्च ।

जामाता कृष्णसर्पश्च पावको दुर्जनस्तथा ।
विश्वासो नैव कर्त्तव्यः पञ्चमो भगिनीसुतः ॥२१॥

## जामाता दशमोग्रहः ।

सदा वक्रः सदा क्रूरः सदा दानमपेक्षते (क) ।
कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥२२॥
आदित्यादि ग्रहाः सर्वे यथा तुष्यन्ति दानतः ।
सर्वस्वेपि न तुष्येत जामाता दशमो ग्रहः ॥२३॥
भारतं पञ्चमो वेदः सुपुत्रः सप्तमो रसः ।
दाता पञ्चदशं रत्नं जामाता दशमो ग्रहः (ख) ॥२४॥

## जारिणीनां पतिः शत्रुः ।

## जिघांसन्तं जिघांसीयात् ।

आततायिनमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥२५॥
—विष्णुशर्मा—हितोपदेशः ।

## जिताक्षस्य तृणं नारी ।

## जिह्वा टलति धीरस्य ।

## जिह्वाग्रे—जिह्वाग्रे—जिह्वाग्रे ।

लक्ष्मीर्वसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः ।
जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम् ॥२६॥

---

(क) 'सदा पूजामपेक्षते' इति पाठान्तरम् ।
(ख) हास्यरसात्मकं श्लोकत्रयमिदम् ।

## जिह्वे ! प्रमाणं जानीहि ।

जिह्वे ! प्रमाणं जानीहि भोजने भाषणेऽपि च ।
अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी ॥२७॥

## जिह्वोपस्थपरित्यागे पृथिव्यां किं प्रयोजनम् ।

पृथिव्यां यानि भूतानि जिह्वोपस्थनिमित्तकम् ।
जिह्वोपस्थपरित्यागे पृथिव्यां किं प्रयोजनम् ॥२८॥

—उत्तरगीता ।

## जीर्णा वनगजा इव ।

पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥२९॥

—मार्कण्डेयमुनेः ।

## जीर्णे वारि बलप्रदम् ।

दृश्यताम्—'अजीर्णे भेषजं वारि' इति ।

## जीव ! त्वं नरकान्तकारिचरणे नाद्यापि किं लीयसे ।

कालाकालविचारिणां न कुरुते नापेक्षते दीनतां
द्वेष्यस्तस्य न वा प्रियोऽस्ति शमनः सर्वं समः कर्षति ।
तं कालं विकराललोलरसनं दृष्ट्वाप्यदूरे स्थितं
जीव ! त्वं नरकान्तकारिचरणे नाद्यापि किं लीयसे ॥३०॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## जीव ! त्वं नरकान्तकारिचरणं तूर्णं दृढं धारय ।

## जीवन्भद्राणि पश्यति ।

न मृतो जयते शत्रून् जीवन्भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवाय कुतो जयः ॥३१॥

## जीवनमफलं दरिद्रस्य ।

दृश्यताम्—'अफलं—अफलं—अफलम्' इति ।

## जीवनं चातकस्येह ।

कृष्णमेघामृतं देहि याचेऽहं भक्तचातकः ।
जीवनं चातकस्येह जीमूतस्यैव जीवनम् ॥३२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## ज्ञातिश्चेदनलेन किम् ।

दृश्यताम्—'किं—किं—किम्' इति ।

## ज्ञाते तत्त्वे कः संसारः ।

वयसि गते कः कामविकारः शुष्के नीरे कः कासारः ।
नष्टे द्रव्ये कः परिवारो ज्ञाते तत्त्वे कः संसारः ॥३३॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

## ज्ञानमात्रफला विद्या ।

## ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा (क) ॥३४॥

—भगवद्गीता ।

## ज्ञानेन हीनाः पशुभिः समानाः ।

आहार-निद्रा-भय-मैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम् ।
ज्ञानं हि तेषामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः (ख) ॥३५॥

—विष्णुशर्मा—हितोपदेशः ।

## ज्ञानेनैव तु मोक्षः ।

---

(क) दृश्यताम्—'सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते' इति ।

(ख) पाठान्तरम्—'आहारनिद्राभयमैथुनानि सामान्यमेतत्पशुभिर्नराणाम् ।
एको विवेको ह्यधिको मनुष्ये तेनैव हीनः पशुभिः समानः ॥
'आहारनिद्राभयमैथुनानि' चत्वारि चिह्नानि वसन्ति देहे ।
ज्ञानं नराणामधिकं हि लोके ज्ञानेन हीनः पशुभिः समानः ॥'

## ज्ञानं तद्देहि गोविन्द ।

पदे पदे तव पदे मोहतो मे कृतागसे ।
ज्ञानं तद्देहि गोविन्द ! शोकमोहनिवारणम् ॥३६॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## ज्ञानं भारः क्रियां विना ।

अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया ।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥३७॥
—विष्णुशर्मा—हितोपदेशः ।

## ज्ञानं विना मोक्षं न यान्ति ते ।

मृच्छिलाधातुदार्वादिमूर्त्तावीश्वरबुद्धयः ।
क्लिश्यन्तस्तपसा ज्ञानं विना मोक्षं न यान्ति ते ॥३८॥

## ज्ञानं—ज्ञेयं—ज्ञानगम्यम् ।

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥३९॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति (क) ॥४०॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितं ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥४१॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥४२॥

---

(क) तथाहि श्रुतौ—'ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमि ँ सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥
पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतस्येशानो यदन्नेनातिरोहति ॥
एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' ॥
—ऋग्वेद—पुरुषसूक्त । १—३

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥४३॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥४४॥
—भगवद्गीता ।

## ज्ञेयं भ्रमरकीटवत् ।

भावितं तीव्रयोगेन यद्वस्तु निश्चयात्मना ।
पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् (क) ॥४५॥
—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## ज्येष्ठत्वं गुण उच्यते ।

न हि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुण उच्यते ।
गुणाद्गुरुत्वमायाति दधि दुग्धं घृतं तथा ॥४६॥

## ज्येष्ठो भ्राता पितुः समः ।

धिक्करोषि तथापि त्वं ज्येष्ठो भ्राता पितुः समः ।
कालो राघवरूपेण जातो दशरथालये ॥४७॥
स्वश्रूश्च मातृतुल्या स्यात्तथा ज्येष्ठा स्वसापि च ।
तथा मातुः सपत्नी च ज्येष्ठो भ्राता पितुः समः ॥४८॥

## ज्योतिर्ज्योतिः स्वयं ज्योतिः ।

अन्तर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः ।
ज्योतिर्ज्योतिः स्वयं ज्योतिरात्मज्योतिः शिवोस्म्यहम् ॥४९॥
—शङ्कराचार्य—ब्रह्मनामावली-माला ।

---

(क) दृश्यताम्—'भजेत् भ्रमरकीटवत्' इति श्लोकः तथा तट्टीका।

## ज्योतिर्मयं दर्शय दर्शय त्वम् ।

अज्ञाननिद्राप्रतिबोधितं मां कृत्वा भवस्वप्नविमुक्तचित्तम् ।
हरे विशोकं ह्यभयं पदं ते ज्योतिर्मयं दर्शय दर्शय त्वम् ॥५०॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## ज्योतिर्विद आशीर्वचनम् ।

शूरः शूरपदं रुचिं हिमरुचिः सन्मङ्गलं मङ्गलो
बोधं बोधन आतनोतु ललिता वाचश्च वाचस्पतिः ।
काव्यः काव्यकलाकलापनिरतिं मन्दो द्विषन्मन्दतां
दुर्वृत्तेषु तमस्तमो जयकरीं केतुश्च केतुश्रियम् (क) ॥५१॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

## ज्योतिःशास्त्रप्रवर्त्तकाः ।

सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्मुनिरङ्गिराः ॥
लोमशः पौलिशश्चैव भार्गवो यवनो गुरुः ।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः ॥५२॥

---

(क) पाठान्तरम्—'सूर्यः शौर्यमथेन्दुरिन्द्रपदवीं सन्मङ्गलं मङ्गलः ।
सद्बुद्धिं च बुधो गुरुश्च गुरुतां शुक्रः सुखं शं शनिः ॥
राहुर्बाहुबलं करोतु नियतं केतुः कुलस्योन्नतिं
नित्यं प्रीतिकरा भवन्तु भवतां सर्वेऽनुकूला ग्रहाः' ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

इन दोनों श्लोकों का भाषानुवाद यथाः—

शूर अर्थात् सूर्य आपको शौर्य, हिमरुचि अर्थात् चन्द्र आपको सुरुचि, मङ्गल परं मङ्गल, बुध बोध (ज्ञान), बृहस्पति मनोहर वाक्य, शुक्र काव्यकलाओं में अनुराग, मन्द अर्थात् शनैश्चर शत्रुहीनता, तम अर्थात् राहु दुराचारों के निमित्त अज्ञानान्धकार और केतु आपको जयकारिणी केतुश्री अर्थात् जयपताकारूप लक्ष्मी प्रदान करे।

सूर्य नित्य आपको शौर्य, इन्दु अर्थात् चन्द्र इन्द्रपदवी, मङ्गल परं मङ्गल, बुध सद्बुद्धि, गुरु (बृहस्पति) गुरुत्व, शनि सुख, राहु बाहुबल, और केतु आपके कुल की सर्वदा उन्नति करे। इस प्रकार से सब ग्रह सर्वदा आपके अनुकूल होकर आपके प्रीतिकर हों।

### ज्वरादौ लङ्घनं प्रोक्तम् ।

ज्वरादौ लङ्घनं प्रोक्तं ज्वरमध्ये तु पाचनम् ।
ज्वरान्ते भेषजं दद्याज्ज्वरमोक्षे विरेचनम् ॥ ५३ ॥

---

## झ

### झटिति प्रविश गेहम् ।

दृश्यताम्—'ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय' इति ।

### झटित्येव विशुध्यति ।

त्वक्फलोदररोमाणि भवन्ति वस्त्रजातयः ।
प्रोक्षणात् क्षालनात् वातात् झटित्येव विशुध्यति (क) ॥ १ ॥

---

## त

### तक्रं शक्रस्य दुर्लभम् ।

घृतं न श्रूयते कर्णे दधि स्वप्नेऽपि दुर्लभम् ।
मुग्धे ! दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ १ ॥
भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः ।
कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् (ख) ॥ २ ॥
अमृतं दुर्लभं नॄणां देवानामुदकं तथा ।
पितॄणां दुर्लभः पुत्रः तक्रं शक्रस्य दुर्लभम् ॥ ३ ॥

---

(क) दृश्यताम्—'ऊर्णा वातेन शुध्यति' इति ।
(ख) अत्रोत्तरम्—तक्रं प्रथमस्य, शक्रस्य द्वितीयस्य, दुर्लभं तृतीयस्य इति योजना ।

## ततः किं ततः किं ततः किं ततः किम् ।

शरीरं सुरूपं तथा वा कलत्रं यशश्चारुचित्रं धनं मेरुतुल्यम् ।
मनश्चेन्न लग्नं गुरोरङ्घ्रिपद्मे ततः किं ततः किं ततः किं ततः किम् ॥ ४॥
कलत्रं धनं पुत्रपौत्रादिसर्वं गृहं बान्धवाः सर्वमेतद्धि जातम् ।
मनश्चेन्न लग्नं गुरोरङ्घ्रिपद्मे ततः किं ततः किं ततः किं ततः किम् ॥ ५॥
—शङ्कराचार्य—गुर्वष्टकम् ।

नितम्बो विशालः कटिर्मध्यसूक्ष्मा कुचद्वन्द्वमत्यन्तभव्यं मुखं च ।
वचश्चेन्न किञ्चिद्रसालं रमण्यास्ततः किं ततः किं ततः किं ततः किम् ॥ ६॥

## तत्किमेतं न पाथ ।

रे धृष्टा धार्त्तराष्ट्राः प्रबलभुजबृहत्ताण्डवाः पाण्डवा रे !
रे वार्ष्णेयाः ! सकृष्णाः ! शृणुत मम वचो यद्ब्रवीम्यूर्ध्वबाहुः ।
एतस्योत्खातबाहोर्द्रुपदनृपसुतातापिनः पापिनोऽहं
पाता हृच्छोणितानां प्रभवति यदि वस्तत्किमेतं न पाथ (क) ॥७॥

## तत्कुरुष्व मदर्पणम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥८॥
—भगवद्गीता ।

## तत्तत्काले भविष्यति ।

यस्मिन्काले च यद्देशे यन्मुहूर्ते च यद्दिने ।
हानिर्मृत्युर्यशोलाभस्तत्तत्काले भविष्यति ॥९॥

## तत्तत्फलमुपाश्नुते ।

येन येन शरीरेण यद्यत्कर्म करोति यः ।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते ॥ १०॥
—महाभारतीयानुशासनपर्वणि ।

---

(क) रौद्ररसात्मकः श्लोकोऽयम् । पाथ=रक्षथ । भीमसेनस्योक्तिरियम् ।

## तत्तदेवागच्छ त्वं मम तेजोंऽशसम्भवम् ।

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥ ११॥

—भगवद्गीता।

## तत्तद्यत्नेन वर्जयेत् ।

यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ १२॥

## तत्तु दुःखं न सह्यम् ।

वदतु वदतु रामो लक्ष्मणो वा सहत्वं
परभुजबलविज्ञो नास्ति दुःखं ततो मे ।
ननु विटपविनोदी मर्कटो मां निरीक्ष्य
हसति वदति किञ्चित्तत्तु दुःखं न सह्यम् ॥ १३॥

## तत्ते पदं संग्रहेण प्रवक्ष्ये ।

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ १४॥

—भगवद्गीता।

## तत्ते पदं संग्रहेण ब्रवीमि

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि। ओमित्येतत् ॥ १५॥

—कठोपनिषद् ।

## तत्ते वित्तमहं मन्ये ।

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषः कस्यापि रक्षसि ॥ १६॥

—विष्णुशर्मा—हितोपदेशः।

### तत्तेजो विद्धि मामकम् ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१७॥

—भगवद्गीता ।

### तत्त्यागे च धनेन किम् ।

दृश्यताम्—'असारे खलु संसारे' इति ।

### तत्त्वं चिन्तय सततं चित्ते ।

तत्त्वं चिन्तय सततं चित्ते परिहर चिन्तां नश्वरवित्ते ।
क्षणमिह सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका ॥१८॥

—शङ्कराचार्य—मोहमुद्गरः ।

### तत्प्रोज्झितुं कः क्षमः ।

येनाकारि मृणालपत्रमशनं क्रीड़ा करिण्या सह
स्वच्छन्दं भ्रमणञ्च कन्दरगणे पीतं पयो नैर्झरम् ।
सोऽयं वन्यकरी नरेषु पतितं पुष्णाति देहं तृणै—
र्यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥१९॥

—वेतालभट्ट—नीतिप्रदीपः ।

### तत्र का परिदेवना ।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२०॥

—भगवद्गीता ।

एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यद्येकस्त्वरितं यातस्तत्र का परिदेवना ॥२१॥

—भगवतो व्यासस्य ।

पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥२२॥

—विष्णुशर्मा—हितोपदेशः ।

## तत्र को मोहः कः शोकः ।

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥२३॥

—ईशोपनिषद् ।

## तत्र तत्र समाधयः ।

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥२४॥

## तत्र मम हृदयमतियत्नम् ।

त्वमसि मम भूषणं त्वमसि मम जीवनं
त्वमसि मम भवजलधिरत्नम् ।
भवतु भवतीह मयि सततमनुरोधिनी
तत्र मम हृदयमतियत्नम् ॥२५॥

—जयदेव—गीतगोविन्दम् ।

## तत्र मौनं हि शोभनम् ।

भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥२६॥

—वररुचि—नीतिरत्नम् ।

## तत्र वासं न कारयेत् ।

धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥२७॥

—चाणक्यशतकम् ।

## तत्र स्थित्वाप्यपूर्णता ।

दृश्यताम्—'किं ब्रूमः शशिनो भाग्यम्' इति ।

## तत्र हेतुरदन्तता ।

कायस्थेनोदरस्थेन मातुरामिषशङ्कया ।
यन्त्राणि यत्र मुक्तानि तत्र हेतुरदन्तता (क) ॥२८॥

## तत्राधिकारः शमनस्य नास्ति ।

कृष्णेतिनामाक्षरगाढमुद्रा चिरं यदीये हृदये विभाति ।
सर्वत्र नित्यं ह्यकुतोभयोऽसौ तत्राधिकारः शमनस्य नास्ति ॥२९॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## तत्रास्ते स्मरतस्करः ।

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा सञ्चर मनः पान्थ ! तत्रास्ते स्मरतस्करः ॥३०॥
—भर्त्तृहरि—शृङ्गारशतकम् ।

## तत्रैव नाकः किल यत्र भक्तिः ।

## तत्रैव निधनं यान्ति ।

स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषाः गजाः ।
तत्रैव निधनं यान्ति काकाः कापुरुषाः मृगाः ॥३१॥
—विष्णुशर्मा—हितोपदेशः ।

## तत्रैव रमते हरिः ।

आतिथ्यं गुरुभक्तिश्च पातिव्रत्यं दयार्जवम् ।
सत्यं शौचं क्षमा यत्र तत्रैव रमते हरिः ॥३२॥
पिता माता गुरुःपत्नी ज्ञातयो बान्धवास्तथा ।
यत्रैते नित्यसन्तुष्टास्तत्रैव रमते हरिः ॥३३॥
मोदन्ते शिशवो यत्र मोदन्ते च गृहेऽङ्गनाः ।
तिर्यञ्चोऽपि प्रमोदन्ते तत्रैव रमते हरिः ॥३४॥

---

(क) हास्यरसात्मकः श्लोकोऽयम् ।

श्रद्धान्नं गृहिणा दत्तं भुञ्जते सर्वजन्तवः ।
प्रीत्या यत्र गृहे नित्यं तत्रैव रमते हरिः ॥३५॥
यत्र निर्लिप्तभावेन संसारे वर्त्तते गृही ।
धर्मं चरति निष्कामं तत्रैव रमते हरिः ॥३६॥
गृही यत्राखिलान् क्लेशाँल्लीलया सहते स्वयम् ।
हरत्याश्रितसन्तापं तत्रैव रमते हरिः ॥३७॥
शाकान्नं धर्मतो लब्धं भोजयन् स्वजनातिथीन् ।
शेषं यत्र गृही भुङ्क्ते तत्रैव रमते हरिः ॥३८॥
धेनुर्धान्यं पुष्करिणी यत्रावन्ध्याश्च पादपाः ।
आतिथ्यं दम्पतीप्रेम तत्रैव रमते हरिः ॥३९॥
वसुन्धरेव गृहिणी यत्र सर्वसहा गृहे ।
सुखे दुःखे निर्विकारा तत्रैव रमते हरिः ॥४०॥
क्षुधार्त्तोऽन्नं तृषार्त्तोऽम्बु शोकार्त्तो यत्र सान्त्वनाम् ।
भीतोऽभयं च लभते तत्रैव रमते हरिः ॥४१॥
शिरोनैव करोत्युच्चैः कुर्वन्नुच्चैरपि क्रियाः ।
गृही यत्र सदा नम्रस्तत्रैव रमते हरिः ॥४२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## तथाऽक्षराद्विविधाः सोम्य ! भावाः ।

यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते स्वरूपाः ।
तथाऽक्षराद्विविधाः सोम्य ! भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥४३॥

—मुण्डकोपनिषद् ।

## तथाऽक्षरात्सम्भवतीह विश्वम् ।

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम् ॥४४॥

—मुण्डकोपनिषद् ।

## तथा चतुर्भिः पुरुषः परीक्ष्यते ।

यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥४५॥

## तथा तेनेदमावृतम् ।

धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ४६ ॥

—भगवद्गीता ।

## तथा देहान्तरप्राप्तिः ।

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ ४७ ॥

—भगवद्गीता ।

## तथा पूर्णत्वमभ्यसेत् ।

भाववृत्त्या हि भावत्वं शून्यवृत्या हि शून्यता ।
ब्रह्मवृत्त्या हि ब्रह्मत्वं तथा पूर्णत्वमभ्यसेत् ॥ ४८ ॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## तथा पूर्वकृतं कर्म ।

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्त्तारमनुगच्छति ॥ ४९ ॥

## तथा भक्तिं बिना कर्म ।

यथा बीजं विना क्षेत्रं बन्ध्यं धाराशतैरपि ।
तथा भक्तिं विना कर्म व्यर्थं यत्नशतैरपि ॥ ५० ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## तथा मुग्धोऽस्मि सम्प्रति ।

मज्जन्नपि पयोराशौ लब्ध्वा सर्पावलम्बनम् ।
न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि सम्प्रति ॥ ५१ ॥

—विष्णुशर्मा—हितोपदेशः ।

## तथा शिष्यार्जितं पापम् ।

राज्ञश्चामात्यजा दोषाः पत्नीदोषास्तु भर्त्तरि ।
तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम् ॥ ५२ ॥

### तथात्मा नोपलिप्यते ।

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ५३॥

—भगवद्गीता ।

### तथापि काको न च राजहंसः ।

काकस्य चञ्चुर्यदि हेमयुक्ता माणिक्ययुक्तौ चरणौ च तस्य ।
एकैकपक्षे गजराजमुक्ता तथापि काको न च राजहंसः ॥ ५४॥

—वररुचि—नीतिरत्नम् ।

### तथापि कृपणा याचन्त इत्यद्भुतम् ।

वासो वल्कलमास्तरः किसलयान्योकस्तरूणां तलं
मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये ।
क्रीडा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी
स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतम् ॥ ५५॥

—नीतिशतकम् ।

### तथापि जन्मविटपिक्रोडं मनो धावति ।

वासः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनूमार्जनं
भक्ष्यं स्वादुरसालदाडिमफलं पेयं सुधाभं पयः ।
पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे
हा हा ! हन्त तथापि जन्मविटपिक्रोडं मनो धावति ॥ ५६॥

—कविभट्ट—पद्यसंग्रहः ।

### तथापि न निवर्त्तते तृष्णा ।

इच्छति शती सहस्रं ससहस्रः कोटिमीहते कर्त्तुं
कोटियुतोऽपि नृपत्वं नृपोऽपि बत चक्रवर्त्तित्वम् ।
चक्रधरोऽपि सुरत्वं सुरोऽपि सुरराज्यमीहते कर्त्तुं
सुरराजोऽप्यूर्ध्वगतिं तथापि न निवर्त्तते तृष्णा (क) ॥ ५७॥

---

(क) दृश्यताम्—'आशावधिं को गतः' इति ।

## (तथापि) नरपतिं सेवन्त इत्यद्भुतम् ।

सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो नैर्झरं
वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी ।
आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैःसह
स्वाधीने विभवेऽप्यहो नरपतिं सेवन्त इत्यद्भुतम् ॥५८॥

—शान्तिशतकम् ।

## तथापि नान्यस्य करोत्युपासनाम् ।

पयोद हे ! वारि ददासि वा न वा त्वदेकचित्तः पुनरेष चातकः ।
वरं महत्या म्रियते पिपासया तथापि नान्यस्य करोत्युपासनाम् ॥५९॥

—उत्तरचातकाष्टकम् ।

## तथापि पत्रत्रितयः पलाशः ।

तुष्टो हि राजा यदि सेवकेभ्यो भाग्यात्परं नैव ददाति किञ्चित् ।
अहर्निशं वर्षति वारिवाहस्तथापि पत्रत्रितयः पलाशः ॥६०॥

## तथापि बध्या हरिणा नराणाम् ।

वसन्त्यरण्येषु चरन्ति दूर्वाः पिबन्ति तोयान्यपरिग्रहाणि ।
तथापि बध्या हरिणा नराणां को लोकमाराधयितुं समर्थः ॥६१॥

—मुक्तापीडस्य ।

## तथापि भक्तिस्तरुणेन्दुशेखरे ।

महेश्वरे वा जगदीश्वरे वा जनार्दने वा जगदन्तरात्मनि ।
न वस्तुतो मे प्रतिपत्तिरस्ति तथापि भक्तिस्तरुणेन्दुशेखरे ॥६२॥

—भर्तृहरि—वैराग्यशतकम् ।

## तथापि लोकः कथितं न बुध्यते ।

पुनः प्रभातं पुनरेव शर्वरी पुनः शशाङ्कः पुनरुद्यते रविः ।
कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥६३॥

## तथापि लोकः परदारसक्तः ।

स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा ।
निजाङ्गना यद्यपि रूपराशिस्तथापि लोकः परदारसक्तः ॥६४॥

## तथापि विषयान्न जहाति चेतः ।

भिक्षाशनं भवनमायतनैकदेशः(क) शय्या भुवः परिजनो निजदेहभारः ।
वासश्च जीर्णपटखण्डविबद्धकन्था हा हा ! तथापि विषयान्न जहाति चेतः ॥६५॥

—शान्तिशतकम् ।

## तथापि विषयान्न परित्यजन्ति ।

भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रञ्च जीर्णशतखण्डमलीनकन्था हा हा ! तथापि विषयान्न परित्यजन्ति ॥६६॥

—भर्तृहरि—वैराग्यशतकम् ।

## तथापि सिंहः पशुरेव नान्यः ।

भिनत्ति भीमं करिराजकुम्भं बिभर्त्ति वेगं पवनादतीव ।
करोति वासं गिरिगह्वरेषु तथापि सिंहः पशुरेव नान्यः ॥६७॥

—वररुचि—नीतिरत्नम् ।

## तथापि स्मर्तृणां वरद ! परमं मङ्गलमसि ।

दृश्यताम्—'ईश्वरवन्दना' ।

## तथापि हा पातकिनो मनो मे ।

सदा सदानन्दमये पदे ते कृपानिधे! कर्षसि मां मुकुन्द ! ।
तथापि हा पातकिनो मनो मे धावत्यभीक्ष्णं भवशोकसिन्धौ ॥६८॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) आयतनस्य कस्यचिद् गृहस्य एकदेशः भवनं गृहं कस्यचिज्जनस्य गृहैकदेशो तदनुग्रहेणा-कस्थानमिति भावः ।

—जीवानन्द विद्यासागर ।

## तथाप्यस्मिन्घोरे पथि बत रता हन्त ! कुधियः ।

श्रियो दोलालोला विषयजरसाः प्रान्तविरसा
विपद्गेहं देहो महदपि धनं भूरि निधनम् ।
बृहच्छोको लोकः सततमबला दुःखबहुला—
स्तथाप्यस्मिन्घोरे पथि बत रता हन्त ! कुधियः ॥६९॥

## तथाऽभिमानो नरकस्य मूलम् ।

तत्रैव नाकः किल यत्र भक्तिर्यत्राभिमानो नरकं च तत्र ।
स्वर्गस्य मूलं हरिभक्तिरेका तथाऽभिमानो नरकस्य मूलम् ॥७०॥
—ताराकुमार—कृष्णभक्तिरसामृतम ।

## तदखिलं धन्यस्तु संन्यस्यति ।

तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः सम्पदः
कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति ॥७१॥
—भर्तृहरि—वैराग्यशतकम् ।

## तदपि किमर्थं क्रियते शोकः ।

अष्टकुलाचलसप्तसमुद्रा ब्रह्मपुरन्दरदिनकररुद्राः ।
न त्वं नाहं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥७२॥
—शङ्कराचार्य—मोहमुद्गरः ।

## तदपि कुटजे यद्विचरसि ।

मधूके माध्वीकं पिबसि शतपत्रेऽभिरमसे
मधूलीभिश्चान्तर्मधुप ! सहकारेऽपि रमसे ।
वसन्ते वासन्तीमधु मधुरमश्नासि बहुशो
दुरावेशोऽयं ते तदपि कुटजे यद्विचरसि ॥७३॥

## तदपि तनुषे मानमधुना ।

निशेयं वासन्ती क्वणति मधुरं कोकिलयुवा
कलानाथः पूर्णः परिणतकलानाथवदने ।
पदान्ते कान्तोऽयं तदपि तनुषे मानमधुना
न जानीमः का वा समजनि दशा पुष्पधनुषः ॥७४॥

## तदपि धनिनां द्वारि कृपणाः ।

फलं स्वेच्छालभ्यं प्रतिदिनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥७५॥

—भर्तृहरि—वैराग्यशतकम् ।

## तदपि न मुञ्चत्याशापाशः ।

दृश्यताम्—‘इत्थं शीतं मया नीतम्’ इति ।

## तदपि न मुञ्चत्याशापिण्डम् ।

अङ्गं गलितं पलितं मुण्डं जातं दशनविहीनं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् (क)॥७६॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

## तदपि न मुञ्चत्याशावायुः ।

दिनयामिन्यौ सायं प्रातः शिशिरबसन्तौ पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥७७॥

—शङ्कराचार्य—मोहमुद्गरः ।

## तदपि न हा विधुवदना ।

उपनिषदः परिपीता गीतापि च हन्त ! मतिपथं नीता ।
तदपि न हा ! विधुवदना मानससदनाद्बहिर्याति ॥७८॥

---

(क) पाठान्तरम्—‘करधृतकम्पितशोभितदण्डं तदपि न मुञ्चत्याशाभाण्डम्’ इति मोहमुद्गरे।

## तदपि न हितं कर्मविहितम् ।

स्थिरापायः कायः प्रणयिषु सुखं स्थैर्यविमुखं (क)
महाभोगा रोगाः (ख) कुवलयदृशः सर्पसदृशः ।
महावेशः क्लेशः (ग) प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि न हितं कर्मविहितम् ॥७९॥

—शान्तिशतकम् ।

## तदपि मरणोपायचकितः ।

निवृत्ता भोगेच्छा पुरुष बहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो भ्रष्टः कायस्तदपि मरणोपायचकितः ॥८०॥

—भर्तृहरि—वैराग्यशतकम् ।

## तदपि विषयेभ्यः स्पृहयति ।

गतं तत्तारुण्यं तरुणिहृदयानन्दजनकं
विशीर्णा दन्तालिर्निजगतिरहो यष्टिशरणा ।
जडीभूता दृष्टिः श्रवणरहितं कर्णयुगलं
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥८१॥
वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा
विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम् ।
शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो !
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥८२॥

---

(क) कायः देहः स्थिरः निश्चितः अपायो ध्वंसो यस्य तथाभूतः अवश्यनश्वर इति यावत्। प्रणयिषु पुत्रकलत्रादिषु सुखं स्थैर्य्यविमुखम् अस्थायीत्यर्थः।

(ख) रोगाः महाभोगाः अतिविस्तराः। यद्वा। महान्तः भोगाः भोग्यवस्तूनि। रुजन्ति तापयन्तीति रोगाः सन्तापका इति यावत्।

(ग) महावेशः महान् आवेशः परिच्छदः क्लेशः कष्टसाध्यः। यद्वा। महान् आवेशः आसक्तिः संसारेष्विति भावः क्लेशः क्लेशजनक इति यावत्।

—जीवानन्द विद्यासागर।

## तदान्येषां केषां कथय कथमस्मिन्नवसरः ।

भवानि! स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः
प्रजानामीशो न त्रिपुरमथनः पञ्चभिरपि ।
न षड्भिः सेनानीर्दशशतमुखैरप्यहिपति—
स्तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥८३॥

—शङ्कराचार्य—आनन्दलहरीस्तुतिः ।

## तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम् ।

सुरधुनिमुनिकन्ये तारयेः पुण्यवन्तं
स तरति निजपुण्यैस्तत्र किं ते महत्त्वम् ।
यदि च गतिविहीनं तारयेः पापिनं मां
तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम् ॥८४॥

—गङ्गाष्टकम् ।

## तदेव पूजनं तव ।

## तदेव ब्रह्म त्वं विद्धि ।

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८५॥

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८६॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८७॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतं ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८८॥

यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८९॥

—केनोपनिषद् ।

## तदेव मतिमान्भजेत् ।

प्राणिनामुपकाराय यदेवेह परत्र च ।
कर्मणा मनसा वाचा तदेव मतिमान्भजेत् ॥९०॥

—विष्णुपुराणम् ।

## तद्दानं सात्त्विकं स्मृतम् ।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥९१॥

—भगवद्गीता ।

## तद्देवकार्यं जपयज्ञहोमाः ।

किं देवकार्याणि नराधिपानां किं वा विरोधो परिपन्थिभिश्च ।
तद्देवकार्यं जपयज्ञहोमा यदश्रुपाता न पतन्ति राष्ट्रे ॥९२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तद्धाम परमं मम ।

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम ॥९३॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम (क) ॥९४॥

—भगवद्गीता ।

## तद्ब्रह्मेत्यवधारयेत् ।

यद्भासा भास्यतेऽर्कादिर्भास्यैर्यत्तु न भास्यते ।
येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् (ख) ॥९५॥
यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् (ग) ॥९६॥

---

(क) (ख) दृश्यताम्—'तस्य भासा सर्वमिदं विभाति' इति। कठोपनिषद् ।
(ग) दृश्यताम्—'तं विद्याद्दुःखसंयोगवियोगम्' इति। —भगवद्गीता।

यदृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥९७॥
अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम् ।
अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारयेत् (क) ॥९८॥
—शङ्कराचार्य—आत्मबोधः ।

## तद्युक्तं ननु दैवमेवं शरणम् ।

## तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ।

ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः ।
सर्ववेदातिहासानां सारं सारं समुद्धृतम् ॥९९॥
सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥१००॥
—श्रीमद्भागवतम् ।

## तद्वक्तुं केनचित्क्वचित् ।

मरिष्यामीति यद्दुःखं पुरुषस्योपजायते ।
शक्यते नानुमानेन तद्वक्तुं केनचित्क्वचित् ॥१०१॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तद्वदात्मनि देहत्वम् ।

सूक्ष्मत्वे सर्वभावानां स्थूलता चोपनेत्रतः ।
तद्वदात्मनिदेहत्वं पश्यत्यज्ञानयोगतः ॥१०२॥
—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## तद्वद्दानं सुपात्रगम् ।

न्यग्रोधस्य यथा बीजं स्तोकं सुक्षेत्रभूमिगम् ।
बहुविस्तीर्णतां याति तद्वद्दानं सुपात्रगम् ॥१०३॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) अतदिति । वेदान्तैः उपनिषद्भिः अतद्व्यावृत्तिरूपेण तत्त्वमसीति वाक्यस्थं यत् तत्पदं तस्य व्यावृत्तेः विगमस्य अभावरूपेण तत्पदार्थेन युष्मत्पदार्थस्याभेदरूपेणेति यावत् । यत् अद्वयम् अद्वितीयं एकं केवलम् अखण्डानन्दं पूर्णानन्दं यल्लक्ष्यते प्रतीयते तत् ब्रह्म इति अवधारयेत् ।
—जीवानन्द विद्यासागर ।

## तद्वद्भुक्तये न तु मुक्तये ।

वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् ।
वैदुष्यं विदुषां तद्वद्भुक्तये न तु मुक्तये ॥१०४॥
—शङ्कराचार्य—विवेकचूडामणिः ।

## तद्वद्भूतसमागमः ।

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥१०५॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥१०६॥
—विष्णुशर्मा—हितोपदेशः ।

## तन्नष्टं यन्न दीयते ।

द्विजाय दत्त्वा पादूंश्च शतवर्षीयजर्जराः ।
तत्फलादश्वलाभो मे तन्नष्टं यन्न दीयते (क) ॥१०७॥

## तन्नाशादेकवद्भवेत् ।

यथाकाशो हृषीकेशो नानोपाधिगतो विभुः ।
तद्भेदाद्भिन्नवद्भाति तन्नाशादेकवद्भवेत् (ख) ॥१०८॥
—शङ्कराचार्य—आत्मबोधः ।

---

(क) एक दिन कवि कालिदास ने किसी स्थान को जाते हुए रास्ते में एक ब्राह्मण को देखा जो नंगे पाँव तप्तबालुकामय मार्ग में चलने से बहुत कष्ट पा रहा था। यह देख कालिदास ने अपनी पादुका उतार कर उसे दे दी। कुछ दूर आगे जाकर उन्होंने एक घोड़ा देखा जिसपर आरोहण कर वे राजधानी में जा पहुँचे। राजा विक्रमादित्य ने उनसे मार्ग की वार्त्ता पूछी। इसके उत्तर में कालिदास ने कहा, मेरी एक बहुत दिनों की पुरानी और जीर्ण पादुका थी जो मैंने दान कर दिया उसके फल में मुझे यह अश्वलाभ हुआ जिसपर चढ़कर मैं इस स्थान पर पहुँचा। अतएव यह देखा जाता है कि जो वस्तु नहीं दान की जाती है वही नष्ट हो जाती है।

(ख) यथेति। हृषीकेशः हृषीकाणाम् इन्द्रियाणाम् ईशः अधिष्ठातेत्यर्थः। विभुः परमात्मा। आकाशो यथा नाना उपाधिषु पदार्थेषु गतः। यथाकाशः घटाकाशः पटाकाशः इत्यादिभेदेन विविधतां गतः तथा ईश्वरोऽपीति भावः। तद् भेदात् तस्य उपाधेर्भेदात् वैचित्र्यात् भिन्नवत् भाति, तस्य उपाधेर्नाशात् एकवत् एक एवेत्यर्थः भवेत्। यथा घटादीनां नाशे तत्तदुपाधिक आकाश आकाश एव तथा परमात्मा तत्तदुपाधीनां नाशात् स एवाद्वितीय इति भावः।
—जीवानन्द विद्यासागर।

## तन्नाशे प्राप्तवद्भाति ।

आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया ।
तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥१०६॥

—शङ्कराचार्य—आत्मबोधः ।

## तन्नाशो मोक्ष उच्यते ।

अनात्मभूते देहादावात्मबुद्धिस्तु देहिनाम् ।
साविद्या तत्कृते बन्धस्तन्नाशो मोक्ष उच्यते ॥११०॥

## तन्मुखे मध्यमाक्षरम् ।

मथुराया विलोमेन विलोप्य मध्यमाक्षरम् ।
यन्मुखे तत्पदं नास्ति तन्मुखे मध्यमाक्षरम् ॥१११॥

## तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ।

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः (क) ॥११२॥

—भर्तृहरि—नीतिशतकम् ।

## तपस्तप्त्वा सुखी भव ।

शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः ।
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥११३॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) श्लोकोऽयं 'रघुवंशस्य' पञ्चमसर्गे निम्नलिखितश्लोकस्य टीकायां मल्लिनाथेनाप्युद्धृतः ।
श्लोको यथाः—'स्थाने भवानेकनराधिपः सन् अकिञ्चनत्वं मखजं व्यनक्ति ।
पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥'
अत्र कामन्दकः—'धर्मार्थं क्षीणकोषस्य क्षीणत्वमपि शोभते ।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव' ॥

## तपसा चीयते ब्रह्म ।

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥११४॥
—मुण्डकोपनिषद् ।

## तपसा ब्राह्मणो भूयात् ।

## तपो न तप्तं वयमेव तप्ताः ।

## तपः कुर्वन्ति रोगिणः ।

## तपःफलं स्यात्किमतःपरं वद ।

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतःपरं वद ॥११५॥
—कालिदास—कुमारसम्भवम् ।

## तपः सीमा मुक्तिः ।

## तमक्रतुः पश्यति वीतशोकः ।

दृश्यताम्—'अणोरणीयान्महतो महीयान्' इति ।

## तमाहुः पण्डितं बुधाः ।

यस्य सर्वे समारम्भाःकामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥११६॥
—भगवद्गीता ।

## तमिमं विघूर्णयति ।

यस्य तनूरुहकुहरे नटनं ब्रह्माण्डकोटीनाम् ।
तमिमं गोपकृशाङ्गीलोचनभङ्गी विघूर्णयति ॥११७॥

## तमेव शरणं व्रज ।

यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम् ।
अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥११८॥
—कूर्मपुराणम् ।

## तमोभूतमिदं जगत् ।

सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥११९॥

—भर्तृहरि—शृङ्गारशतकम् ।

## तव प्रसादस्य पुरस्तु सम्पदः ।

## तवानुवृत्तिं न च कर्त्तुमुत्सहे ।

अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्त्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्त्तुमुत्सहे (क)॥१२०॥

—कालिदास—कुमारसम्भवम् ।

## तवेह वसतिः कुतः ।

वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः ।
अहमेकाकिनी बाला तवेह वसतिः कुतः ॥१२१॥

## तवैव चैतन्यमयप्रभावात्

यथैव सूर्यस्य मरीचियोगाज्ज्योतिर्मयं भाति शशाङ्कबिम्बम् ।
सचेतनं भाति तथैव विश्वं तवैव चैतन्यमयप्रभावात् ॥१२२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) यहाँ पर निन्दाच्छल में शिवजी की स्तुति की गई है। यथा—शिव जी को मैं जानता हूँ; निन्दापक्ष में इसका अर्थ यह है कि पहिले ही तुमको इन्होंने हताश किया था। तुम जान बूझ कर फिर उन्हीं को पाने की कामना करती हो। यह किसी प्रकार से उचित नहीं है। स्तुतिपक्ष में अर्थ यह है कि शिव जी सब के ईश्वर हैं। उन को केवल मैं क्यों, सब लोग जानते हैं। तुम उन्हीं को पाने की कामना कर रही हो। यह सर्वतोभाव से तुम्हारे ही उचित कार्य है, कारण ईश्वर को पाने की कामना सब कोई करते हैं।

'अमङ्गलाभ्यासरतिम्' इत्यादि वाक्य का स्तुतिपक्ष में अर्थ यह है। 'अ' शब्द का अर्थ विष्णु और 'मङ्गल' शब्द का अर्थ शुभ है। अतएव शिवजी विष्णु के समान केवल शुभ कार्य में व्यापृत रहते हैं। इस कारण क्या मैं इस विषय में तुम्हारा अनुमोदन नहीं करूँगा? अवश्य करूँगा।

इस श्लोक का तात्पर्य यह है कि जब पार्वती जी पति पाने की कामना से तपस्या कर रही थीं तब शिव जी ने उनकी परीक्षा के निमित्त 'वर्णी' अर्थात् ब्रह्मचारी के रूप में प्रगट हो कर यह सब वाक्य कहे जो द्व्यर्थवाचक हैं।

## तस्करस्य कुतो धर्मः ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

## तस्माच्छेषं हि कारयेत् ।

ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्धते यस्मात्तस्माच्छेषं हि कारयेत् ॥१२३॥

—चाणक्यशतकम् ।

## तस्माज्जातिर्न कारणम् ।

वेश्यागर्भसमुत्पन्नो वशिष्ठश्च महामुनिः ।
दासीगर्भसमुत्पन्नो नारदश्च महामुनिः ॥१२४॥
कैवर्त्तीगर्भ उत्पन्नो व्यासश्चैव महामुनिः ।
क्षत्रियागर्भ उत्पन्नो विश्वामित्रो महामुनिः ॥१२५॥
मृगीगर्भसमुत्पन्न ऋष्यशृङ्गो महामुनिः ।
कुम्भाच्चैव समुत्पन्नोऽगस्त्यश्चैव महामुनिः ॥१२६॥
शूद्रीगर्भसमुत्पन्नः कुशिकश्च महामुनिः ।
तपसा ब्राह्मणो भूयात्तस्माज्जातिर्न कारणम्(क) ॥१२७॥

## तस्मात्खल इति स्मृतः ।

खचित्रमपि मायावी रचयत्येव लीलया ।
लघुश्च महतां मध्ये तस्मात्खल इति स्मृतः ॥१२८॥

## तस्मात्पापं न कर्त्तव्यम् ।

काश्यां कृतातिपापस्य दारुणा रुद्रयातना ।
अहो ! रुद्रपिशाचत्वं नरकेभ्योऽपि दुःसहम् ॥१२९॥
तस्मात्पापं न कर्त्तव्यं मनागपि विभोः पुरे ।
जातं यत्तत्प्रमादेन प्रायश्चित्तेन नश्यति ॥१३०॥

—सत्यज्ञानानन्दतीर्थ—काशीस्तोत्रम् ।

---

(क) किं तपः? 'ब्रह्म सत्यं जगन्मिथ्येति अपरोक्षज्ञानात् अखिलब्रह्माण्डचैश्वर्यशान्तिसङ्कल्पबीजसंन्यासस्तपः' । —निरालम्बोपनिषद् ।

## तस्मात्सर्वगतं ब्रह्म ।

तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः ।
तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥१३१॥

—शङ्कराचार्य—आत्मबोधः ।

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१३२॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१३३॥

—भगवद्गीता ।

## तस्मादन्नात्परं किञ्चिन्न ।

अन्नं विधात्रा विहितं मर्त्यानां जीवधारणम् ।
तस्मादन्नात्परं किञ्चित्प्रार्थये न कदाचन ॥१३४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तस्मादर्थमेकं प्रसाधयेत् ।

न तदस्ति जगत्यस्मिन्यद्धनेन न लभ्यते ।
निश्चिन्त्य मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥१३५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तस्मादागम उच्यते।

**आ**—गतं शिववक्त्रेभ्यो
**ग**—तश्च गिरिजाश्रुतौ ।
**म**—तश्च वासुदेवस्य
तस्मादागम उच्यते ॥१३६॥

## तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ।

## तस्माद्बुद्धेस्तु नात्मनः ।

रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्त्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः (क) ॥१३७॥

—शङ्कराचार्य—आत्मबोधः।

## तस्माद्ब्रह्मणि ते स्थिताः ।

दृश्यताम्—'इहैव तैर्जितः सर्गः' इति ।

## तस्माद्भावो हि कारणम् ।

न काष्ठे विद्यते देवो न पाषाणे न मृण्मये ।
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम् ॥१३८॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तस्मादेतत्त्रयं त्यजेत ।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥१३९॥

—भगवद्गीता।

## तस्मादेतन्न चिन्तयेत् ।

लब्धं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते ।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥१४०॥

—विष्णुशर्मा—हितोपदेशः।

## तस्माद्योगी भवार्जुन ।

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥१४१॥

—भगवद्गीता।

---

(क) रागेति। बुद्धौ सत्यां विद्यमानायां रागः विषयानुरागः इच्छा सुखं दुःखादि च प्रवर्त्तते कार्यं करोतीत्यर्थः। सुषुप्तौ सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्येवंरूपा तृप्तिर्यस्याः निद्राया अवसाने भवति सा प्रगाढानिद्रेति भावः तस्यां तस्याः बुद्धेः नाशे व्यपगमे तत् रागेच्छा-सुखदुःखादि न अस्ति न भवति, तस्मात् बुद्धेस्तु बुद्धेरेव रागेच्छासुखदुःखादीति शेषः आत्मनः न, रागेच्छादिको धर्म इति भावः।

—जीवानन्द विद्यासागर।

## तस्माद्वेदस्य वेदता ।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
यत्तं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥१४२॥

## तस्मान्न तद्वाञ्छयेत् ।

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
सौदास्यं तदवस्थमर्जुनवधं सञ्चिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् (क) ॥१४३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तस्मिन्कृष्णे परात्परे ।

लीयते भौतिकं विश्वं कर्म कर्मफलं तथा ।
तन्मयेनात्मना दृष्टे तस्मिन्कृष्णे परात्परे ॥१४४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## तस्मिन्दृष्टे निवर्त्तते ।

स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता ।
जीवस्य तात्त्विकं रूपं तस्मिन्दृष्टे निवर्त्तते (ख) ॥१४५॥

—शङ्कराचार्य—आत्मबोधः ।

---

(क) पाठान्तरम्—'रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
कारागारनिषेवणं च मरणं सञ्चिन्त्य लङ्केश्वरे
सर्वः कालवशेन नश्यति नरः को वा परित्रायते' ॥
सौदास्यं तदवस्थं=सौदास्यस्य राक्षसयोनिप्राप्तिम् ।

(ख) स्थाणौ शाखापल्लवविहीने शुष्के तरौ पुरुषवत् अयं पुरुषस्तिष्ठतीतिवत् ब्रह्मणि आत्मनि जीवता देहित्वं भ्रान्त्या मोहेन कृता । मोहान्धा एव ब्रह्म देहिनं वदन्तीति भावः । तस्मिन् आत्मनि दृष्टे साक्षात्कृते सति जीवस्य तात्त्विकं रूपं स्वरूपमित्यर्थः निवर्त्तते ब्रह्मणि जीवज्ञानं दूरीभवतीत्यर्थः ।

—जीवानन्द विद्यासागर ।

## तस्मिन्दृष्टे परावरे ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे (क) ॥१४६॥

—मुण्डकोपनिषद् ।

## तस्मिन्नष्टे क्व विश्वता ।

अपादानं प्रपञ्चस्य मृद्ब्राण्डस्येव दृश्यते ।
अज्ञानञ्चेति वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ॥१४७॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## तस्मिन्विनष्टे सकलं विनष्टम् ।

न ह्यविद्या मनसोऽतिरिक्ता मनो ह्यविद्या भवबन्धहेतुः ।
तस्मिन्विनष्टे सकलं विनष्टं विजृम्भितेऽस्मिन्सकलं विजृम्भते ॥१४८॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## तस्मै नमो भगवते कुसुमायुधाय ।

शम्भुस्वयम्भुहरयो हरिणेक्षणानां येनाक्रियन्त सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रविचित्रिताय तस्मै नमो भगवते कुसुमायुधाय ॥१४९॥

—भर्तृहरि—शृङ्गारशतकम् ।

## तस्मै नमः कर्मणे ।

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो (ख) महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके (ग) भिक्षाटनङ्कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥१५०॥

—भर्तृहरि—नीतिशतकम् ।

---

(क) परावरे=कारणात्मना परं, कार्यात्मना च अवरं, तस्मिन् ब्रह्मणि ।
(ख) पाठान्तरम्—'न्यस्तो'
(ग) पाठान्तरम्—'कपालपाणिरटनं' इति अष्टरत्ने ।

## तस्मै प्रभविष्णवे नमः ।

किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खसादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥१५१॥

—श्रीमद्भागवतम् ।

## तस्मै सुभद्रश्रवसे नमो नमः ।

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥१५२॥

—श्रीमद्भागवतम् ।

## तस्य कार्यं न विद्यते ।

यस्त्वात्मरतिरेवस्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥१५३॥

—भगवद्गीता ।

## तस्य जन्म निरर्थकम् ।

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥१५४॥

—नारायण पण्डित—हितोपदेशः ।

## तस्य तदेव हि मधुरम् ।

दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव ।
तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ॥१५५॥

## तस्य तृतीया गतिर्भवति ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति (क) ॥१५६॥

—भर्तृहरि—नीतिशतकम् ।

---

(क) पाठान्तरम्—'यो न ददाति न भुङ्क्ते सति विभवे न तस्य तद्द्रव्यम्' इति ।

## तस्य देवोऽपि शङ्कते ।

उद्यमः साहसं धैर्यं शक्तिर्बुद्धिः पराक्रमः ।
षड़ेते यस्य तिष्ठन्ति तस्य देवोऽपि शङ्कते ॥१५७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## तस्य प्रज्ञा प्रतिष्ठिता ।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥१५८॥

—भगवद्गीता।

## तस्य भासा सर्वमिदं विभाति ।

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः? ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति (क) ॥१५९॥

—कठोपनिषद्।
—मुण्डकोपनिषद्।

## तस्य यमः किं कुरुते चर्चा।

भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता
सकृदपि यस्य मुरारिसमर्चा तस्य यमः किं कुरुते चर्चाम् ॥१६०॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम्।

## तस्य वश्या मनोरमा ।

तर्कभाषा मुखे यस्य करस्था यस्य मञ्जरी ।
कण्ठे मुक्तावली यस्य तस्य वश्या मनोरमा ॥१६१॥

---

(क) पूर्वोक्तस्य (दृश्यताम् 'किमु भाति विभाति वा' इति) आत्मप्रत्ययसाधनस्य कर्तव्य-मानसिक-प्रश्नस्य उत्तरमिदम्। तत्र ब्रह्मणि सूर्यः न भाति, तत् ब्रह्म न प्रकाशयतीत्यर्थः, चन्द्रतारकं न भाति, इमाः विद्युतः न भान्ति, अयम् अग्निः कुतः? तं भान्तं दीप्यमानं एव एतत् सर्वं सूर्यादिकम् अनुभाति अनुदीप्यते, तस्य ब्रह्मणः एव भासा दीप्त्या सर्वम् इदम् विभाति ।

—'शंकरकृपा' टीका।

दृश्यताम्—'तद्धाम परमं मम' इति—भगवद्गीता।

## तस्याहं कुलबालिका ।

पर्वताग्रे रथारूढो भूमौ तिष्ठति सारथिः ।
चक्रवद्भ्रमते पृथ्वी तस्याहं कुलबालिका (क) ॥१६२॥

## तस्याहं न प्रणश्यामि ।

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति (ख) ॥१६३॥

—भगवद्गीता ।

## तस्यैव जीवितं श्लाघ्यम् ।

पशवोऽपि न जीवन्ति केवलं स्वोदरम्भराः ।
तस्यैव जीवितं श्लाघ्यं यः परार्थे हि जीवति ॥१६४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तातेतिभाषणपरा स तु कुन्तघातः ।

आपक्वता शिरसिजे त्रिवली कपोले
दन्तावली विगलिता न ततो विषादः ।
एणीदृशो युवतयः पथि मां निरीक्ष्य (ग)
तातेतिभाषणपरा स तु कुन्तघातः (घ) ॥१६५॥

—कालिदास—शृङ्गारतिलकम् ।

## तापाय केवलमसौ न तु तापशान्त्यै ।

अन्तर्गता मदनवह्निशिखावली या सा बाधते किमिह चन्दनलेपनेन ।
यत्कुम्भकारपलनोपरिपङ्कलेपस्तापाय केवलमसौ न तु तापशान्त्यै ॥१६६॥

—कालिदास—शृङ्गारतिलकम् ।

---

(क) कुम्भकारस्य ।
(ख) प्रणश्यामि=अदृश्यः भवामि । प्रणश्यति=अदृश्यः भवति ।
(ग) पाठान्तरम्—'विलोक्य' ।
(घ) पाठान्तरम्—'खलु वज्रपातः' । हास्यरसात्मकः श्लोकोऽयम् ।

## ताम्बूलं मुखरोगनाशनपुणम् ।

ताम्बूलं मुखरोगनाशनपुणं संवर्धनं तेजसो
नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम् ।
वक्त्रालङ्करणं प्रहर्षजननं विद्वन्नृपाग्रे रणे
कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥१६७॥

## तारकत्वात्सदा तारा ।

तारकत्वात्सदा तारा सुखमोक्षप्रदायिनी ।
उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तिता ॥१६८॥

—तन्त्रसारम् ।

## तारय मामतिदीनं हीनम् ।

तारय मामतिदीनं हीनं तव शरणागतमगतिमधीनम् ।
त्वमसि पतितजनतारणकारी पापविषमविषदाहनिवारी ॥१६९॥

—ताराकुमार—कृष्णभक्तिरसामृतम ।

## तारुण्यं गतमेव निष्फलमहो ।

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥१७०॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## तावच्चिकित्सा कर्त्तव्या (यावत्कण्ठगताः प्राणाः) ।

दृश्यताम्—'कालस्य कुटिला गतिः' इति ।

## तावद्गर्जन्ति मण्डूकाः ।

तावद्गर्जन्ति मण्डूकाः कूपमाश्रित्य निर्भयाः ।
यावत्करिकराकारः कृष्णसर्पो न विद्यते ॥१७१॥

## तावद्धत्ते प्रतिष्ठाम् ।

तावद्धत्ते प्रतिष्ठां प्रशमयति मनश्चापलं तावदेव
तावत्सिद्धान्तसूत्रं स्फुरति हृदि परं विश्वलोकैकदीपम् ।
क्षीराब्धेः पारवेलावलयविलसितैर्मानिनीनां कटाक्षै—
र्यावन्नो हन्यमानं कलयति हृदयं दीर्घलोलायताक्षैः ॥१७२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।

## तावन्महत्त्वं पाण्डित्यम् ।

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ।
यावज्ज्वलति नाङ्गेषु स्वतः पञ्चेषुसायकः ॥१७३॥

—भर्तृहरि—शृङ्गारशतकम् ।

## तिलतैलमेव मृष्टम् ।

अविदितपरमानन्दो वदति जनो विषयमेव रमणीयम् ।
तिलतैलमेव मृष्टं येन न दृष्टं घृतं क्वापि ॥१७४॥

## तिष्ठत्येकां निशां चन्द्रः ।

दृश्यताम्—'गुणवान्सुचिरस्थायी देवो न हि जायते' इति ।

## तिस्रः पुंसां विडम्बनम् ।

पल्लवग्राहि पाण्डित्यं क्रयक्रीतं च मैथुनम् ।
भोजनं च पराधीनं तिस्रः पुंसां विडम्बनम् ॥१७५॥

—विष्णुशर्मा—हितोपदेशः ।

## तीर्थराजः प्रयागः ।

कलौ दानादेर्वा भवति यदपि द्वापरे वा मखस्य
कृते त्रेतायां च प्रगुणतपसो वा फलं ज्ञानतो वा ।
त्रिवेण्यः स्वच्छाम्भोललितलहरीस्पर्शमात्रेण माघे
जनेभ्यस्तत्सर्वं वितरति सदा तीर्थराजः प्रयागः ॥१७६॥

## तीर्थानि तोयरूपाणि ।

तीर्थानि तोयरूपाणि देवान्पाषाणमृण्मयान् ।
योगिनो न प्रपद्यन्ते आत्मध्यानपरायणाः ॥१७७॥

—उत्तरगीता ।

## तीर्थे—तीर्थे—तीर्थे ।

विद्यातीर्थे जगति विबुधाः साधवः सत्यतीर्थे
गङ्गातीर्थे मलिनमनसो योगिनो ध्यानतीर्थे ।
धारातीर्थे धरणिपतयो दानतीर्थे धनाढ्या
लज्जातीर्थे कुलयुवतयः पातकं क्षालयन्ति ॥१७८॥

## तुण्डे तुण्डे सरस्वती ।

## तुहीति प्रव्यक्तम् ।

वसन्ताग्नौ मग्ना चिरविरहरुग्णा प्रियसखी
यदि प्राणान्मुञ्चेत्तदिह वधभागी भवतु कः ।
वयो वा स्नेहो वा कुसुमविशिखो वेति विमृश-
न्तुहीति प्रव्यक्तं पिकनिकरझङ्कारमशृणोत् ॥१७९॥

## तूर्णमानीयतां चूर्णम् ।

तूर्णमानीयतां चूर्णं पूर्णचन्द्रनिभानने !
पर्णानि स्वर्णवर्णानि शीर्णान्याकर्णलोचने (क) ॥१८०॥

—वररुचि ।

विना खदिरसारेण हारेण हरिणीदृशः ।
नाधरे जायते रागो नानुरागः पयोधरे (ख) ॥१८१॥

—कालिदास ।

---

(क) (ख) इन दोनों श्लोकों के विषय में यह किंवदन्ती है—

दोनों के बीच में कौन कवि है, इस विषय को लेकर वररुचि और कालिदास सदा परस्पर विवाद किया करते थे। एक समय दोनों एक स्थान में खड़े होकर उच्च स्वर से वितण्डा कर रहे थे कि इतने में वृद्धा स्त्री का रूप धारण कर सरस्वती देवी

## तूलतो याचको लघुः ।

तृणादपि लघुस्तूलस्तूलतो याचको लघुः ।
न नीतो वायुना कस्मादर्थप्रार्थनशङ्कया ॥१८२॥

## तृणमपि प्रायेण वज्रायते ।

येनाखण्डलदन्तिदन्तकुमुदान्याकुञ्चितान्याहवे
धारा यत्र पिनाकपाणिपरशोराकुञ्चितास्त्याहता ।
तद्वद्गोऽथ नृसिंहपाणिकरजैर्दीर्णं हि यत्साम्प्रतं
दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते (क) ॥१८३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

वहाँ पर उपस्थित हुईं और सस्नेह वाक्य से उनसे पूछा—'बाबा, तुम दोनों किस कारण उन्मत्तप्राय होकर इतना विवाद और वादानुवाद कर रहे हो' ? उन्होंने कहा, हम दोनों के बीच में कौन कवि है, इस विषय की मींमासा के निमित्त हम दोनों यह विवाद कर रहे हैं। तब सरस्वती ने कहा 'तुम दोनों प्रत्येक ताम्बूल भक्षण के विषय में एक एक श्लोक बनाओ। उन श्लोकों को सुन कर, तुम दोनों में कौन कवि है मैं विचार करूँगी'। तदनुसार वररुचि ने

'तूर्णमानीयतां चूर्णं' इत्यादि

यह श्लोक और कालिदास ने

'विना खदिरसारेण' इत्यादि

यह श्लोक सुनाया। इन दोनों श्लोकों को सुनकर सरस्वती देवी ने कहा, 'कविर्वर-रुचिः'। तब कालिदास ने अत्यन्त असन्तुष्ट होकर कहा 'तब मैं क्या हूँ?' इसके उत्तर में सरस्वती देवी ने मुस्करा कर कहा 'त्वमहम्।'

तब कालिदास ने पूछा तुम कौन हो? इस प्रश्न को सुनते ही सरस्वती देवी ने जरती मूर्ति त्याग कर अपना स्वरूप धारण किया। तब दोनों विस्मयसागर में मग्न और पुलकितकलेवर हो भक्तिपूर्वक प्रणाम और प्रदक्षिणा कर सरस्वती देवी की स्तुति करने लगे।

(क) पाठान्तरम्—'यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे
धारा यत्र पिनाकपाणिपरशोराकुण्ठितामागताः ।
तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते साम्प्रतं
दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते' ॥

—हिरण्यकशिपोरुक्तिरियम् ।

आखण्डलः=सहस्राक्षः, इन्द्रः । दन्ती=ऐरावतः ।

## तृणलवनिभा सन्ति गुणिनः ।

## तृणवन्मन्यते जगत् ।

कुवंशपतितो राजा मूर्खपुत्रश्च पण्डितः ।
अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥ १८४॥

—चाणक्यशतकम् ।

## तृणं ब्रह्मविदः स्वर्गः ।

तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् ।
जिताक्षस्य तृणं नारी निःस्पृहस्य तृणं जगत् (क) ॥ १८५॥

## तृषार्त्तो दुःखमाप्नोति ।

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् ।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः ॥१८६॥

—विष्णुशर्मा—हितोपदेशः ।

## तृष्णा न जीर्णा वयमेव जीर्णाः ।

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥१८७॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## तृष्णा प्रत्युत जायते ।

भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति ।
लवणेनान्तरालेन तृष्णा प्रत्युत जायते ॥१८८॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## तृष्णा वैतरणी नदी ।

क्रोध एव महाञ्छत्रुस्तृष्णा वैतरणी नदी ।
सन्तोषो नन्दनवनं शान्तिरेव हि कामधुक् ॥१८९॥

---

(क) पाठान्तरम्—'उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं भार्या निस्पृहस्य तृणं जगत्' ॥

## (तथा) तृष्णां परित्यजेत् ।

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तथा तृष्णां परित्यजेत् ॥१९०॥
यादुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥१९१॥
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वभिजायते ॥१९२॥
तथाह्येनामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥१९३॥

—महाभारते—ययात्युपाख्यानम् ।

## तृष्णेऽधुना मुञ्च माम् ।

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरिताम्पतिर्नृपतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥१९४॥

——भर्त्तृहरि—वैराग्यशतकम् ।

## तृष्णे ! नाद्यापि सन्तुष्यसि ।

भ्रान्त्वा देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव—
त्तृष्णे ! जृम्भसि पापकर्मपिशुने ! नाद्यापि सन्तुष्यसि॥ १९५ ॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## तृष्णैका तरुणायते ।

बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १९६ ॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## तृष्णैका निरुपद्रवा ।

यौवनं जरयाग्रस्तमारोग्यं व्याधिभिर्हतम् ।
जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥१९७॥

## ते क्षत्रियाः कुण्डलिनो युवानः ।

ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविद्धताङ्गाः ।
कुम्भेषु लग्नाः सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् (क) ॥१९८॥

—भगवतो व्यासस्य ।

## ते चापि प्रलयं गताः ।

सुकृतान्यपि कर्माणि राजभिः सगरादिभिः ।
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥१९९॥

—विष्णुशर्मा—हितोपदेशः ।

## ते नराः स्वर्गगामिनः ।

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥२००॥

—विष्णुशर्मा—हितोपदेशः ।

## ते नूनं दैववञ्चिताः ।

हसन्तीं वा हसन्तीं (ख) वा हसन्तीं वामलोचनाम् ।
हेमन्ते ये न सेवन्ते ते नूनं दैववञ्चिताः ॥२०१॥

## ते मे भक्ततमा मताः ।

ये मे भक्तजनाः पार्थ! न मे भक्ताश्च ते जनाः ।
मद्भक्तानाञ्च ये भक्तास्ते मे भक्ततमा मताः ॥२०२॥

—आदिपुराणम् ।

---

(क) वीररसात्मकः श्लोकोऽयम् ।

(ख) हसन्तीं वा हसन्तीं अर्थात् जलती हुई अंगीठी । हसन्ती अग्निपात्र विशेषः ।

## ते वृद्धकाले परिभूयमानाः ।

ये बालभावे न पठन्ति विद्यां कामातुरा यौवननष्टचित्ताः ।
ते वृद्धकाले परिभूयमाना यथैव गात्रे शिशिरेऽप्यवस्त्राः ॥२०३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## ते साम्प्रतं विधिवशात्कलहंसपोताः ।

ये वर्धिताः कनकपङ्कजरेणुमध्ये मन्दाकिनीविमलनीरतरङ्गभङ्गैः ।
ते साम्प्रतं विधिवशात्कलहंसपोताः शैवालमालजटिलं जलमाविशन्ति ॥२०४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## ते साम्प्रतं विधिवशात् क्षपयन्ति कालम् ।

ये वर्धिताः करिकपोलमदेन भृङ्गाः प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः ।
ते साम्प्रतं विधिवशात् क्षपयन्ति कालं निम्बेषु चार्ककुसुमेषु च चत्वरेषु ॥२०५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## ते हि नो दिवसा गताः ।

जीवत्सु तातपादेषु नवे दारपरिग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः (क)॥२०६॥

—भवभूति—उत्तररामचरित।

## तेजस्तेजीयसः सह्यम् ।

तेजस्तेजीयसः सह्यं तेन तेजीयसो न हि ।
सूर्यो हि शिरसा सह्यो न पद्भ्यां तापितं रजः ॥२०७॥

## तेजीयसां न दोषाय ।

तेजीयसां न दोषाय अग्नेः सर्वभुजो यथा ।
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ॥२०८॥

---

(क) श्री रामचन्द्र जी जब अयोध्या में आये हैं और लक्ष्मण जी ने उनको चित्र दिखलाये हैं उस समय उन्होंने यह कहा था "तब हमारे पिता जी जीवित थे, हम सबों का उसी समय विवाह भी हो गया था, हमारी माताएँ हमारे सुख स्वच्छन्दता के विषय में सर्वदा चिन्ता कर रही हैं। (हाय) हमारे वह सब सुख के दिन अतीत हो गये हैं।"

## तेन क्रीतमिदं जगत् ।

दृश्यताम्—'एकतः—एकतो—एकतः' इति ।

## तेन जायां विदुर्बुधाः ।

प्रजानां रक्ष्यमाणानामात्मा भवति रक्षितः ।
आत्मा हि जायते तस्यां तेन जायां विदुर्बुधाः ॥२०९॥
—महाभारते विराट्पर्वणि ।

## तेन जीवाम्यनामयः ।

किमद्य मम सम्पन्नं प्रातर्वा भविता पुनः ।
इति चिन्ताज्वरो नास्ति तेन जीवाम्यनामयः ॥२१०॥
जरामरणदुःखेषु राज्यलाभसुखेषु च ।
न बिभेमि न हृष्यामि तेन जीवाम्यनामयः ॥२११॥
यथाकालमुपायातावर्थानर्थौ समौ मम ।
हस्ताविव शरीरस्थौ तेन जीवाम्यनामयः ॥२१२॥
सुखितोऽस्मि सुखापन्ने दुःखितो दुःखिते जने ।
सर्वस्य प्रियमित्रं च तेन जीवाम्यनामयः ॥२१३॥
अयं बन्धुः परश्चायं ममायमयमन्यतः ।
इति ब्रह्मन्न जानामि तेन जीवाम्यनामयः ॥२१४॥

## तेन मुह्यन्ति जन्तवः ।

दृश्यताम्—'अज्ञानेनावृतं ज्ञानम्' इति ।

## तेन मे पुनरागमनं नृपः ।

हृदि लज्जोदरे बह्निः स्वभावादग्निरुच्छिखः ।
तेन मे दग्धलज्जस्य पुनरागमनं नृप ! ॥२१५॥

## तेन सांख्याः प्रकीर्त्तिताः ।

संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।
तत्त्वानि च चतुर्विंशं तेन सांख्याः प्रकीर्त्तिताः ॥२१६॥
—महाभारतम् ।

## तेभ्यो नरेभ्यो नमः ।

वाञ्छा सज्जनसङ्गमे गुणिगणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि (क) शक्तिरात्मदमने संसर्गमुक्तिःखले—
ष्वेते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ।।२१७।।

—भर्तृहरि—नीतिशतकम् ।

## तेषामादित्यवज्ज्ञानम् ।

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ।।२१८।।

—भगवद्गीता ।

## तेषां वाराणसी गतिः ।

मातापितृपरित्यक्ता ये त्यक्ता निजबन्धुभिः ।
येषामन्यगतिर्नास्ति तेषां वाराणसी गतिः ।।२१९।।

## तेषां शान्तिः शाश्वती नेतरेषाम् ।

नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ।।२२०।।

—कठोपनिषद् ।

## तेषां सुखं शाश्वतं नेतरेषाम् ।

एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।।२२१।।

—कठोपनिषद् ।

एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।।२२२।।

—श्वेताश्वतरोपनिषद् ।

---

(क) 'चक्रिणि' इति पाठान्तरम् ।

## तैलयन्त्रे बलीवर्दा इव ।

भगवद्भक्तिरहिता महामोहनिमीलिताः ।
तैलयन्त्रे बलीवर्दा इव घूर्णन्ति सर्वदा ॥२२३॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## तं तमेवैति कौन्तेय ।

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः ॥२२४॥
—भगवद्गीता ।

## तं तं लोकं जयते तांश्च कामान् ।

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥२२५॥
—मुण्डकोपनिषद् ।

## तं देशं नैव पश्यामि ।

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं देशं नैव पश्यामि यत्र भ्राता सहोदरः (क) ॥२२६॥

## तं देशं परिवर्जयेत् ।

यस्मिन्देशे न संमानो न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चित्तं देशं परिवर्जयेत् (ख) ॥२२७॥
—चाणक्यशतकम् ।

## तं बन्दे श्रीसुरेश्वरम् ।

श्रियःकरं श्रियोनाथं श्रीधरं श्रीवरप्रदम् ।
श्रीवत्सलधरं सौम्यं तं बन्दे श्रीसुरेश्वरम् ॥२२८॥
—शङ्कराचार्य—हरिनाममालास्तोत्रम् ।

---

(क) करुणरसात्मकः श्लोकोऽयम् ।
(ख) "न तत्र दिवसं वसेत्" इति पाठान्तरम् ।

## तं विद्याद्दुःखसंयोगवियोगम् ।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितं
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा (क) ॥२२६॥

—भगवद्गीता ।

## त्यक्तलज्जः सदा भवेत् ।

धनधान्यप्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥२३०॥

—चाणक्यशतकम् ।

## त्यजेत् क्षुधार्त्तो महिलां स्वपुत्रम् ।

## त्याग एको गुणः श्लाघ्यः ।

त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः ।
त्यागादेव हि पूज्यन्ते पशुपाषाणपादपाः (ख) ॥२३१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## त्यागाच्छान्तिरनन्तरम् ।

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम् ॥२३२॥

—भगवद्गीता ।

## त्याज्यः श्रुतिविरुद्धांशः ।

अक्षपादप्रणीते च कणादे सांख्ययोगयोः ।
त्याज्यः श्रुतिविरुद्धांशः श्रुत्येकशरणैर्नृभिः ॥२३३॥

---

(क) दृश्यताम्—'तद्ब्रह्मेत्यवधारयेत्' इति ।

—शङ्कराचार्य—आत्मबोधः ।

(ख) पाठान्तरम्—'दानेन श्लाघ्यतां यान्ति पशुपाषाणपादपाः ।
दानमेव गुणः श्लाघ्यः किमन्यैर्गुणकोटिभिः' ॥

जैमिनीये च वैयासे विरुद्धांशो न कश्चन ।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥२३४॥
—पाराशरवाक्यम् ।

## त्रय एवाधनाः राजन् ।

त्रय एवाधनाः राजन्! भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥२३५॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## त्रयाणामेकमश्नुते ।

अत्यन्तमतिमेधावी त्रयाणामेकमश्नुते ।
अल्पायुषो दरिद्रो वा ह्यनपत्यो न संशयः ॥२३६॥

## त्रयं पुंसां विडम्बनम् ।

वृद्धकाले मृता भार्या बन्धुहस्तगतं धनम् ।
भोजनं च पराधीनं त्रयं पुंसां विडम्बनम् (क) ॥२३७॥

## त्रयः कालकृताः पाशाः ।

विवाहो जन्म मरणं यदा यत्र च येन च ।
त्रयः कालकृताः पाशाः शक्यन्ते न निवर्त्तितुम् ॥२३८॥

## त्रातव्याः प्राणिनो बुधैः ।

तवात्मानः प्रियाः प्राणाः सर्वेषां प्राणिनां तथा ।
तस्मान्मृत्युभयात्तेऽपि त्रातव्याः प्राणिनो बुधैः ॥२३९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) दृश्यताम्—'पुस्तकस्था तु या विद्या' इति ।
'किं पातकमतःपरम्' इति ।

## त्राहि दयामय ! मां गतिहीनम् ।

इह भवकाराभवने पतितं कर्मनिगडदृढबन्धनसहितम् ।
पापमलिनमतिमतिशयदीनं त्राहि दयामय ! मां गतिहीनम् ॥२४०॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## त्राहि मां जहि वा नाथ ।

दुष्कृतं सुकृतं वापि हरे ! तुभ्यं समर्पये ।
त्राहि मां जहि वा नाथ यदिच्छसि तथा कुरु ॥२४१॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## त्रिभिः प्रसादैरनुकूलितोऽहम् ।

तव प्रसादात्पवनप्रसादात्तवैव भर्त्तुश्चरणप्रसादात् ।
त्रिभिः प्रसादैरनुकूलितोऽहं व्यलङ्घयं गोष्पदवत्समुद्रम् (क) ॥२४२॥

## त्रिविधं धूर्त्तलक्षणम् ।

मुखं पद्मदलाकारं वाचा चन्दनशीतला ।
हृदयं कर्तरीतुल्यं (ख) त्रिविधं धूर्त्तलक्षणम् ॥२४३॥

## त्रिविधं निष्फलं भवेत् ।

अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घनैः ।
व्यग्रचित्तेन यज्जप्तं त्रिविधं निष्फलं भवेत् ॥२४४॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) हनुमत उक्तिरियम् ।
जब हनूमान् समुद्रलंघन कर लङ्का में जाकर अशोककाननस्थिता सीता के निकट पहुँचे और उनको श्रीरामचन्द्रजी की वार्त्ता सुनाई, तब सीता ने उनसे पूछा, तुमने समुद्र लङ्घन कैसे किया। इसका उत्तर हनूमान ने उपर्युक्त श्लोक में दिया ।

(ख) 'हृदयं क्रोधसंयुक्तं' इति पाठान्तरम् ।

## त्रिविधाः पुरुषाः राजन् ।

त्रिविधाः पुरुषाः राजन्! उत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥२४५॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## त्रीणि त्यक्त्वा सुखी भव ।

लोभमूलानि पापानि व्याधयो रसमूलकाः ।
स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भव ॥२४६॥

## त्रीणि रम्याणि दूरतः ।

दूरस्थाः पर्वता रम्या वेश्या च मुखमण्डने ।
युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥२४७॥

## त्रैलोक्यदीपको धर्मः ।

शर्वरीदीपकश्चन्द्रः प्रभाते दीपको रविः ।
त्रैलोक्यदीपको धर्मः सत्पुत्रः कुलदीपकः ॥२४८॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## त्रैलोक्यराज्येन किम् ।

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्षभैक्षमशनं निद्रा श्मशाने वने ।
स्वातन्त्र्येण निरङ्कुशं विहरणं स्वान्तं प्रशान्तं सदा
स्थैर्यं योगमहोत्सवेऽपि च यदि त्रैलोक्यराज्येन किम् ॥२४९॥
—भर्तृहरि—वैराग्यशतकम् ।

## त्वत्कथैव ननु मे रसायनम् ।

स्निग्धमालपसि रूक्षमेव वा त्वत्कथैव ननु मे रसायनम् ।
शीतलं सलिलमुष्णमेव वा पावकं हि शमयेन्न संशयः ॥२५०॥

## (भवानि) त्वत्पाणिग्रहणपरिपाटीफलमिदम् ।

चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि ! त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥२५१॥

—शङ्कराचार्य—देव्यपराधक्षमापनस्तोत्रम् ।

## त्वयि मुरहर ! विपरीतम् ।

अम्बुजमम्बुनि जातं क्वचिदपि तु न जातमम्बुजादम्बु ।
त्वयि मुरहर ! विपरीतं पदाम्बुजान्महानदी जाता (क) ॥२५२॥

## त्वयि मे भावनिबन्धना रतिः ।

मनसापि न विप्रियं मया कृतपूर्वं तव किं जहासि माम् ।
ननु शब्दपतिः क्षितेरहं त्वयि मे भावनिबन्धना रतिः ॥२५३॥

—कालिदास—रघुवंशम् ।

## त्वय्येव निपतन्त्योघाः ।

बहुधाऽप्यगमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्यैव निपतन्त्योघा जाह्नवीया इवार्णवे ॥२५४॥

—कालिदास—रघुवंशम् ।

## त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ।

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयः स्पर्शेन यस्यापरे ।
किं चातःपरं तव स्तुतिपदं त्वं जीवनं जीविनां
त्वं चेन्नीचपथेन गच्छसि पयः ! कस्त्वां निरोद्धुं क्षमः (ख) ॥२५५॥

—कविभट्ट—पद्यसंग्रहः ।

---

(क) पाठान्तरम्—'मुरभिदि तद्विपरीतं पादाम्भोजान्महानदी जाता' इति।
अद्भुतरसात्मकः श्लोकोऽयम् ।

(ख) अतिसुजनं कुमार्गगमनोद्यतं पितरं प्रति राजपुत्रस्य लक्ष्मणसेनस्य उक्तिरियम् ।

## त्वं तदेव धनं मम।

किं ददामि ददामीति चिन्तयामि हरे सदा।
यद्देयमस्ति मे तुभ्यं त्वं तदेव धनं मम (क) ॥२५६॥
—ताराकुमार—कृष्णभक्तिरसामृतम्।

## त्वं पदं तत्पदार्थे।

हेम्नः कार्ये हुतवहगतं हेममेवेति यद्वत्
क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये।
एवं सर्वं समरसतया त्वं पदं तत्पदार्थे (ख)
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥२५७॥
—परमहंसशुकदेव—शुकाष्टकम्।

## त्वं ब्रह्मणो बिम्बमहो बिभर्षि।

सनातनि ब्रह्मविभूतिमूर्ते! तवैव रूपं प्रतिभाति विश्वम्।
यथा जवायाः स्फटिकस्य भित्ति स्त्वं ब्रह्मणो बिम्बमहो बिभर्षि (ग)॥२५८॥
—ताराकुमार—कृष्णभक्तिरसामृतम्।

---

(क) यह श्लोक 'बदन अधिकारी' के यात्रा के गीत का यथार्थ अनुवाद है। श्रीकृष्ण के योगी का वेष धारण कर राधिका के निकट आकर भिक्षा माँगने पर राधा ने वही छद्मवेषी अपने प्राणेश्वर को देख कर पहचान लिया और उनकी प्रार्थना का उत्तर इस प्रकार से दिया—
'कि दिब कि दिब बँधू! मने करि आमि।
ये धन तोमारे दिब, (बँधू!) सेइ धन (आमार) तुमि'॥

(ख) हेम्नः इति। हेम्नः काञ्चनस्य कार्यं कटककुण्डलादि हुतवहगतं अग्निप्रविष्टं यद्वत् यथा हेममेवेति नान्यदिति। यथा समरसतया अभिन्नस्वादतया क्षीरे दुग्धे क्षीरमेवेति शेषः, यथा च अम्बुमध्ये तोयं समरसतया तोयमेवेति शेषः, एवम् इत्थं सर्वं जगत् समरसतया ज्ञेयमिति शेषः, तस्मात् तत्पदार्थे ब्रह्मपदार्थे त्वं पदं तत्त्वमसीति वाक्यार्थमिति भावः दृष्ट्वेति शेषः निस्त्रैगुण्ये त्रिगुणातीते पथि मार्गे आत्मज्ञानरूपे इति भावः विचरतः जनस्येति शेषः विधिः नित्यकाम्यनैमित्तिकव्यापारनियमः कः? न कोऽपीत्यर्थः, अवैधेषु प्रतिषेधः कः? न कोऽपीत्यर्थः।
—जीवानन्द विद्यासागर।

(ग) यहाँ पर प्रकृति स्फटिकस्वरूप और ब्रह्म जवापुष्पस्वरूप है। प्रकृति पर जो ब्रह्म का प्रतिबिम्ब पड़ता है, उसी प्रतिबिम्ब को जीवात्मा जानो। पुनः जीवात्मा पर जो मन का प्रतिबिम्ब पड़ता है, उसका नाम बन्ध, अर्थात् भवबन्धन है। मन वा मनोवृत्ति प्रकृति की

## त्वं हि कर्मैक साक्षी ।

मनसि वचसि काये जागरे स्वप्नसङ्गे यदि मम पतिभावो राघवादन्यपुंसि ।
तदिह दह ममाङ्गं पावनं पावकेदं सुकृतदुरितभाजां त्वं हि कर्मैक साक्षी ॥२५९॥

—रामायणम् ।

---

# द

## (पायस) दग्धो दध्यपि फूत्कृत्य भक्षयति ।

दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति (क) ॥१॥

—विष्णुशर्मा—हितोपदेशः ।

---

एक अवस्था मात्र है। जैसे स्फटिक के निकट से जवा पुष्प को हटा लेने से प्रतिबिम्ब-स्वरूप पृथक् पदार्थ का कोई अस्तित्व नहीं रहता है, उसी प्रकार प्रकृति से जो ब्रह्म को अलग कर लिया जाय, तो जीवात्मारूप पृथक् पदार्थ का कोई अस्तित्व नहीं रहता है। अर्थात् जब तक प्रकृति में ब्रह्म के प्रतिबिम्ब का सम्बन्ध देखोगे तभी तक जीवात्मा का पृथक् अस्तित्व उपलब्ध होगा; अद्वैतज्ञान होने पर वही प्रतिबिम्बभाव लय को प्राप्त होने से एक मात्र ब्रह्म के अतिरिक्त और कुछ नहीं रहेगा। इस प्रकार जीवात्मा के अस्तित्वबुद्धि के लय होने से भवबन्धनमोचन अर्थात् महानिर्वाण होता है। जीवात्मा की उपलब्धि, अर्थात् 'अहं सुखी अहं दुःखी' इत्याकारक ज्ञान प्रतिबिम्बवत् पदार्थ है, इसी ज्ञान का जीवात्मा के साथ ही लय हो जाता है।

'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते' ॥

—भगवद्गीता ।

अर्थात्, मैं चेतन हूँ, मैं कर्त्ता हूँ—इस प्रकार की प्रतीति, बुद्धि अर्थात् महत्तत्त्व का परिणाम है। कवि ताराकुमार ने जो टिप्पणी दी है उसका यह यथार्थ अनुवाद है। उस टिप्पणी में ऐसे शब्द यथा 'ब्रह्म', 'अद्वैतज्ञान', 'प्रकृति' और 'महत्तत्त्व' प्रयोग किये गये हैं जो परस्पर विपरीतबोधात्मक जान पड़ते हैं। सुतरां ऐसा अनुवाद न तो वेदान्तमत के अनुकूल हो सकता है और न सांख्यमत के। रु० ना० घोष।

(क) पाठान्तरम्—'क्षीरेण दग्धजिह्वस्तक्रं फूत्कृत्य पामरः पिबति ।
दम्भिनमवलोक्य जनस्तद्वन्मां शङ्कते त्वया त्यक्तम्' ॥

## दत्तभुक्तफलं धनम् ।

## ददाति सौभाग्यमयं वसन्तः ।

वापीजलानां मणिमेखलानां शशाङ्कभासां प्रमदाजनानाम् ।
चूतद्रुमाणां कुसुमान्वितानां ददाति सौभाग्यमयं वसन्तः ॥२॥

—कालिदास—ऋतुसंहारम् ।

## दद्यात्—दद्यात्—दद्यात् ।

पितुरमन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।
गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ॥३॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## दधाति मकरध्वजस्त्रुटितशिञ्जिनीकं धनुः ।

उदेति घनमण्डली नटति नीलकण्ठावली
तडिद्विलसति सर्वतो वहति केतकीमारुतः ।
तथापि यदि नागतः सखि! स तत्र मन्येऽधुना
दधाति मकरध्वजस्त्रुटितशिञ्जिनीकं धनुः (क) ॥४॥

## दम्पत्योः शेषभोजनम् ।

बालान्सुवासिनीवृद्धान्गर्भिण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## दयालो यमालोकने कः प्रकारः ।

न चाराधिराधाधवो माधवो वा न वापूजि पुष्पादिभिश्चन्द्रचूडः ।
परेषां धने धन्धने नीतकालो दयालो यमालोकने कः प्रकारः ॥६॥

---

(क) पाठान्तरम्—'उपैति घनमण्डली नदति नीलकण्ठावली
तडिल्लसति सर्वतो वहति केतकीमारुतः ।
इतोऽपि यदि नागतः प्रियतमो नु मन्येऽधुना
दधाति मकरध्वजस्त्रुटितशिञ्जिनीकं धनुः' ॥

## दयां कुर्वन्ति साधवः ।

प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥७॥

—विष्णुशर्मा—हितोपदेशः ।

## दरिद्रान्भर कौन्तेय ।

दरिद्रान्भर कौन्तेय ! मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरूजस्य किमौषधैः (क) ॥८॥

—महाभारतम् ।

## दर्पणः किं करिष्यति ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥९॥

—चाणक्यशतकम् ।

## दर्वी पाकरसानिव ।

यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः ।
स न जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥१०॥
अधीत्य चतुरो वेदान्धर्मशास्त्राण्यनेकशः ।
परं तत्त्वं न जानाति दर्वी पाकरसानिव ॥११॥

## दर्वी पाकरसं यथा ।

## दश धर्मं न जानन्ति ।

दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धः बुभुक्षितः (ख) ॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥१२॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) श्री कृष्णस्योक्तिरियं युधिष्ठिरं प्रति ।
(ख) मत्तो मद्यादिना प्रमत्तो विषयान्तरासक्त्यानवहितः उन्मत्तो धातुदोषात् एतेषां मध्ये त्वं लुब्धोऽसीति भावः । —नीलकण्ठ ।

## दशाकृतिकृते कृष्णाय तुभ्यं नमः ।

वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ १३॥

—जयदेव—दशावतारस्तोत्रम् ।

## दशेमे स्वर्गयोनयः ।

सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः (क) ॥ १४॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## दशैते गुणहेतवः

आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ।
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥ १५॥

—श्रीमद्भागवतम् ।

## दहति प्रेतमिति प्रचक्षते ।

अपशोकमनाः कुटुम्बिनीमनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनेषु किलातिसन्ततं दहति प्रेतमिति प्रचक्षते (ख) ॥ १६॥

—कालिदास—रघुवंशम् ।

---

(क) रूपं विनयमुद्रा श्रुतं अध्ययनं विद्या देवताद्युपासनं चित्रभाष्यं युक्तियुक्तं वचनं दश संसर्गजा गुणा इति पाठे तद्युक्तैः सहसंगे कृते एते जायन्ते तेन सत्सङ्गः कर्त्तव्यः इति भावः ।

—नीलकण्ठ ।

(ख) तथाहि याज्ञवल्क्यैः—

'श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रिया कार्या स्वशक्तितः' ॥

अर्थात्, बन्धुगण और प्रिय व्यक्तिओं के वियोग से शोकसन्तप्तहृदय होकर जो मनुष्य श्लेष्मा और अश्रु विसर्जन करता है, अवश (इन्द्रियादिरहित) प्रेतगण उसी श्लेष्मा को भक्षण किया करते हैं। इन्दुमती का वियोग होने पर राजा अज की सान्त्वना के निमित्त मुनि का यह उपदेश वाक्य है।

## दाता पञ्चदशं रत्नम् ।

दृश्यताम्—'जामाता दशमो ग्रहः' इति ।

## दाता भवति वा न वा ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता दशसहस्रेषु दाता भवति वा न वा ॥१७॥

## दानेन पाणिर्न च कङ्कणेन ।

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न च कङ्कणेन ।
आभाति कायः करुणापराणां परोपकारेण न चन्दनेन ॥१८॥

—भर्तृहरि—नीतिशतकम् ।

## दानं हि सर्वव्यसनानि हन्ति ।

दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥१९॥

## दारिद्र्यदोषेण करोति पापम् ।

## दारिद्र्यदोषो गुणराशिनाशी ।

एको हि दोषो गुणसन्निपाते निमज्जतीन्दोरिति यो बभाषे ।
नूनं न दृष्टं कविनापि तेन दारिद्र्यदोषो गुणराशिनाशी (क) ॥२०॥

—घटकर्पर—नीतिसारम् ।

---

(क) यः कविः इति बभाषे उवाच, 'एको हि दोषो गुणसन्निपाते निमज्जन्तीन्दोः किरणेष्विवाङ्कः' इति, तेन कविना कालिदासेन दारिद्र्यमेव दोषः गुणराशिनाशी गुणसमूहनाशक इति नूनं निश्चितं न दृष्टम् ।

श्लोको यथा यस्योत्तरे उपर्य्युक्तः श्लोकः कथितः ।

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

—कुमारसम्भवम् ।

## दारिद्र्यमतिदुःसहम् ।

दारिद्र्यान्मरणाद्वापि दारिद्र्यमवरं स्मृतम् ।
अल्पक्लेशेन मरणं दारिद्र्यमतिदुःसहम् ॥२१॥

—विष्णुशर्मा—हितोपदेशः ।

## दारिद्र्यमनन्तकं दुःखम् ।

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
स्वल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥२२॥

—शूद्रक—मृच्छकटिक ।

## दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ।

दुःखं दुःखमिति ब्रूयान्मानवो नरकं प्रति ।
दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ॥२३॥

## दारिद्र्यान्मरणं वरम् ।

उत्तिष्ठ क्षणमात्रमुद्वह सखे ! दारिद्र्यभारं मम
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने वस—
न्दारिद्र्यान्मरणं वरं परमिति ज्ञात्वैव तूष्णीं स्थितः ॥२४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## दारिद्र्याय नमस्तुभ्यम् ।

दारिद्र्याय नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
विश्वस्तो हि जनः कश्चिन्न मां पश्यति सर्वदा (क) ॥२५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## दारिद्र्यं कृषिभिर्जितम् ।

जिता धनवता दारा जिता वस्त्रवता सभा ।
जितो ह्यभ्यागतो गोभिर्दारिद्र्यं कृषिभिर्जितम् ॥२६॥

---

(क) पाठान्तरम्—'जगत्पश्यामि येनाहं न मां पश्यन्ति के च न'।

## दारिद्र्यं केनापि दग्धं न हि ।

दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं
दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः ।
दग्धः पञ्चशरः पिनाकपाणिना तेनाप्ययुक्तं कृतं
दारिद्र्यं जनतापकारकमिदं केनापि दग्धं न हि ॥२७॥

## दारिद्र्यं परमौषधम् ।

शक्तिं करोति सञ्चारे शीतोष्णे मर्षयत्यपि ।
दीपयत्युदरे वह्निं दारिद्र्यं परमौषधम् ॥२८॥
ऐश्वर्यतिमिरं चक्षुः पश्यन्नपि न पश्यति ।
तस्य निर्मलतायां तु दारिद्र्यं परमौषधम् ॥२९॥

## दारुभूतो मुरारिः ।

एका भार्या प्रकृतिमुखरा चञ्चला च द्वितीया
पुत्रस्त्वेको भुवनविजयी मन्मथो दुर्निवारः ।
शेषः शय्या शयनमुदधौ वाहनं पन्नगारिः
स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥३०॥

—हलायुध—धर्मविवेकः ।
—घटकर्पर—नीतिसारम् ।

## दिगम्बरो वापि च साम्बरो वा ।

दिगम्बरो वापि च साम्बरो वा त्वगम्बरो वापि चिदम्बरस्थः ।
उन्मत्तवद्वापि च बालवद्वा पिशाचवद्वापि चरत्यवन्याम् ॥३१॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## दिगम्बरः कथं जीवेत् ।

स्वयं पञ्चमुखः पुत्रौ गजाननषडाननौ ।
दिगम्बरः कथं जीवेदन्नपूर्णा न चेद्गृहे (क) ॥३२॥

---

(क) हास्यरसात्मकः श्लोकोऽयम् ।

## दिल्लीश्वरो वा जगदीश्वरो वा ।

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथं पूरयितुं समर्थः ।
अन्यैर्नृपालैः परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात् ॥३३॥

## दिवसे दिवसे मूढमाविशन्ति ।

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥३४॥

—विष्णुशर्मा—हितोपदेशः ।

## दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।

दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥३५॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥३६॥

—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## दिवं गता वा भुवं गता वा ।

दृश्यताम्—'घृतस्य धारा पतिता न जाने' इति ।

## दिवा नक्तं न पश्यति ।

दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।
अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥३७॥

## दिवा स्वापो निषिध्यते ।

ग्रीष्मवर्जेषु कालेषु दिवा स्वापो निषिध्यते ।
उचितो हि दिवा स्वापो यतो नित्यः शरीरिणाम् ॥३८॥

## दिवावसाने छायेव पुरो मूलं वनस्पतेः ।

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिवावसाने छायेव पुरो मूलं वनस्पतेः ॥३९॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## दीनं मां गतिहीनमुद्धर ।

आधिव्याधितरङ्गसङ्गविषमे मायातमःसङ्कुले
चिन्तादारजले प्रवृत्तिफटिकाक्षोभैर्मुहुस्ताडिते ।
मग्नं भग्नबलं नितान्तविकलं भीमे भवाम्भोनिधौ
दीनं मां गतिहीनमुद्धर कृपालम्बेन विश्वम्भर ! ॥४०॥

—ताराकुमार—कृष्णभक्तिरसामृतम्

## दीप्यते स्वयमेव हि ।

ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते ।
चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥४१॥

—शङ्कराचार्य—आत्मबोधः ।

## दीयतामेकमुत्तरम् ।

किमिच्छति नरः काश्यां भूपानां को रणे हितः ।
को वन्द्यः सर्वदेवानां दीयतामेकमुत्तरम् (क) ॥४२॥

## दीयमानं न गृह्णन्ति ।

सालोक्य-सार्ष्टि-सामीप्य-सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः (ख) ॥४३॥
मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतम् ॥४४॥

—श्रीमद्भागवतम् ।

## दुःखानि नूनमतिमात्रदुरुद्वहानि ।

अन्तर्हिते शशिनि सैव कुमुद्वतीयं दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रदुरुद्वहानि ॥४५॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

---

(क) अत्रोत्तरम्—'मृत्युञ्जयः'। मृत्युमिति प्रथमस्य, जय इति द्वितीयस्य, मृत्युञ्जय इति तृतीयस्य ।

(ख) सालोक्य=समान लोके अर्थात् वैकुण्ठे वासः, सार्ष्टिः=समानैश्वर्य्यः, सारूप्य=समान-रूपत्वं, सामीप्य=समीप्यवस्थितिः, एकत्वं=सायुज्यं ।

## दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ।

खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् ।
दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥ ४६ ॥

## दुग्धं गीतामृतं महत् ।

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ४७ ॥

—गीताध्यानम् ।

## दुग्धं पश्यति मार्जारः ।

लोभाविष्टो नरो वित्तं वीक्षते नैव चापदम् ।
दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ४८ ॥

## दुरधीता विषं विद्या ।

## दुरात्मा दीर्घायुर्भवति ।

## दुर्गे दुर्गतिनाशिनि ।

सर्वदुर्गतिसंहर्त्त्रि दुर्गे दुर्गतिनाशिनि ! ।
महादेवमहापीठदेवते ते नमो नमः (क) ॥ ४९ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) भगवान् की सर्वमयी सर्वशक्ति का नाम 'दुर्गा' है। 'सर्वस्वरूपिणी या शक्तिः सा दुर्गेति पठ्यते'। तथाहि मुण्डमालायाम्—

'भूतानि दुर्गा भुवनानि दुर्गा नरास्त्रियश्चापि सुरासुराद्याः ।
यद्यद्धि दृश्यं खलु सैव दुर्गा दुर्गास्वरूपादपरं न किञ्चित्' ॥

तथाहि ब्रह्मवैवर्त्ते—

'दुर्गमेऽपि महाविघ्ने भवबन्धे कुकर्मणि ।
शोके दुःखे च नरके यमदण्डे च जन्मनि ॥
महाभयेऽतिरोगे च यच्छब्दो हन्तृवाचकः ।
एतान्हन्त्येव या देवी सा दुर्गा परिकीर्त्तिता' ॥
'दुर्गं निहन्ति या नित्यं सा दुर्गा परिकीर्त्तिता' ॥

## दुर्गं पथस्तत्कवयो वदन्ति ।

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ! ।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गं पथस्तत्कवयो वदन्ति (क) ॥५०॥

—कठोपनिषद् ।

## दुर्जनस्तु पदे पदे ।

सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥५१॥

## दुर्जनस्य कुतः क्षमा ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

## दुर्जनस्य विशिष्टत्वम् परोपद्रवकारणम् ।

दृश्यताम्—'उपोषितस्य व्याघ्रस्य पारणम्' इति ।

## दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ।

## दुर्जनो जीयते युक्त्या ।

दुर्जनो जीयते युक्त्या निग्रहेण न धीमता ।
निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥५२॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## दुर्जनो मातृतः शतगुणाधिको भवेत् ।

भग्नकुम्भशकलेन वै मलं बालकस्य जननी व्यपोहति ।
तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाधिको भवेत् ॥५३॥

---

(क) हे जन्तवः! अज्ञाननिद्रातः उत्तिष्ठत, जाग्रत, वरान् प्रकृष्टान् आचार्यान् प्राप्य परमात्मानम् निबोधतः अवगच्छत। क्षुरस्य निशिता तीक्ष्णीकृता धारा यथा दुरत्यया दुःखेन अत्ययः अतिक्रमः यस्याः, पद्भ्यां दुर्गमनीया इत्यर्थः तथा तत् तम् पथः तत्त्वज्ञानलक्षणम् पन्थानम् कवयः पण्डिताः दुर्गं दुर्गमं वदन्ति।

—'शङ्करकृपा' टीका ।

## दुर्जनं प्रथमं वन्दे ।

दुर्जनं प्रथमं बन्दे सज्जनं तदनन्तरम् ।
मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥५४॥

## दुर्जनः परिहर्त्तव्यः ।

दुर्जनः परिहर्त्तव्यो विद्ययापि समन्वितः ।
मणिनालङ्कृतः सर्पः किमसौ न भयङ्करः ॥५५॥
—भर्तृहरि—नीतिशतकम् ।

## दुर्बलस्य बलं राजा ।

## दुर्लभोऽप्युत्तमः प्रायः सजातीयेन लभ्यते ।

दुर्लभोप्युत्तमः प्रायः सजातीयेन लभ्यते ।
कर्णकोटरगं वारि वारिणैवावकृष्यते ॥५६॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## दुर्लभं त्रयमेवैतत् ।

दुर्लभं त्रयमेवैतद्दैवानुग्रहहेतुकम् ।
मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः ॥५७॥
—शङ्कराचार्य—विवेकचूडामणिः ।

## दुर्लभं भारते जन्म ।

दुर्लभं भारते जन्म मुमुक्षुत्वं तथैव च ।
प्राप्तिश्च सद्गुरोः किन्तु सुलभं नामसाधनम् (क) ॥५८॥

## दुर्लभं मानुषं देहम् ।

दृश्यताम्—'इतः को न्वस्ति मूढात्मा' इति ।

---

(क) 'दुर्लभं भारते जन्म' इति समस्या।

## दुर्लभः—दुर्लभा—दुर्लभम् ।

दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः ।
दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥५९॥

—चाणक्यशतकम् ।

## दुर्लभः पुरुषो लोके ।

हेमधेनुधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वजीवदयापरः ॥६०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका

## दुश्चारिणी च हसति ।

मृत्युः शरीरगोप्तारं धनरक्षं वसुन्धरा ।
दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् (क) ॥६१॥

—बाणभट्टस्य ।

## दुष्टस्य सङ्गतिरनर्थपरम्पराया हेतुः ।

दुष्टस्य सङ्गतिरनर्थपरम्पराया हेतुः सतामधिगतं वचनीयमत्र ।
लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः(ख)॥६२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## दुष्टात्मा नैव भिद्यते ।

पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते ।
सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥६३॥

## दुष्टे दुष्टं समाचरेत् ।

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥६४॥

---

(क) पाठान्तरम्—'मृत्युः शरीरगोप्तारं स्वीकर्त्तारं वसुन्धरा।
दुश्चरित्रेव हसति स्वामिनं सुतवत्सलम्'॥

(ख) 'बैठ कुसंगति कुशल नहीं नवी यही अफ़सोस।
महिमा घटी समुद्र की रावण बसे परोस'॥

## दूरतो दहते गात्रम् ।

दृश्यताम्—'अपूर्वो दृश्यते वह्निः' इति।

## दूरतः परिवर्जयेत् ।

महानदीप्रतरणं महापुरुषविग्रहम् ।
महाजनविरोधं च दूरतः परिवर्जयेत् ॥६५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

यस्य भार्या विरूपाक्षी परमन्दिरकाङ्क्षिणी ।
कुलक्षणा कुशीला च दूरतः परिवर्जयेत् ॥६६॥
विद्यते कलहो यत्र गृहे नित्यमकारणः ।
तद्गृहं जीवितं वाञ्छन्दूरतः परिवर्जयेत् ॥६७॥
गजं मत्तं द्विजं भ्रष्टं वृषभं काममोहितम् ।
नृपमन्तःपुरगतं दूरतः परिवर्जयेत् ॥६८॥

## दूरात्प्राज्ञो विवर्जयेत् ।

अप्रियं पुरुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव दूरात्प्राज्ञो विवर्जयेत् ॥६९॥

## दूरस्थाः पर्वता रम्याः ।

दृश्यताम्—'त्रीणि रम्याणि दूरतः' इति ।

## दूरस्थोऽपि समीपस्थः ।

दूरस्थोऽपि समीपस्थो यो वै मनसि वर्त्तते ।
यो वै चित्तेन दूरस्थः समीपस्थोऽपि दूरतः (क) ॥७०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

---

(क) पाठान्तरम्—'दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्त्तते।
यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः'॥

## दूषणं—भूषणम् ।

क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥७१॥

## दृढानुरागान्मिथुनं विपन्नम् ।

त्वमग्रतः सञ्चर कोमलाङ्गि ! त्वमेव जीवेश्वर ! निःसराग्रे ।
इति ब्रुवद्वेश्मनि वह्निदीप्ते दृढानुरागान्मिथुनं विपन्नम् ॥७२॥

## दृष्टेष्वन्येषु कुप्यन्ति ।

ब्राह्मणा गणिका वेश्याः सारमेयाश्च कुक्कुटाः ।
दृष्टेष्वन्येषु कुप्यन्ति न जाने तस्य कारणम् (क) ॥७३॥

## देयं दीनजनाय च वित्तम् ।

दृश्यताम्—'गेयं गीतानामसहस्रम्' इति ।

## देवता सा न मानुषी ।

नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी ।
अल्पभुङ्मितवक्त्री च देवता सा न मानुषी ॥७४॥

## देवो दुर्बलघातकः ।

अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च ।
अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥७५॥

## देवो न जानाति कुतो मनुष्यः ।

नृपस्य चित्तं पुरुषस्य वित्तं मनोरथं दुर्जनमानवानाम् ।
स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः (ख) ॥७६॥

---

(क) हास्यरसात्मकः श्लोकोऽयम् ।

(ख) पाठान्तरम्—'अश्वप्लुतं वासवगर्जितं च स्त्रीणां चरित्रं पुरुषस्य भाग्यम् ।
अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः' ॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## देशामुत्सृज्य गच्छन्ति ।

दृश्यताम्—'तत्रैव निधनं यान्ति' इति ।

## देशाय तस्मै नमः ।

छेदश्चन्दनचूतचम्पकवने रक्षापि शाखोटके (क)
हिंसा हंस–मयूर–कोकिलकुले काकेषु नित्यादरः (ख) ।
मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयो–
रेषा यत्र विचारणा गुणिगणा ! देशाय तस्मै नमः ॥७७॥

—वररुचि—नीतिरत्नम् ।

## देहस्य मोक्षो न मोक्षो ।

देहस्य मोक्षो न मोक्षो न दण्डस्य कमण्डलोः ।
अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः ॥७८॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## देहि खरनयनशरघातम् ।

सत्यमेवासि यदि सुदति ! मयि कोपिनी देहि खरनयनशरघातम् ।
घटय भुजबन्धनं जनय रदखण्डनं येन वा भवति सुखजातम् ॥७९॥

—जयदेव—गीतगोविंदम् ।

## देहि जनार्दन! मम हृदि चरणम् ।

हर परमेश्वर ! मम गुरुपापं दीनदयामय ! खण्डय तापम् ।
अशरणशरणं यमभयहरणं देहि जनार्दन ! मम हृदि चरणम् ॥८०॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## देहि देहि पुनः पुनः ।

दृश्यताम्—'अस्ति नास्ति न जानन्ति' इति ।

---

(क) पाठान्तरम्—'करीरद्रुमे' इति ।
(ख) पाठान्तरम्—'लीलारतिः' इति ।

## देहि पदपल्लवमुदारम् ।

स्मरगरलखण्डनं मम शिरसि मण्डनं देहि पदपल्लवमुदारम् ।
ज्वलति मयि दारुणो मदनकदनानलो हरतु तदुपाहितविकारम् ॥८१॥

—जयदेव—गीतगोविन्दम् ।

## देहि पदं भयहर पदकमले ।

मुरहर विश्वेश्वर नरकारे ! मां करुणाकर पाहि मुरारे !
कुरु मयि करुणां भवभयविकले देहि पदं भयहर ! पदकमले ॥८२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## देहि मुखकमलमधुपानम् ।

वदसि यदि किञ्चिदपि दन्तरुचिकौमुदी हरति दरतिमिरमतिघोरम् ।
स्फुरदधरसीधवे तव वदनचन्द्रमा रोचयति लोचनचकोरम् ॥८३॥

प्रिये चारुशीले ! मुञ्च मयि मानमनिदानं ।
सपदि मदनानलो दहति मम मानसं
देहि मुखकमलमधुपानम् ॥८४॥

—जयदेव—गीतगोविन्दम् ।

## देहि लक्षं ततो मे ।

महाराज ! श्रीमन् ! जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं करिवरमथाऽयं कुलिशभृ-
त्कलानाथं राहुः कमलभवनो हंसमधुना ॥८५॥

नीरक्षीरे गृहीत्वा सकलखगपतीर्याति नालीकजन्मा
तक्रं धृत्वा कराब्जे सकलजलनिधीन् चक्रपाणिर्मुकुन्दः ।
सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्यन्
व्याप्ता त्वत्कीर्त्तिकान्ता सकलवसुमतीं भोजराज ! क्षितीन्द्र ! ॥८६॥

श्रीमद्राजशिखामणे ! तुलयितुं धाता त्वदीयं यशः
कैलासञ्च निरीक्ष्य तत्र लघुतां तत्पूर्त्तये पर्यधात् ।
उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाभरं
तस्याग्रे फणिपुङ्गवं तदुपरि स्फारं सुधादीधितिम् ॥८७॥

अपायि मुनिना पुरा पुनरमायि मर्यादया
अतारि कपिना पुरा पुनरदाहि लङ्कारिणा ।
अमन्थि सुरवैरिणा पुनरबन्धि लङ्कारिणा
क्व नाम वसुधापते ! तव यशोम्बुधिः क्वाम्बुधिः ॥८८॥
स्वस्ति श्रीभोजराज ! त्रिभुवनविजयी धार्मिकः सत्यवादी
पित्रा ते मे गृहीता नवनवतियुता रत्नकोटिर्मदीया ।
तां त्वं मे देहि शीघ्रं सकलबुधजनैर्ज्ञायते सत्यमेत-
न्नो वा जानन्ति केचिन्नवकृतमिति चेद्देहि लक्षं ततो मे (क)॥८९॥

—कालिदास—महापद्यम् ।

## देही प्राणैर्विमुच्यते ।

जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः ।
निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते ॥९०॥

—विष्णुशर्मा—हितोपदेशः ।

## दैत्यस्त्रीगर्भपाताय केवलम् ।

इदं मघोनः कुलिशं धारासन्निहितानलम् ।
स्मरणं यस्य दैत्यस्त्रीगर्भपाताय केवलम् (ख) ॥९१॥

—दण्डिनः ।

## दैवतैरपि पूज्यते ।

किं कुलेन विशालेन गुणहीनस्तु यो नरः ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते ॥९२॥

—चाणक्यशतकम् ।

## दैवमत्रातिरिच्यते ।

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥९३॥

—व्यासस्य ।

---

(क) भोजराजस्य यशप्रशस्तिरेतैः श्लोकैर्ध्वन्यते ।
(ख) भयानकरसात्मकः श्लोकोयम् ।

दैवमात्मकृतं विद्यात्कर्म यत्पूर्वदैहिकम् ।

दैवा विचित्रा गतिः ।

कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना
व्याधोऽधो धृतचापशाणितशरः श्येनः परिभ्राम्यति ।
इत्थं सत्यहिना स दृष्ट इषुणा श्येनोऽपि तेनाहत-
स्तूर्णं तौ तु यमालयं प्रतिगतौ दैवी विचित्रा गतिः ॥९४॥

—हलायुध—धर्मविवेकः ।

दैवेन देयमिति कापुरुषा वदन्ति ।

दैवं देवेष्वपि प्रभु ।

न केवलं मनुष्येषु दैवं देवेष्वपि प्रभु ।
सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः ॥९५॥

दैवं निन्दति मानवः ।

विषमां हि दशां प्राप्य दैवं निन्दति मानवः ।
आत्मनः कर्मदोषन्तु न चिन्तयति कर्हिचित् (क) ॥९६॥

दैवं पुरुषकारश्च ।

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
तद्वत्पुरुषकारेण विना दैवं न सिध्यति ॥९७॥

—योगी याज्ञवल्क्यः ।

यत्पूर्वकर्म तदिदं खलु दैवमाहुः संसारलक्षणरथस्य तदेकचक्रम् ।
यत्नोऽपरं तदुभयेन गतिस्तु वेद्या श्रीयाज्ञवल्क्यमुनिराह निजस्मृतौ च ॥९८॥

—हायनरत्नः ।

---

(क) पाठान्तरम्—'विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
आत्मनः कर्मदोषाश्च नैव जानात्यपण्डितः' ।

—विष्णुशर्मा ।

दैवमात्मकृतं विद्यात्कर्म यत्पूर्वदैहिकम् ।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥९९॥

—चरकसंहिता।

इहाग्निवेश ! भूतानामायुर्युक्तिमपेक्षते ।
दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम् ॥१००॥

—आत्रेय।

पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात्पुरुषकारेण यत्नं कुर्यादतन्द्रितः ॥१०१॥

—नारायणपण्डित—हितोपदेशः।

## दैवं फलति सर्वत्र ।

दैवं फलति सर्वत्र न विद्या न च पौरुषम् ।
पाषाणस्य कुतो विद्या येन देवत्वमागतः ॥१०२॥
दैवं फलति सर्वत्र न विद्या न च पौरुषम् ।
समुद्रमन्थनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥१०३॥

## दोषा वाच्या गुरोरपि ।

किन्तु रोषपरीतेन गुरुणा जायते गुणः ।
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि (क) ॥१०४॥

## दोषेण तीव्रो विषयः ।

दोषेण तीव्रो विषयः कालसर्पविषादपि ।
विषं निहन्ति भोक्तारं द्रष्टारं चक्षुषाप्ययम् ॥१०५॥

—शङ्कराचार्य—विवेकचूडामणिः।

---

(क) पाठान्तरम्—'शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि।
सर्वदा सर्वयत्नेन पुत्रे शिष्यवदाचरेत्'॥

## दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ।

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ १०६॥

—अमरुशतकम् ।

## द्रक्ष्यामि चानन्दमयं समस्तम् ।

कारुण्यसिन्धोऽखिलजीवबन्धो ! हरे ! कदोष्यसि मे हृदब्जे ।
अहम्मतिर्यास्यति वीतशोको द्रक्ष्यामि चानन्दमयं समस्तम् ॥ १०७॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## द्रव्येण सर्वे वशाः ।

निर्द्रव्यं पुरुषं सदैव विकलं सर्वत्र मन्दादरं
तातभ्रातृसुहृज्जनादिकुपितं दृष्ट्वा न सम्भाषितम् ।
भार्या रूपवती कुरङ्गनयना स्नेहने नालिङ्गते
तस्माद्द्रव्यमुपार्जयाशु सुमते ! द्रव्येण सर्वे वशाः (क) ॥ १०८॥

## द्रव्यं मूल्येन शुध्यति ।

फलन्तु क्षालनाच्छुध्येत् गोमयेन गृहं तथा ।
क्षारयोगेन वस्त्रञ्च द्रव्यं मूल्येन शुध्यति (ख) ॥ १०९॥

## द्रष्टव्येषु घ्रातव्येषु श्राव्येषु किमुत्तमम् ।

द्रष्टव्येषु किमुत्तमं ? मृगदृशां प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं ? तदास्यपवनः श्राव्येषु किं ? तद्वचः ।
किं स्वाद्येषु ? तदोष्ठपल्लवरसः स्पृश्येषु किं ? तत्तनुः
ध्येयं किं ? नवयौवनात्सहृदयैः सर्वत्र तद्विभ्रमः ॥ ११०॥

—भर्त्तृहरि—शृङ्गारशतकम् ।

---

(क) दृश्यताम्—'अर्थस्य सर्वे वशाः' इति ।
(ख) दृश्यताम्—'ऊर्णा वातेन शुध्यति' इति ।

## द्वा सुपर्णा सयुजा सखाया।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति (क) ॥१११॥
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः (ख) ॥११२॥

—मुण्डकोपनिषद्।

## द्वात्रिंशल्लक्षणो महान्।

पञ्चदीर्घः पञ्चसूक्ष्मः सप्तरक्तः षडुन्नतः।
त्रिह्रस्व-पृथु-गम्भीरो द्वात्रिंशल्लक्षणो महान् (ग) ॥११३॥

—सामुद्रिके।

## द्वाभ्यां तृतीयो न भवामि राजन्।

दृश्यताम्—'किं कारणं भोज! भवामि मूर्खः' इति।

---

(क) "Two co-eternal spirits reside in the equally eternal matter like two co-eval and friendly birds perching on the same tree. One of these two (*viz.*, the finite soul) tastes of the fruit of this tree (*i.e.*, feels pleasure and pain which are incidental to the Soul's union with matter, or its circumscription with a body); while the other (*viz.*, Infinite Soul or God) simply watches or supervises without being subject to its joys and sorrows."

—Max Müller—Rigveda, I, 164, 20.

(क) (ख) इन दोनों ऋकों का भावार्थ यह है कि दो परस्पर संयुक्त सख्यभावापन्न पक्षी (अर्थात् जीवात्मा और परमात्मा) एक ही वृक्ष के आश्रय में हैं। उनमें से एक तो मिष्ट फल भक्षण कर रहा है (अर्थात् अपना कर्मफल भोग कर रहा है) और दूसरा अनशन कर केवल देख रहा है। पुरुष अर्थात् जीव एक ही वृक्ष में निमग्न होकर, अर्थात् देह को आत्मा मान कर शक्तिहीनता (वा दीनता) के कारण मुह्यमान होकर शोकग्रस्त होता है। परन्तु वह जब साधकसेवित दूसरे को अर्थात् ईश्वर को और उसकी महिमा को देखता है तब शोकरहित हो जाता है।

(ग) जिस पुरुष की नासिका, हस्त, गण्डदेश का ऊर्ध्वभाग, नयन और जानु ये पाँचों अङ्ग दीर्घ; त्वक्, केश, अङ्गुली के पर्व, दन्त और रोम ये पाचों सूक्ष्म; नयनों के प्रान्तभाग, चरणतल, करतल, तालु, ओष्ठाधर, जिह्वा और नख ये सातों स्थान रक्तिमा-युक्त; वक्षःस्थल, स्कन्ध, नख, नासा, कटिदेश और मुख ये छै स्थान समुन्नत; ग्रीवा, जङ्घा और लिङ्ग ये तीनों अङ्ग खर्व; कटिदेश, ललाट और वक्षःस्थल ये तीनों स्थान विशाल और नाभि, स्वर और बुद्धि ये तीनों गम्भीर, इस प्रकार के असाधारण बत्तीस लक्षणों के द्वारा समझना चाहिये कि यह 'महापुरुष' है।

द्वारे तिष्ठन्ति किङ्कराः ।

वयोवृद्धास्तपोवृद्धा ज्ञानवृद्धा बहुश्रुताः ।
इत्येते धनवृद्धस्य द्वारे तिष्ठन्ति किङ्कराः ॥११४॥

द्वाविमौ पुरुषव्याघ्र ! परप्रत्ययकारिणौ ।

द्वाविमौ पुरुषव्याघ्र ! परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥११५॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि।

द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।

द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥११६॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि।

द्वाविमौ पुरुषौ राजन् ! स्वर्गस्योपरि तिष्ठतः ।

द्वाविमौ पुरुषौ राजन् ! स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥११७॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि।

द्वाविमौ पुरुषौ लोके न भूतौ न भविष्यतः ।

द्वाविमौ पुरुषौ लोके न भूतौ न भविष्यतः ।
प्रार्थितं यश्च कुरुते यश्च नार्थयते परम् ॥११८॥

द्वाविमौ पुरुषौ लोके शिरःशूलकरावुभौ ।

द्वाविमौ पुरुषौ लोके शिरःशूलकरावुभौ ।
गृहस्थश्च निरारम्भो यतिश्च सपरिग्रहः (क) ॥११९॥

---

(क) दृश्यताम्—'कूटस्थोऽक्षर उच्यते' इति।

## द्वावेव मार्गौ पुरतस्तवैव ।

कामेऽनुरक्तिर्नरकार्त्तिपन्था मार्गोऽपवर्गस्य च कृष्णभक्तिः ।
येनेष्टसिद्धिर्व्रज तेन जीव ! द्वावेव मार्गौ पुरतस्तवैव ॥ १२० ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## द्वितीये पञ्चमेऽप्यहम् ।

वसुधा वसुना लोके वन्दते मन्दजातिजम् ।
करभोरु ! रतिप्रज्ञे ! द्वितीये पञ्चमेऽप्यहम् ॥ १२१ ॥
सविता पद्माम्बुजानां भुवि ते नाद्यापि समः ।
दिवि देवाद्या वदन्ति द्वितीये पञ्चमेऽप्यहम् (क) ॥ १२२ ॥

—विल्हण—विद्यासुन्दरम् ।

## द्विधारूपो वभूव सः ।

योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः ।
पुमांश्च दक्षिणार्धाङ्गो वामाङ्गः प्रकृतिः स्मृतः ॥ १२३ ॥

## द्विरद ! वद कस्मात्तव मदः ।

गले पाशस्तीव्रश्चरणयुगले गाढनिगडो
दृढं स्कन्धे बन्धः शिरसि सृणिपातः खरतरः ।
नरः स्कन्धारूढो बत मरणयोग्येऽपि विषये
न जानीमोऽत्यर्थं द्विरद ! वद कस्मात्तव मदः ॥ १२४ ॥

## द्विषन्ति मन्दाश्चरितं महात्मनाम् ।

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ १२५ ॥

—कालिदास—कुमारसम्भवम् ।

---

(क) प्रथम श्लोके 'सुन्दर' द्वितीये च 'विद्या' इति नामद्वयं ध्वन्यते। अत्र द्वितीयश्लोके छन्दोभङ्गदोषः दृश्यते। तथापि प्रथमश्लोकेन सह संबन्धात् मूलग्रन्थमनुसृत्य यथा दृष्टं तथा लिखितम् ।

### द्वे फले ह्यमृतोपमे।

संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः सङ्गतिः सुजनैः सह (क) ॥१२६॥

### द्वे विद्ये वेदितव्ये इति ।

द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो
वदन्ति परा चैवापरा च ।
तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः
शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ।
अथ परा यया तदक्षरमधिगम्यते ॥१२७॥

—मुण्डकोपनिषद् ।

### द्वेष्टि—द्वेष्टि—द्वेष्टि ।

कृतार्थः स्वामिनं द्वेष्टि कृतदारस्तु मातरम् ।
जातापत्या पतिं द्वेष्टि गतरोगश्चिकित्सकम् ॥१२८॥

---

## ध

### धनक्षये दीव्यति जाठराग्निः ।

दृश्यताम्—'छिद्रेष्वनर्था बहुलीभवन्ति' इति ।

### धनव्ययस्तेषु न गण्यते बुधैः।

दृश्यताम्—'अतिव्ययो नास्ति नराधिपाद्युसु' इति ।

---

(क) पाठान्तरम्—'संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
काव्यामृतरसास्वाद आलापः सज्जनैः सह' ॥

## धनान्यर्जयध्वं धनान्यर्जयध्वम् ।

धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति ।
धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ १॥

—घटकर्पर—नीतिसारम् ।

## धनेन किं यो न ददाति याचके ।

दृश्यताम्—'किमात्मना यो न जितेन्द्रियो भवेत्' इति ।

## धन्या नरा ये मृताः ।

## धन्या सा योषितां मध्ये ।

वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते ।
धन्या सा योषितां मध्ये भर्त्तुरग्रे म्रियते हि या ॥२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## धन्यास्ताः सखि ! योषितः ।

स्वप्ने पश्यन्ति या नाथं धन्यास्ताः सखि ! योषितः ।
अस्माकन्तु गते नाथे गता निद्राथ वैरिणी ॥३॥

## धन्यो गृहस्थाश्रमः ।

सन्मित्रं सधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः
सानन्दं सदनं सुताश्च सुधियः कान्ता मनोहारिणी (क) ।
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ ४॥

---

(क) पाठान्तरम्—'सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी
सन्मित्रं सधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः' ।

दृश्यताम्—'धिग्धिग्गृहस्थाश्रमम्' इति ।

## धन्यं कस्यापि जीवनम् ।

असेवितेश्वरद्वारमदृष्टविरहव्यथम् ।
अनुक्तक्लीबवचनं धन्यं कस्यापि जीवनम् ॥५॥

—विष्णुशर्मा—हितोपदेशः।

## धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ।

मौने मौनी गुणिनि गुणवान्पण्डिते पण्डितोऽसौ
दीने दीनः सुखिनि सुखवान्भोगिनि प्राप्तभोगः ।
मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी
धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥६॥

## धन्यः कोऽपि स वासरो ।

नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यथा मानसं
सारङ्गा जलदागमं वनगजा ध्यायन्ति रेवां यथा ।
युष्मद्दर्शनलालसाः प्रतिदिनं युष्मान् स्मरामो वयं
धन्यः कोऽपि स वासरो यदि भवेद्यत्रावयोः सङ्गमः ॥७॥

## धन्याः सुखं शेरते ।

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोधृताः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।
पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते (क) ॥८॥

—कालिदास—शृङ्गारशतकम् ।

---

(क) पाठान्तरम्—'हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः
काश्मीरद्रवलिप्तचारुवपुषः खिन्ना विचित्रैः रतैः।
वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते॥'

## धन्वी स मार एवैकः ।

एकं वस्तु द्विधा कर्त्तुं बहवः सन्ति धन्विनः ।
धन्वी स मार एवैको द्वयोरैक्यं करोति यः ॥९॥

## धर्मशास्त्रप्रयोजकाः ।

मन्वत्रि–विष्णु–हारीत–याज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्ब–सम्वर्त्ताः कात्यायन–बृहस्पती ॥
पाराशर–व्यास–शङ्ख–लिखिता दक्षगौतमौ
शातातपो वशिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥१०॥

## धर्मश्च जानाति नरस्य वृत्तम् ।

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥११॥
—महाभारते—आदिपर्वणि ।

## धर्मस्य तत्त्वं निहितं गुहायाम् ।

## धर्मस्य त्वरिता गतिः ।

युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी ।
हंसस्य शोभा का वास्ते धर्मस्य त्वरिता गतिः (क) ॥१२॥
क्षणं चित्तं क्षणं वित्तं क्षणं जीवति मानवः ।
यमस्य करुणा नास्ति धर्मस्य त्वरिता गतिः ॥१३॥

## धर्मस्य सूक्ष्मा गतिः ।

यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः
सक्तुप्रस्थविसर्जनात्स च मुनिः (ख) स्वर्गं समारोपितः ।
आबाल्यादसती सती सुरपुरीं कुन्ती समारोहय—
द्धा ! सीता पतिदेवतागमदधो धर्मस्य सूक्ष्मा गतिः ॥१४॥

---

(क) चतुर्थपादस्यपदैः प्रश्नोत्तरम् ।
(ख) ऋचीकमुनिः ।

कानीनस्य मुनेः स्वबान्धववधूवैधव्यविध्वंसिनो
नप्तारः खलु गोलकस्य तनयाः कुण्डाः स्वयं पाण्डवाः (क) ।
तेऽमी पञ्च समानयोनिरतयस्तेषां गुणोत्कीर्त्तना—
दक्षय्यं सुकृतं भवेदविकलं धर्मस्य सूक्ष्मा गतिः ॥ १५॥

—हलायुध—धर्मविवेकः ।

## धर्मस्याष्टविधः स्मृतः ।

इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा (ख) ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ १६॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## धर्महानिः प्रजायते ।

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥ १७॥

## धर्मे विरोधं न करोति साधुः ।

व्रते विवादं विमतिं विवेके सत्येऽतिशङ्कां विनये विकारम् ।
गुणेऽवमानं कुशले निषेधं धर्मे विरोधं न करोति साधुः ॥ १८॥

## धर्मेण हन्यते व्याधिः ।

## धर्मो मित्रं मृतस्य च ।

---

(क) कानीनस्य कन्या कुमारी तस्यां जातस्य मत्स्यगन्धायामपरिणीतायां पराशरेण उत्पन्नस्य स्वस्य आत्मनः बान्धवः भ्राता विचित्रवीर्यं इत्यर्थः तस्य वध्वोः अम्बिकाम्बालिकयोर्वैधव्यविध्वंसिनः पातिव्रत्यनाशिनः तयोरभिगमनेनेति भावः मुनेः द्वैपायनस्य व्यासस्य नप्तारः पौत्राः गोलकस्य पितरि मृते अन्येन जनितस्य इति भावः पाण्डोरिति भावः, तनयाः स्वयं कुण्डाः सति पितरि अन्यैरुत्पादिता इति भावः। 'अमृते जारजो कुण्डो मृते भर्त्तरि गोलकः' इत्यमरः।

—जीवानन्द विद्यासागर।

(ख) घृणा=करुणा।

### धर्मो रक्षति धार्मिकम् ।

जल्पन्ति सूरयः सर्वे धर्मो रक्षति धार्मिकम् ।
एतज्ज्ञातव्यमद्यैव किमत्र च भविष्यति (क) ॥१९॥

—हलायुध—धर्मविवेककाव्यम् ।

### धर्मं यो न करोति निश्चलमतिः ।

### धर्मः स नो यत्र न सत्यमस्ति ।

न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न सत्यमस्ति सत्यं न तद्यच्छलमभ्युपैति (ख) ॥२०॥

—विष्णुशर्मा—हितोपदेशः ।

### धातापि भग्नोद्यमः ।

पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः (ग) ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥२१॥

—पञ्चरत्नम् ।

### धातारं प्रणिपत्य याचेऽहमेकं वरम् ।

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशे विशन्तु ध्रुवं
धातारं प्रणिपत्य हन्त ! शिरसा याचेऽहमेकं वरम् ।
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गन—
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥२२॥

---

(क) किसी समय धरणीपाल माधव सुलोचना नाम्नी दासी का धर्मनाश करने के लिये जब उद्यत हुआ, तब दासी भयाकुलचित्त होकर कहने लगी 'धर्म ही धार्मिक जनों की रक्षा करता है। मैं आज इसकी परीक्षा करूँगी। देखूँ मेरे भाग्य में आज क्या लिखा है'।

(ख) पाठान्तरम्—'नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनाभ्युपेतम्'।

—महाभारते—उद्योगपर्वणि ।

(ग) सृणिः=अङ्कुशः ।

## धातः! कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ।

एते वारिकणान्किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न सृज्यन्त्येते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते नरा—
न्धातः! कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् (क) ॥२३॥

—भानुदत्त मिश्र—रसमञ्जरी।

## धान्यस्य कुशलं वद ।

उत्पत्तिर्दुर्लभा यस्य व्ययो यस्य दिने दिने ।
सर्वसस्यप्रधानस्य (ख) धान्यस्य कुशलं वद ॥२४॥

## धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् ।

धान्यान्यां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥२५॥

—विष्णुशर्मा—हितोपदेशः ।

## धिक्—धिक्—धिक् ।

धिगस्त्वेतां विद्यां धिगपि कवितां धिक्सुजनतां
वयो रूपं धिग्धिग्धिगपि च यशो निर्धनवतः ।
असौ जीयादेकः सकलगुणहीनोऽपि धनवा—
न्बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥२६॥
धिग्गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् ।
धिक्पुत्रमविनीतं च धिग्ज्योतिषमजातकम् ॥२७॥

## धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ।

यां चिन्तयामि सततं मयि सा विरक्ता सा चान्यमिच्छति जनं स जनोऽन्यरक्तः ।
अस्मत्कृतेऽपि परितुष्यति काचिदन्या धिक् ताञ्च तञ्च मदनञ्च इमाञ्च माञ्च ॥२८॥

—भर्तृहरि—शृङ्गारशतकम् ।

---

(क) कुलटानायिकाया उक्तिरियम् ।
(ख) पाठान्तरम्—'सर्वरत्नप्रधानस्य' इति ।

## धिक् तान्धिक्तान्धिगेतान्कथयति सततं कीर्तनस्थो मृदङ्गः।

येषां श्रीमद्यशोदासुतपदकमले नास्ति भक्तिर्नराणां
येषामाभीरकन्याप्रियगुणकथने नानुरक्ता रसज्ञा ।
येषां श्रीकृष्णलीलाललितगुणरसे सादरौ नैव कर्णौ
धिक्तान्धिक्तान्धिगेतान्कथयति सततं कीर्तनस्थो मृदङ्गः ॥२९॥

## धिक् त्वां धिक् तव पौरुषम् ।

देवेन प्रथमं जितोऽसि शशभृल्लेखाभृतानन्तरं
बुद्धेनोद्धतबुद्धिना स्मर ततः पान्थेन कान्तेन मे ।
हित्वैतान्बत हंसि मामतिकृशां दीनमनाथां स्त्रियं
धिक् त्वां धिक् तव पौरुषं धिगुदयं धिक्कार्मुकं धिक्शरान् ॥३०॥

## धिगर्थाः कष्टसंश्रयाः ।

अर्थानामर्जने दुःखं वर्धने चैव रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः ॥३१॥

## धिग्गृहं गृहिणीशून्यम् ।

दृश्यताम्—'धिक्—धिक्—धिक्' इति ।

## धिग्जीवितं—धिग्जीवितं—धिग्जीवितम् ।

धिग्जीवितं शास्त्रकलोज्झितस्य धिग्जीवितं चोद्यमवर्जितस्य ।
धिग्जीवितं व्यर्थमनोरथस्य धिग्जीवितं ज्ञातिपराजितस्य ॥३२॥

## धिग्दैवतमसमञ्जसम् ।

पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः ।
हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥३३॥

## धिग्धिग्गृहस्थाश्रमम् ।

क्रोशन्तः शिशवः सवारि सदनं पङ्कावृतं चाङ्गणं
शय्या दंशवती च रूक्षमशनं धूमेन पूर्णं गृहम् ।
भार्य्या निष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णः सदा
स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् (क) ॥३४॥

## धिग् धिग् वृथा पौरुषम् ।

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वाहनम् ।
इत्यैश्वर्यसमन्वितोऽपि बलभिद्भग्नः परैः सङ्गरे (ख)
तद्युक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥३५॥

—भर्तृहरि—नीतिशतकम् ।

## धियो हि पुंसां मलिनीभवन्ति ।

## धीरसमीरे यमुनातीरे वसति वने वनमाली ।

रतिसुखसारे गतमभिसारे मदनमनोहरवेशम् ।
न कुरुनितम्बिनि ! गमनविलम्बनमनुसर तं हृदयेशम् ॥
धीरसमीरे यमुनातीरे वसति वने वनमाली ॥३६॥

—जयदेव—गीतगोविन्दम् ।

## धीरः कुर्वीत वा न वा ।

अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥३७॥
अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा (ग) ॥३८॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) दृश्यताम्—'धन्यो गृहस्थाश्रमः' इति ।

(ख) बलभित् इन्द्रः सङ्गरे युद्धे परैः शत्रुभिर्दैत्यदानवैरिति शेषः भग्नः निर्जितः ।

(ग) अनुबन्धान् अप्रयोजनानि संप्रधार्य निश्चित्य विपाकः फलसिद्धावपि परिपाकः उत्थानं उद्यमं वा न वेति नान्यथेत्यर्थः ।

## धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ।

मुरारिकायकालिमा ललामवारिधारिणी तृणीकृतत्रिपिष्टपा नृलोकशोकहारिणी ।
मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥३९॥
मलापहारिवारिपूरिभूरिमण्डितामृता भृशप्रपातकप्रपञ्चनातिपण्डितानिशा ।
सुनन्दनन्दिनाङ्गरागरागरञ्जितोदका धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥४०॥

—शङ्कराचार्य—यमुनाष्टकम् ।

## धृता नापि विसृज्यन्ति दोषमङ्के स्वयं स्त्रियः ।

गौरवेषु प्रतिष्ठासु गुणेषु मधुगोष्ठिषु ।
धृता नापि विसृज्यन्ति दोषमङ्के स्वयं स्त्रियः ॥४१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## धृत्या शिश्नोदरं रक्षेत् ।

धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुः श्रोत्रे च मनसा मनो वाचं च कर्मणा ॥४२॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## धैर्यमिन्द्रियनिग्रहः ।

## ध्यानभेदात्तथाच्युतः ।

मणिर्यथा विभागेन नीलपीतादिभिर्युतः ।
रूपभेदमवाप्नोति ध्यानभेदात्तथाच्युतः ॥४३॥

—लघुभागवतम् ।

## ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥४४॥

—भगवद्गीता ।

**ध्येयं श्रीपतिरूपमजस्रम् ।**

दृश्यताम्—'गेयं गीतानामसहस्रम्' इति ।

**ध्रुवाणि—अध्रुवम् ।**

यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि ॥ ४५॥

—चाणक्यशतकम् ।

**ध्रुवं जन्म मृतस्य च ।**

दृश्यताम्—'जातस्य हि ध्रुवो मृत्युः' इति ।

**ध्रुवं यो नार्जयेद्धर्मम् ।**

**ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ।**

नभसि निरवलम्बे सीदता दीर्घकालं त्वदभिमुखनिविष्टोत्तानचञ्चूपुटेन ।
जलधर ! जलधारा दूरतस्तावदास्तां ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन (क)॥ ४६॥

—पूर्वचातकाष्टकम् ।

---

## न

**न कथं हन्त ! तापस्य शान्तिः ।**

ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो
वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम् ।
नाभिः कूपो बलिरपि सरित्पल्लवः किञ्च पाणि—
र्यस्याः सा चेदुरसि न कथं हन्त ! तापस्य शान्तिः ॥ १॥

—भानुदत्त मिश्र—रसमञ्जरी ।

---

(क) धनिनः मुखापेक्षिणा केनचिद्याचकेन प्रार्थनापूरणं दूरतस्तिष्ठतु वचनमपि तस्य न श्रुतमितिभावः। अर्थात् कोई याचक किसी धनी के मुखापेक्षी होने पर उसकी प्रार्थना की पूर्ति तो दूर रही, उस धनी का मधुर वाक्य भी उसके सुनने में न आया।

## न करोति न लिप्यते ।

अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते (क) ॥२॥

—भगवद्गीता ।

## न कश्चित्कस्यचिन्मित्रम् ।

न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
व्यवहारेण जायन्ते मित्राणि रिपवस्तथा (ख) ॥३॥

—चाणक्यशतकम् ।

## न काशी मक्का वा शिव ! शिव ! न हिन्दुर्न यवनः ।

न सन्ध्या सन्धत्ते नियमितनिमाजं न कुरुते
न वा मौञ्जीबन्धं कलयति न वा सुन्नतविधिम् ।
न रोजां जानीते व्रतमपि हरेर्नैव कुरुते
न काशी मक्का वा शिव ! शिव ! न हिन्दुर्न यवनः ॥४॥

## न कुर्यान्निशि पारणम् ।

दृश्यताम्—'उत्सवान्ते च पारणम्' इति ।

## न कोऽपि क्षीणानां जगति कुरुते माननमिह ।

कुचो लेभे हारं घनकठिनपीनोन्नतया
नितम्बो विस्फारात्कनकमयकाञ्चीमलभत ।
तयोर्मध्यः क्षीणस्त्रिवलिनिगडैर्बन्धनमगा—
न्न कोऽपि क्षीणानां जगति कुरुते माननमिह ॥५॥

---

(क) दृश्यताम्—'तथात्मा नोपलिप्यते' इति ।
(ख) पाठान्तरम्—'कारणेन हि जानाति मित्राणि च रिपूंस्तथा' इति ।

## न गणयति दुःखं न च सुखम् ।

क्वचिद्भूमौ शायी क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः ।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥६॥

—भर्तृहरि—नीतिशतकम् ।

## न गायत्र्याः परो मन्त्रः ।

नान्नोदकसमं दानं न तिथिर्द्वादशी समा ।
न गायत्र्याः परो मन्त्रो न मातुः परदैवतम् ॥७॥

## न गृहं गृहमित्याहुः ।

दृश्यताम्—'गृहिणी गृहमुच्यते' इति ।

## न च तारागणा अपि ।

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणा अपि ॥८॥

—चाणक्यशतकम् ।

## न च दैवात्परं बलम् ।

न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहो न च दैवात्परं बलम् ॥९॥

—चाणक्यशतकम् ।

## न च धनगर्वितबान्धवशरणम् ।

वरमसिधारा वरमुपवासो वरमिह भिक्षा वरमुपवासः ।
वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥१०॥

—कविभट्ट—पद्यसंग्रहः ।

## न च सुखान्यविघ्नानि ।

चन्दनतरुषु भुजङ्गा जलेषु कमलानि तत्र च ग्राहाः ।
गुणघातिनश्च भोगे खला न च सुखान्यविघ्नानि ॥ ११॥

—विष्णुशर्मा—हितोपदेशः ।

## न चलति खलु वाक्यं सज्जनानां कदाचित् ।

उदयति यदि भानुः पश्चिमे दिग्विभागे
विकसति यदि पद्मं पर्वतानां शिखाग्रे ।
प्रचलति यदि मेरुः शीततां याति वह्नि—
र्न चलति खलु वाक्यं सज्जनानां कदाचित् (क)॥ १२॥

—कविभट्ट—पद्यसंग्रहः ।

## न चाभावयतः शान्तिः ।

## न चायुक्तस्य भावना ।

दृश्यताम्—'अशान्तस्य कुतः सुखम्' इति ।

## न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः ।

वरं गर्भस्रावो वरमपि च नैवाभिगमनं
वरं जातप्रेतो (ख) वरमपि च कन्याभिजननम् ।
वरं बन्ध्या भार्या वरमपि च गर्भेषु वसति—
र्न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः (ग) ॥ १३॥

—भवभूति—गुणरत्नम् ।

---

(क) पाठान्तरम्—'उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलित यदि मेरुः शीतलो याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरन्यद्भाषणं सज्जनानाम्' ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

(ख) जातः उत्पन्नः सन् प्रेतः पञ्चत्वं गतश्च वरं मनाक् प्रिय इत्यर्थः ।
'जातःप्रेतो' इति पाठान्तरम् ।

(ग) दृश्यताम्—'न पुनरधमानामुपगमः' इति ।

## न जातु कामः कामानामुपभोगेन शाम्यति ।

## न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहैरनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः॥ १४॥
—कालिदास—अभिज्ञानशकुन्तलम् ।

## न जिघ्रन्ति गतायुषः ।

दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः॥ १५॥
—विष्णुशर्मा—हितोपदेशः ।

## न तज्जलं यन्न सुचारुपङ्कजम् ।

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥ १६॥
—भर्तृस्वामी ।

## न तत्र करुणाहेतुः ।

दृश्यताम्—'तत्रहेतुरदन्तता' इति ।

## न तत्र दिवसं वसेत् ।

धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् (क) ॥१७॥
लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता ।
पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥१८॥
ऋणदाता च दैवज्ञः श्रोत्रियः सुजला नदी ।
यत्र ह्येते न विद्यन्ते न तत्र दिवसं वसेत् ॥१९॥
यस्मिन्देशे न संमानो न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चिन्न तत्र दिवसं वसेत् (ख) ॥२०॥

---

(क) पाठान्तरम्—'तत्र वासं न कारयेत्' इति चाणक्यशतके।
(ख) पाठान्तरम्—तं देशं परिवर्जयेत्' इति चाणक्यशतके।

## न तस्यादिर्न तस्यान्तः ।

न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति ।
तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद (क) ॥२१॥

## न तु नारीणां मनःशुद्धिः ।

वन्ध्यापुत्रस्य राज्यश्रीः पुष्पश्रीर्गगनस्य च ।
स्याद्दैवान्न तु नारीणां मनःशुद्धिर्मनागपि ॥२२॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## न तृतीयेति मे मतिः ।

त्रैलोक्ये नोपमैतस्याः सखे! किमिति भाषसे ।
अनन्तरा सा नादिर्वा न तृतीयेति मे मतिः (ख) ॥२३॥

## न दुःखं पञ्चभिः सह ।

पञ्चभिः सह गन्तव्यं स्यातव्यं पञ्चभिः सह ।
पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह (ग) ॥२४॥

## न दृष्टं न श्रुतं क्वापि ।

## न देवचरितं चरेत् ।

भार्गवेण हता माता एकजायाश्च पाण्डवाः ।
परदाररतः कृष्णो न देवचरितं चरेत् ॥२५॥

---

(क) अत्रोत्तरम्—'नयनम्' ।

(ख) कश्चित्स्वनायिकां स्तौति। तं प्रति अन्यः प्रतिभाषते। हे सखे! एतस्यास्त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे। यतः सा उपमैव अनन्तरा मध्यवर्णरहिता। उमेति यावत्। अथवा सैव उमा अनादिः आद्यवर्णरहिता मा लक्ष्मीरिति यावत्। उपमा उपमानमस्तीति भावः। तृतीया नास्तीति मे बुद्धिः।
—सुभाषितरत्नभाण्डागारम्।

(ग) पाठान्तरम्—'स्थातव्यं पञ्चभिःसार्धं गन्तव्यं पञ्चभिः सह।
भोक्तव्यं पञ्चभिः सार्धं न दुःखं पञ्चभिः सह' ॥

## न देवाय न धर्माय ।

न देवाय न धर्माय न बन्धुभ्यो न चार्थिने ।
दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः (क) ॥२६॥
न देवाय न धर्माय विधवायै नमो नमः ।
प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने ॥२७॥

## न देवः सृष्टिनाशकः ।

न माता शपते पुत्रं न दोषं लभते मही ।
न हिंसां कुरुते साधुर्न देवः सृष्टिनाशकः ॥२८॥

—हलायुध—धर्मविवेकः ।

## न देवाः भान्ति वादिनि ।

दृश्यताम्—'अञ्जनं दूषणं वक्त्रे' इति ।

## न दोषा गृह्यन्ते मधुरवचसां केनचिदपि ।

पिकः कृष्णो नित्यं परमरुणया पश्यति दृशा
परापत्यद्वेषी स्वसुतमपि नो पालयति यः ।
तथाप्येषोऽमीषां सकलजगतां वल्लभतमो
न दोषा गृह्यन्ते मधुरवचसां केनचिदपि ॥२९॥

## न—न—न—न ।

अर्थातुराणां न पिता न बन्धुः कामातुराणां न भयं न लज्जा ।
चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न बलं न तेजः (ख) ॥३०॥
न विषं भक्षयेत्प्राज्ञो न क्रीडेत्पन्नगैः सह ।
न निन्देद्योगिनां वृन्दं ब्रह्मद्वेषं न कारयेत् ॥३१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) पाठान्तरम्—'न देवाय न विप्राय न बन्धुभ्यो न चात्मने ।
कृपणस्य धनं याति वह्नितस्करपार्थिवैः' ॥

—विष्णुशर्मा—हितोपदेशः ।

(ख) पाठान्तरम्—'अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा ।
क्षुधातुराणां न रुचिर्न पक्वं चिन्तातुराणां न सुखं न निद्रा' ॥

## न नक्तं निशिभोजनम् ।

दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
नक्तं तत्र विजानीयान्न नक्तं निशिभोजनम् ॥ ३२ ॥

## न निम्बो मधुरायते ।

शर्करा शतभारेण निम्बवृक्ष उपार्जितः ।
पयसा सिञ्चितो नित्यं न निम्बो मधुरायते ॥ ३३ ॥

## न पुनरधमानामुपगमः ।

वरं शून्या शाला न च खलु वरो दुष्टवृषभो
वरं वेश्या पत्नी न पुनरविनीता कुलवधूः ।
वरः वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं प्राणत्यागो न पुनरधमानामुपगमः (क) ॥ ३४ ॥

## न पुंसां वामलोचना ।

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ३५ ॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ।

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ३६ ॥

---

(क) दृश्यताम्—'न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः' इति ।

## न बन्धुमध्ये धनहीनजीवनम् ।

वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् ।
तृणानि शय्या वसनञ्च वल्कलं न बन्धुमध्ये धनहीनजीवनम् (क) ॥३७॥
—वररुचि—नीतिरत्नम् ।

## न बाधते तथा स्कन्धः ।

क्षणं विश्राम्यतां जाल्म ! स्कन्धस्ते यदि बाधति ।
न बाधते तथा स्कन्धो यथा 'बाधति' बाधते (ख) ॥३८॥

## न बोधादपरः सखा ।

## न भयं चास्ति जाग्रतः ।

दृश्यताम्—'उद्योगे नास्ति दारिद्र्यम्' इति ।

## न भवन्ति गृहे गृहे ।

देहे पित्तं गृहे वित्तमेकचित्तं कुटुम्बिनाम् ।
अतिश्रेष्ठो ज्येष्ठपुत्रः न भवन्ति गृहे गृहे ॥३९॥

## न भाति वाञ्छा वैजात्ये ।

दृश्यताम्—'अञ्जनं दूषणं वक्त्रे' इति ।

---

(क) 'बरु रहीम कानन बसी असन करिय फल तोय ।
बन्धुमध्य गतिहीन ह्वै बसिबो उचित न कोय' ॥

(ख) एक दिन कोई राजा पालकी की सवारी में जा रहे थे । जाते जाते दैवयोग से पालकी का एक वाहक बीमार पड़ गया । तब नौकर लोग दूसरे बाहक के लिये खोज करने लगे । उसी समय महाकवि कालिदास उसी स्थान पर छद्मवेष धारण किए हुए अति दीन भाव से भ्रमण कर रहे थे । नौकरों ने उन्हें पकड़ कर पालकी के उठाने के काम में लगा दिया । कालिदास भी बिना किसी आपत्ति के वही करने लगे । परन्तु अनभ्यासहेतु कुछ दूर जाकर थक गये । तब राजा उनको लक्ष्य कर उपरोक्त श्लोक का प्रथमार्ध बोल उठे । इसका अर्थ यह है कि रे वाहक ! यदि तुम्हारा कंधा दुखता हो तो क्षणमात्र विश्राम कर लो । उक्त कविता में 'बाधति' शब्द का प्रयोग अशुद्ध होने के कारण कालिदास उसके उत्तर में श्लोक का द्वितीयार्ध बोल उठे । इसका अर्थ यह है कि हे महाराज !आपका कथित 'बाधति' शब्द जैसा दुखदायी है वैसा मेरे कन्धे की वेदना दुखदायी नहीं है । इस वाक्य को सुन कर राजा चकित हो गये और उसी मुहूर्त्त पालकी पर से उतर पड़े और उस छद्मवेषी वाहक का परिचय पाकर उसके पैरों पर गिरे ।

## न भूतो न भविष्यति ।

कृपणेन समो दाता न भूतो न भविष्यति ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ ४० ॥
भृत्यकार्यं हनुमता कृतं सर्वमशेषतः ।
सुग्रीवसदृशो लोके न भूतो न भविष्यति ॥ ४१ ॥

## न भूतौ न भविष्यतः ।

दृश्यताम्—'द्वाविमौ पुरुषौ लोके' इति ।

## न मातुः परदैवतम् ।

दृश्यताम्—'न गायत्र्याः परो मन्त्रः' इति ।

## न ययौ न तस्थौ ।

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ (क)॥ ४२ ॥
—कालिदास—कुमारसम्भवम् ।

## न रत्नमन्विष्यति मृग्यते हि तत् ।

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४३ ॥
—कालिदास—कुमारसम्भवम् ।

---

(क) पार्वती शिवजी को पति पाने की कामना से जब कठोर तपस्या कर रही थीं तब शिवजी जटिल तपस्वी का रूप धारण कर उस स्थान पर उपस्थित हो शिवजी की निन्दा करने लगे। यह निन्दावाद पार्वती से सहा न गया, और जब वह उस स्थान को त्याग कर चलने लगीं तब शिव जी अपनी मूर्ति धारण कर उनका मार्ग रोक कर खड़े हो गये। इस घटना का वर्णन महाकवि कालिदास ने इस श्लोक में इस प्रकार से किया है। शैलराजनतया पार्वती ने जब सहसा अपने सन्मुख आराध्य पति महेश्वर का दर्शन पाया तब कम्पित और रोमाञ्चित देह से आगे बढ़ने को जो पाँव बढ़ाया तब वह वैसे ही खड़ी रह गईं। मार्ग के बीच में पर्वत आ जाने से नदी न आगे बढ़ सकती है न स्थिर रह सकती है, उसी प्रकार पार्वती भी न तो आगे बढ़ सकीं और न स्थिरभाव से वहाँ खड़ी रह सकीं।

अयं स यस्मात्प्रणयावधीरणामशङ्कनीयां करभोरु ! शङ्कसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४४॥
—कालिदास—अभिज्ञानशकुन्तलम् ।

## न लभन्ते विनोद्योगं जन्तवः सम्पदां पदम् ।

न लभन्ते विनोद्योगं जन्तवः सम्पदां पदम् ।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ ४५॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## न लिप्यते लोकदुःखेन बाह्यः ।

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः (क) ॥ ४६ ॥
—कठोपनिषद् ।

## न वनी माधवनी विनोदहेतुः ।

यवनी नवनीतकोमलाङ्गी शयनीये यदि लभ्यते कदाचित् ।
अवनीतलमेव साधु मन्ये न वनी माधवनी विनोदहेतुः ॥ ४७॥

## न वारदोषाः प्रभवन्ति रात्रौ ।

अन्धं पतिं प्राप्य विलासिनीनां कटाक्षबाणा विफला भवन्ति ।
तद्वत्कुजादित्यशनैश्चराणां न वारदोषाः प्रभवन्ति रात्रौ ॥ ४८॥
तिथेर्न दोषोऽभ्युदये च काले नक्षत्रदोषस्त्वभिजित्प्रकाशे ।
योगादि दोषोऽस्तमये च काले न वारदोषाः प्रभवन्ति रात्रौ ॥ ४९॥

## न वारिणा शुध्यति चान्तरात्मा ।

आत्मानदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र ! न वारिणा शुध्यति चान्तरात्मा (ख) ॥ ५०॥
—महाभारतम्—शान्तिपर्वम् ।

---

(क) तथा एकः सर्वभूतान्तरात्मा लोकदुःखेन सह न लिप्यते यतः सः बाह्यः निर्लिप्तः स्वतन्त्रस्वभावः ।

(ख) दृश्यताम्—'आत्मैव परमं तीर्थम्' इति ।

## न विदुश्चेष्टितं स्त्रीणाम् ।

सुखदुःखजयं जीवितं ये हि जीवन्ति योगिनः सदा ।
मुह्यन्ति तेऽपि हि नूनं न विदुश्चेष्टितं स्त्रीणाम् ॥५१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## न विषं भक्षयेत्प्राज्ञः ।

दृश्यताम्—'न—न—न—न' इति ।

## न वेशजाताः शुचयस्तथाङ्गनाः ।

न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति ।
यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः ॥५२॥

## न वैद्यः प्रभुरायुषः ।

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥५३॥

## न वैराग्यात्परं भाग्यम् ।

## न व्याप्तिरेषा गुणिनो गुणवान् जायते ध्रुवम् ।

न व्याप्तिरेषा गुणिनो गुणवान् जायते ध्रुवम् ।
चन्दनेऽनलसन्दग्धे न भस्म सुरभि क्वचित् ॥५४॥

—कुसुमदेव—दृष्टान्तशतकम्।

## न शरीरं पुनः पुनः ।

दृश्यताम्—'आत्मानं सततं रक्षेत्' इति ।

## न सदिदं जगदित्यवधारय ।

य—दुपतेः क्व गता मथुरापुरी
र—घुपतेः क्व गतोत्तरकोशला ।
इ—ति विचिन्त्य कुरुष्व मनःस्थिरं
न—सदिदं जगदित्यवधारय (क) ॥५५॥

## न सन्ति याथार्थ्यविदः पिनाकिनः ।

अकिञ्चनः सन्प्रभवः स सम्पदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्य्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥५६॥

—कालिदास—कुमारसम्भवम् ।

## न सोऽस्ति पुरुषो लोके ।

न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम् ।
परस्य युवतीं रम्यां सादरं नेक्षतेऽत्र कः ॥५७॥

—विष्णुशर्मा—हितोपदेशः ।

## न संरोहति वाक्क्षतम् ।

रोहते सायकैर्विद्धं वनं परशुनाहतम् ।
वाचा दुरुक्तया विद्धं न संरोहति वाक्क्षतम् ॥५८॥

—महाभारतम् ।

## न संसारात्परो रिपुः ।

न वैराग्यात्परं भाग्यं न बोधादपरः सखा ।
न हरेरपरस्त्राता न संसारात्परो रिपुः ॥५९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) किम्बदन्ती है कि रूपगोस्वामी के भाई सनातन किसी ब्राह्मण की भूमि अपहरण करने की चेष्टा कर रहे थे। ब्राह्मण ने वृन्दावनवासी रूप के निकट जाकर आवेदन किया। इसपर रूप ने अपने भाई सनातन को, य, र, इ, न ये चार अक्षर लिख भेजा। सनातन ने इन चार अक्षरों को पढ़ कर उक्त कविता की रचना की और कविता के मर्मार्थ से अवगत हो भूमिहरण की वासना परित्याग कर दी।

## न स्त्री स्वातन्त्र्यमर्हति ।

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥६०॥

—मनुसंहिता ।

## न हरेरपरस्त्राता ।

दृश्यताम्—'न संसारात्परो रिपुः' इति ।

## न हन्यते हन्यमाने शरीरे ।

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे (क) ॥६१॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते (ख) ॥६२॥

—कठोपनिषद् ।

## न हि कस्तूरिकामोदः शपथेन निवार्यते ।

यस्य ये च गुणाः सन्ति विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन निवार्यते (ग) ॥६३॥

## न हि कृतमुपकारं साधवो विस्मरन्ति ।

प्रथमवयसि तोयं पीतमल्पं स्मरन्तः शिरसि निहितभारा नारिकेलाः फलानाम् ।
उदकममृतकल्पं दद्युराजीवनान्तं न हि कृतमुपकारं साधवो विस्मरन्ति (घ) ॥६४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) तथाहि भगवद्गीतायाम्—'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' ॥

(ख) तथाहि भगवद्गीतायाम्—'य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते' ॥

(ग) पाठान्तरम्—'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन विभाव्यते' ॥

(घ) पाठान्तरम्—'प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नालिकेरा नराणाम् ।
ददति जलमनल्पास्वादमाजीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति' ॥

## न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
यत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥९५॥

—भगवद्गीता ।

## न हि भवति यन्न भाव्यम् ।

न हि भवति यन्न भाव्यं भवति च भाव्यं विना प्रयत्नेन ।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥९६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## न हि भवति वियोगः स्नेहविच्छेदहेतुः ।

न हि भवति वियोगः स्नेहविच्छेदहेतु—
र्जगति गुणनिधीनां सज्जनानां कदाचित् ।
घनतिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥९७॥

## न हि मे वैद्यो न चाप्यौषधम् ।

आदीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिहारिणा वरमहं दष्टो न तच्चक्षुषा ।
धन्याः सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥९८॥

—भर्तृहरि—शृङ्गारशतकम् ।

## न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ।

## न हि शशकविषाणं कोऽपि कस्मै ददाति ।

ददतु ददतु गालीर्गालिमन्तो भवन्तो
वयमिह तदभावाद्गालिदानेऽसमर्थाः ।
जगति विदितमेतद्दीयते विद्यमानं
न हि शशकविषाणं कोऽपि कस्मै ददाति ॥९९॥

—भर्तृहरि—वैराग्यशतकम् ।

## न हि सतामसताञ्च विवेचनम् ।

अयि पतङ्ग ! लवङ्गलतावने पिब मधून्यवधूय मधुव्रतान् ।
इह वने हि वनेचरसङ्कुले न हि सतामसताञ्च विवेचनम् ॥७०॥

## न हि सुखं दुःखैर्विना लभ्यते ।

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहोऽनलैः ।
यत्कान्ताकुचपार्श्वबाहुलतिकाहिल्लोललीलासुखं
लब्धं कुम्भवर ! त्वया न हि सुखं दुःखैर्विना लभ्यते (क) ॥७१॥
—कालिदास—शृङ्गारतिलकम् ।

## न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।

दृश्यताम्—'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः' इति

## न हि संहरते ज्योत्स्नाम् ।

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनः ॥७२॥
—विष्णुशर्मा—हितोपदेशः ।

## न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ।

किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥७३॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) कोई कवि कलश को सम्बोधन कर कह रहा है "हे कलश ! तुमको बनाने के समय शुष्क काष्ठ के द्वारा तुमने जो प्रहार पाया वह श्लाघनीय है। इसके पीछे जब तुम प्रचण्ड धूप में पड़े हुए थे वह भी तुम्हारे लिये श्लाघ्य है। इसके अनन्तर जब पङ्कलेपन कर प्रचण्ड अग्नि के उत्ताप में तुम्हें तपाया गया, वह भी इस समय तुम्हारा गर्व का विषय है, इस कारण कि तुम युवती रमणी के कक्षदेश में आरोहण कर उसके कुचकुम्भ और बाहुलता का स्पन्दनसुख अनुभव कर रहे हो। अतएव हे कुम्भवर ! दुःख के बिना सुख लाभ कभी नहीं होता है"।

### न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ।

दृश्यताम्—'ईश्वरवन्दना' ।

### नक्षत्रभूषणं चन्द्रः ।

### नग्नो हरः पातु वः ।

विष्णोश्चागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं
कौपीनं परिधाय चर्मकरिणः शम्भौ पुरो धावति ।
दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले
कृत्तिर्विस्खलिता ह्रिया नतमुखो नग्नो हरः पातु वः ॥७४॥

### नतभ्रुवां चेतसि चित्तजन्मा ।

रूपे मनोहारिणि यौवने च वृथैव पुंसामभिमानवृद्धिः ।
नतभ्रुवां चेतसि चित्तजन्मा प्रभुर्यदेवेच्छति तत्करोति ॥७५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### नदन्ति गोकर्णशरीरभक्षाः ।

गोमध्यमध्ये ! मृगगोधरे हे ! सहस्रगोभूषणकिङ्कराणाम् ।
नादेन गोभृच्छिखरेषु मत्ता नदन्ति गोकर्णशरीरभक्षाः (क) ॥७६॥

—विह्लण—विद्यासुन्दरम् ।

### नदीरत्नं गङ्गा ।

### ननु तैल निषेकविन्दुना सह दीपार्चिरुपैति मेदिनीम् ।

वपुषा करणोज्झितेन सा निपतन्ती पतिमप्यपातयत् ।
ननु तैलनिषेकविन्दुना सह दीपार्चिरुपैति मेदिनीम् ॥७७॥

—कालिदास—रघुवंशम् ।

---

(क) गोमध्येति—हे गोमध्यमध्ये ! गौः सिंहः तस्य मध्यमिव मध्यं यस्याः तत्सम्बुद्धौ कृशोदरीत्यर्थः । मृगगोधरे मृगनयनधारिणी ! सहस्रं गावः नेत्राणि यस्य सः सहस्रगौरिन्द्रः तस्य भूषणानि वाहनानीति यावत् मेघा इत्यर्थः तेषां किङ्कराः मयूराः तेषां नादेन ध्वनिना मत्ताः, गोकर्णानां सर्पाणां शरीरभक्षाः भुजङ्गभुज इत्यर्थः मयूरा इति यावत्, गोभृतः पर्वतस्य शिखरेषु नदन्ति शब्दायन्ते ।—जीवानन्द विद्यासागर ।

दृश्यताम्—'पद्येन कोऽयं वद रौति शैले' इति श्लोकः यस्योत्तरे उपर्युक्तः श्लोकः कथ्यते ।

## नन्दन्ति योगीश्वराः ।

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धर्मद्रुमध्वंसिनी ।
मोहावर्त्तसुदुस्तरादिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः (क) ॥७८॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## नन्वस्ति पुङ्खितशरो मदनः सहायः ।

क्व प्रस्थितासि करभोरु ! घने निशीथे प्राणाधिको वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले ! नन्वस्ति पुङ्खितशरो मदनः सहायः ॥७९॥

—अमरुशतकम् ।

## नभो भूषा पूषा ।

## नमन्ति फलिनो वृक्षाः ।

नमन्ति फलिनो वृक्षा नमन्ति गुणिनो जनाः ।
शुष्का वृक्षाश्च मूर्खाश्च न नमन्ति कदाचन ॥८०॥

## नमस्तत्कर्मभ्यः ।

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगाः
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किममरैः किञ्च विधिना (ख)
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥८१॥

—भर्त्तृहरि—नीतिशतकम् ।
—शान्तिशतकम् ।

---

(क) पाठान्तरम्—'आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्त्तसुदुस्तरा प्रकटितप्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥

—शान्तिशतकम् ॥

(ख) पाठान्तरम्—'फलं कर्मायत्तं किममरगणैः किञ्च विधिना' इति शान्तिशतके ।

## नमोऽस्तु तस्यै भवितव्यतायै ।

दाता बलिः प्रार्थयिता च विष्णुर्दानं भुवो वाजिमखस्य कालः ।
नमोऽस्तु तस्यै भवितव्यतायै यस्याः फलं बन्धनमेव जातम् ॥८२॥

## नयनसुखं को निवारयति ।

गन्तव्यं सलिलपथे द्रष्टव्या मदनपूरिता रामाः ।
यद्यपि न भवति लाभो नयनसुखं को निवारयति ॥८३॥

## नराणां नापितो धूर्त्तः ।

नराणां नापितो धूर्त्तः पक्षिणां चैव वायसः ।
चतुष्पदां शृगालस्तु स्त्रीणां धूर्त्ता च मालिनी ॥८४॥

## नराणां पुण्यलक्षणम् ।

विद्यया तपसा वापि दानेन विनयेन च ।
पुत्रे यशसि तोये च नराणां पुण्यलक्षणम् ॥८५॥

## नराणां मातुलक्रमः ।

गोरक्षी सहदेवश्च नकुलो हयरक्षकः ।
वैराटे कुरुदायादौ नराणां मातुलक्रमः (क) ॥८६॥

## नरः को वा परित्रायते ।

दृश्यताम्—'तस्मान्न तद्वाञ्छयेत्' इति ।

---

(क) कर्ण ने राजा शल्य को व्यङ्गयच्छल से यह कहा था। पाण्डवों ने अज्ञातवास के समय विराट-भवन में रह कर दूसरों की सेवा की थी यह बात सत्य है, परन्तु युधिष्ठिर, भीम और अर्जुन ये तीनों बड़े कार्यों में नियुक्त थे, सहदेव गोरक्षक था, और नकुल अश्वपालक था। अतएव देखा जाता है कि मनुष्यों का कार्य मातुल के अनुसार हुआ करता है।

## नरः पञ्चभिः रञ्जितः किम् ।

शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः ।
कुरङ्गमातङ्गपतङ्गमीनभृङ्गा नरः पञ्चभिः रञ्जितः किम् (क) ॥८७॥
—शङ्कराचार्य—विवेकचूडामणिः ।

## नराः पण्डितबुद्धयः ।

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥८८॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥८९॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## नलिनीदलगतजलमतितरलम् ।

नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् ।
विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतञ्च समस्तम् ॥९०॥
—शङ्कराचार्य—मोहमुद्गरः ।

## नव गोप्यानि सर्वदा ।

आयुर्वित्तं गृहच्छिद्रं मन्त्रमैथुनमौषधम् ।
दानमानापमानञ्च नव गोप्यानि सर्वदा (ख) ॥९१॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## नवधा कुललक्षणम् ।

आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ।
निष्ठा वृत्तिस्तपोदानं नवधा कुललक्षणम् ॥९२॥

## नवनवगुणरागी प्रायशः सर्वलोकः ।

दृश्यताम्—'अतिपरिचयदोषात्कस्य नो मानहानिः' इति ।

---

(क) दृश्यताम्—'स कथं न बध्यः' इति।
(ख) पाठान्तरम्—'आयुर्वित्तं गृहच्छिद्रं रहस्यं मन्त्रमौषधम्।
तपो दानावमानौ च नव गोप्यानि कारयेत्'॥

नवा वाणी मुखे मुखे ।

## नवं नवा नूतनं पुरातनं च ।

नवं वस्त्रं नवं छत्रं नवा स्त्री नूतनं गृहम् ।
सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥९३॥

—वेतालभट्ट—नीतिप्रदीपः ।

## नश्यन्ति सकला रोगाः ।

अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥९४॥

## नष्टस्य कान्या गतिः ।

भिक्षो ! मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना
मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
वेश्या द्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः ॥९५॥

## नष्टे द्रव्ये कः परिवारः ।

दृश्यताम्—'ज्ञाते तत्त्वे कः संसारः' इति ।

## नष्टाः—नष्टाः—नष्टाः ।

असन्तुष्टा द्विजा नष्टा सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥९६॥

—चाणक्यशतकम् ।

## नाकृतिगुरुता गुरुता ।

नाकृतिगुरुता गुरुता विक्रमगुरुता गरीयसी जगति ।
गिरिपरिमाणं करिणं कृशकायः केशरी हन्ति ॥९७॥

## नाटके भवभूतिर्वा ।

नाटके भवभूतिर्वा वयं वा वयमेव वा ।
उत्तरे रामचरिते भवभूतिर्विशिष्यते ॥९८॥

## नातन्त्री विद्यते वीणा ।

नातन्त्री विद्यते वीणा नाचक्री वर्त्तते रथः ।
नापतिः सुखमाप्नोति नारी बन्धुशतैरपि ॥९९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## नात्मानमपि चेष्टते ।

संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन्नात्मानमपि चेष्टते ॥१००॥
—विष्णुशर्मा—हितोपदेशः ।

## नादत्तमुपतिष्ठते ।

खनन्तु सप्तपातालं भ्रमन्त्वाकाशमण्डले ।
धावन्तु सकलां पृथ्वीं नादत्तमुपतिष्ठते ॥१०१॥
पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
शङ्खो भिक्षाटनं कुर्यान्नादत्तमुपतिष्ठते ॥१०२॥

## नानारत्ना वसुन्धरा ।

## नानारूपधरो हरिः ।

सौरतेजो यथा मेघे नानावर्णैर्विभासते ।
भक्तचित्ते तथैकोऽपि नानारूपधरो हरिः (क)॥१०३॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) जो पुत्र अपने मा-बाप का तना जिप्यारा होता है उसके नाम की संख्या भी उतनी ही अधिक पाई जाती है। ऐसे पुत्र के मा-बाप उसे जितने ही प्यार के साथ प्यारे नामों से

## नानुशोचन्ति पण्डिताः ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ १०४॥

—भगवद्गीता ।

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ १०५॥

## नान्नोदकसमं दानम् ।

दृश्यताम्—'न गायत्र्याः परो मन्त्रः' इति ।

---

पुकारें तब भी उनका जी नहीं भरता है। इस कारण प्रिय पुत्र का नाम नित्य नित्य नूतन होता है। भगवान् अनन्त भक्तमण्डली का आदरणीय पुत्र है, इस से उसके नामों का भी अन्त नहीं है। जो भक्त जब जिस भाव से उसकी भावना करता है, भगवान् उसी भाव से उसके निकट पहुँचता है। इसी कारण श्रुति ने उसका इस प्रकार वर्णन किया है:—

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्'॥

इसी से उस अनन्त देव श्रीकृष्ण के अनन्त नाम हैं। सहस्र प्रकार भक्तों की एक ही भगवद्भक्ति के अनुसार सहस्र प्रकार रूपभेद से एक ही भगवान् के सहस्र प्रकार के रूप और नाम एक ही भक्तिसागर के विवर्त्त अर्थात् रूपभेद अथवा उपाधिभेदमात्र हैं। इसी कारण भगवद्भक्त महाकवि कालिदास ने कहा है:—

'बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे'॥

अर्थात्, जिस प्रकार गङ्गा के सकल प्रवाह भिन्न भिन्न मार्गों में प्रवाहित होकर भी उसी एक महासागर में जाकर मिलते हैं, उसी प्रकार पुरुषार्थसिद्धि के सकल उपाय शास्त्र-भेद के अनुसार भिन्न भिन्न होने पर भी एक मात्र उसी अनन्तदेव में पर्यवसित होते हैं। अतएव जो भक्त जिस रूप से उसका ध्यान करता है, भक्तवत्सल सिद्धिदाता नारायण उसे उसी रूप से और उसी नाम से सिद्धि दिया करता है। चाहे काली कहें वा दुर्गा, लक्ष्मी कहें वा सरस्वती, हरि कहें वा शङ्कर, राम कहें वा कृष्ण, जिस नाम से उसे पुकारें, हमारी पुकार यथार्थ भक्ति की पुकार होने से अवश्य उसके निकट पहुँचेगी, और वही भक्तवत्सल भगवान् अवश्य हमारी प्रार्थना सुनेगा। भगवान् भक्त ही का है और किसी का नहीं। उसका अधिष्ठान भक्त का हृदयपीठ है और भक्त का हृदयपीठ ही उसका वैकुण्ठधाम है॥

भक्तचूड़ामणि प्रह्लाद् ने कहा है:—

नमस्तस्मै नमस्तस्मै नमस्तस्मै परात्मने।
नामरूपं न यस्यैकं योऽस्तित्वेनोपलभ्यते'॥

—विष्णुपुराणम्।

## नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपम् ।

यद्वात्मानं सकलवपुषामेकमन्तर्बहिस्थं
दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् ।
नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपं
निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः (क)॥ १०६॥

—परमहंस शुकदेव—शुकाष्टकम् ।

## नान्यथा तीर्थकोटिभिः ।

अन्यानि तीर्थक्षेत्राणि काशीप्राप्तिकराणि च ।
काशीं प्राप्य विमुच्येत नान्यथा तीर्थकोटिभिः ॥ १०७॥

—सत्यज्ञानानन्दतीर्थ—काशीस्तोत्रम् ।

## नान्या गतिर्भवति वारिद ! चातकस्य ।

वातैर्विधूनय विभीषय भीमनादैः संचूर्णयत्वमथवा करकाभिघातैः ।
त्वद्वारिबिन्दुपरिपालितजीवितस्य नान्या गतिर्भवति वारिद ! चातकस्य (ख)॥ १०८॥

—पूर्वचातकाष्टकम् ।

## नान्यः पन्था विद्यतेऽयनाय ।

एको हꣳसो भुवनस्यास्य मध्ये स एवाग्निः सलिले सन्निविष्टः ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (ग) ॥ १०९॥

—श्वेताश्वतरोपनिषद् ।

---

(क) यद्वेति। यद्वा अथवा सकलवपुषां सर्वशरीराणाम् अन्तर्बहिस्थम् अन्तस्थं बहिस्थञ्च सततं सर्वभाण्डस्थं सर्वपात्रगतम् एकम् अद्वितीयं खमिव आकाशमिव पूर्णम् आत्मानं ततः तस्मात् कारणात् कारणभूतात् आत्मन इति शेषः भिन्नरूपम् अन्यत् अपरं किमपि कार्यं विश्वरूपं न इति दृष्ट्वा निस्त्रैगुण्ये त्रिगुणातीते पथि मार्गे आत्मज्ञानरूपे इति भावः विचरतः जनस्येति शेषः विधिः नित्यकाम्यनैमित्तिकव्यापारनियमः कः ? न कोऽपीत्यर्थः, निषेधः अवैधेषु प्रतिषेधः कः ? न कोऽपीत्यर्थः। —जीवानन्द विद्यासागर।

(ख) कस्यचित् आश्रितस्य प्रभुं प्रति वचनं प्रतीयते ।

(ग) तथाहि श्रुतौ—'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'॥ यजुः ३१।१८

न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (क) ॥ ११०॥

## नापकृतं नोपकृतं न सत्कृतम् ।

दृश्यताम्—'किं कृतं तेन' इति ।

## नापतिः सुखमाप्नोति ।

दृश्यताम्—'नातन्त्री विद्यते वीणा' इति ।

## नामृतं न विषं किञ्चित् ।

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम् ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी (ख) ॥ १११॥

—भर्तृहरि—शृङ्गारशतकम् ।

## नायमात्मा प्रवचनेन लभ्यः ।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् (ग) ॥ ११२॥

—कठोपनिषद् ।

—मुण्डकोपनिषद् ।

---

(क) इति श्रुतिः। 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति विष्णुपुराणात् ।

(ख) पाठान्तरम्—'नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम् ।
यस्याः सङ्गेन जीव्यते म्रियते च वियोगतः' ॥

(ग) अयम् आत्मा प्रवचनेन वेदाध्यापनेन न लभ्यः, मेधया ग्रन्थार्थधारणशक्त्या, बहुना श्रुतेन बहुशास्त्रज्ञानेन च न लभ्यः। यम् साधकम् एषः परमात्मा आत्मदर्शनाय वृणुते वरयति, तेन वृतेन साधकेन एव एषः परमात्मा लभ्यः; तस्य वृतस्य साधकस्य समीपे एषः परमात्मा स्वां स्वकीयां तनूं स्वरूपं वृणुते प्रकाशयति।

—'शङ्करकृपा' टीका।

## नायमात्मा बलहीनेन लभ्यः ।

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम (क) ॥११३॥

—मुण्डकोपनिषद् ।

## नारायणस्मरणहीनजनो जघन्यः ।

केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः ।
व्यासो वदत्यखिलवेदविशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥११४॥

## नारिकेलफलाम्बुवत् ।

दृश्यताम्—'गजभुक्तकपित्थवत्' इति ।

## नारिकेलसमाकाराः ।

नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः ।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥११५॥

—विष्णुशर्मा—हितोपदेशः ।

## नारीणां दूषणानि षट् ।

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट् ॥११६॥

—विष्णुशर्मा—हितोपदेशः ।

## नारीणां भूषणं पतिः ।

दृश्यताम्—'विद्या सर्वस्य भूषणम्' इति ।

---

(क) अयम् आत्मा बलहीनेन आत्मनिष्ठाजनितवीर्यहीनेन न लभ्यः, न च प्रमादात् विषय-सङ्गनिमित्त-औदास्यात् न वा अलिङ्गात् सन्यासरहितात् तपसः ज्ञानात् अपि सः लभ्यः। यः तु विद्वान् एतैः उपायैः वीर्य—अप्रमाद—सन्यासयुक्तज्ञानैः यतते, तस्य एषः आत्मा ब्रह्म-धाम विशते प्रविशति।

—'शङ्करकृपा' टीका।

## नार्यो हरन्ति हृदयं प्रसभं नराणाम् ।

आलम्बिहेमरसनाः (क) स्तनसक्तहाराः कन्दर्पदर्पशिथिलीकृतगात्रयष्टयः ।
मासे मधौ मधुरकोकिलभृङ्गनादैर्नार्यो हरन्ति हृदयं प्रसभं नराणाम् ॥११७॥

—कालिदास—ऋतुसंहारम् ।

## नार्यः श्मशानकुसुमा इव वर्जनीयाः ।

नार्यो हसन्ति (ख) च रुदन्ति च वित्तहेतो—
र्विश्वासयन्ति च नरं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलवता (ग) सदैव
नार्यः श्मशानकुसुमा इव (घ) वर्जनीयाः ॥११८॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## नाविष्णुः पृथिवीपतिः ।

नाजारजः पितृद्वेषी नाजारा भर्तृघातिनी ।
नामुनिर्ग्रन्थकर्त्ता च नाविष्णुः पृथिवीपतिः ॥
नाऋषिः कुरुते काव्यं नारुद्रः क्रमपाठकः ।
नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ॥११९॥

## नाशाय—नाशाय—नाशाय ।

दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः ।
श्यालको गृहनाशाय सर्वनाशाय मातुलः (ङ) ॥१२०॥

## नासतो विद्यते भावः ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१२१॥

—भगवद्गीता ।

---

(क) 'हेमरसनाः=सुवर्णमेखलाः ।
(ख) पाठान्तरम्—'एता हसन्ति' ।
(ग) 'कुलशीलसमन्वितेन' इति पाठान्तरम् ।
(घ) वेश्या श्मशानघटिका इव' इति पाठान्तरम् ।
(ङ) दृश्यताम्—'श्यालको गृहनाशाय' इति ।

## नासाध्यं मृदुना किञ्चित् ।

मृदुना दारुणं हन्ति मृदुना हन्त्यादारुणम् ।
नासाध्यं मृदुना किञ्चित्तस्मात्तीव्रतरं मृदु ॥१२२॥

—महाभारतम् ।

## नास्ति—नास्ति—नास्ति ।

सद्भावो नास्ति वेश्यानां स्थिरता नास्ति सम्पदाम् ।
विवेको नास्ति मूर्खाणां विनाशो नास्ति कर्मणाम् ॥१२३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं सुखम् ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं तपः ॥१२४॥
नास्ति ग्रामः कुतः सीमा नास्ति विद्या कुतो यशः ।
नास्ति ज्ञानं कुतो मुक्तिर्नास्ति भक्तिः कुतः सुधीः ॥१२५॥
पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् ।
मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥१२६॥

## नास्ति त्यागसमं तपः ।

## नास्ति रागसमं दुःखम् ।

## नास्ति विद्यासमं चक्षुः ।

## नास्ति सत्यसमं सुखम् ।

दृश्यताम्—'नास्ति-नास्ति-नास्ति' इति ।

## नास्ति बन्धुसमो रिपुः ।

गर्भस्थो हरते दुग्धं जन्मतः स्नेहमाहरेत् ।
पश्चाद्धनविभागेन नास्ति बन्धुसमो रिपुः ॥१२७॥

## नास्ति बुद्धिरयुक्तस्य ।

दृश्यताम्—'अशान्तस्य कुतः सुखम्' इति ।

## नास्ति मूलमनौषधम् ।

## नास्ति सांख्यसमं ज्ञानम् ।

नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम् ।
अत्र वः संशयो मा भूज्ज्ञानं सांख्यं परं मतम् ॥१२८॥

## नास्तिकस्याशीर्वचनम् ।

देवानर्चय सञ्चय प्रतिदिनं पुण्यानि जन्मान्तरे
भोगाय प्रयतो महाक्रतुविधौ स्वर्गाय हिंसां कुरु ।
इत्थं वञ्चकवञ्चनोत्पथगता बुद्धिस्तदीयाचिरा-
दप्रत्यक्षपदार्थसार्थरहितं पन्थानमारोहतु (क) ॥१२९॥
—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

## नास्त्यदेयं महात्मनाम् ।

कर्णस्त्वचं शिविर्मासं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥१३०॥

## नास्त्युद्यमसमो बन्धुः ।

दृश्यताम्—'आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः' इति ।

## नास्त्येव गतिरन्यथा ।

कर्मणा संसृतौ बन्धो भक्त्या सालोक्यमाप्यते ।
ज्ञानेनैव तु मोक्षः स्यान्नास्त्येव गतिरन्यथा (ख) ॥१३१॥

---

(क) हे महाराज! 'देवगणों की अर्चना करो, जन्मान्तर में भोग के निमित्त पुण्य-पुञ्ज सञ्चय करो और संयतचित्त होकर स्वर्गलाभ के निमित्त महायज्ञ में जीवहिंसा करो' इस प्रकार के प्रवञ्चकगणों के वञ्चनावाक्य के द्वारा विपथगामिनी आपकी बुद्धि अप्रत्यक्षपदार्थसमूह—विरहित (अर्थात् प्रत्यक्ष भिन्न और प्रमाण नहीं है अतएव स्वर्गजन्मान्तरादि वञ्चनावाक्य मात्र है इस कारण प्रत्यक्ष प्रमाण सिद्ध है) मार्ग में आरोहण करे।

(ख) नास्त्येव गतिरन्यथा इति समस्या ।

## नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं दुष्टचरैश्च हिंस्रैः।

मूलं भुजङ्गैः कुसुमानि भृङ्गैः शाखाः प्लवङ्गैः शिखराणि भल्लैः।
नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं दुष्टचरैश्च हिंस्रैः ॥१३२॥

—विष्णुशर्मा—हितोपदेशः।

## नाहं जीवः परात्मेति।

रज्जुसर्पवदात्मानं जीवो ज्ञात्वा भयं वहेत्।
नाहं जीवः परात्मेति ज्ञानश्चेन्निर्भयो भवेत् ॥१३३॥

—शङ्कराचार्य—आत्मबोधः।

## नाहं—नाहं—नाहम्।

नाहं देहो जन्ममृत्युः कुतो मे नाहं प्राणः क्षुत्पिपासा कुतो मे।
नाहं चित्तं शोकमोहौ कुतो मे नाहं कर्त्ता बन्धमोक्षौ कुतो मे ॥१३४॥

—शङ्कराचार्य—आत्मषट्कम्।

## निकटस्थं गरीयांसमपि लोको न मन्यते।

निकटस्थं गरीयांसमपि लोको न मन्यते।
पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥१३५॥

—कुसुमदेव—दृष्टान्तशतकम्।

## निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम्।

दृश्यताम्—'धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात्' इति।

## निग्रहः किं करिष्यति।

## निजकरकमलाभ्यां शम्भुपूजां करोमि।

कमलमुखि! भवत्याश्चारुवक्षोजशम्भू निरुपमसुषमाढ्यौ सर्वथा पूजनीयौ (क)।
अहमपि तु तपस्वी देवपूजाविधिज्ञो (ख) निजकरकमलाभ्यां शम्भुपूजां करोमि ॥१३६॥

---

(क) पाठान्तरम्—'किल परमरसाढ्यौ निर्मितौ केन धात्रा'।
(ख) पाठान्तरम्—'अहमपि तु न कामी किन्तु कान्ते तपस्वी'।

## निजगुणगरिमा सुखाकरो न ।

निजगुणगरिमा सुखाकरो न स्वयमनुवर्णयतां सतां कदाचित् (क) ।
निजकरकमलेन कामिनीनां कुचकलसाकलेन नु को विनोदः ॥ १३७॥

## नित्यानन्दं रसयति परम् ।

आशाभङ्गो भवति विरहो दुःसहश्चैव शोकः
संसारेस्मिन्बत निदधतो मूढबुद्धेर्ममत्वम् ।
नाशाभङ्गो न खलु विरहो नैव शोको न तापो
नित्यानन्दं रसयति परं सच्चिदानन्दभक्तः ॥ १३८॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## नित्यं सन्निहितो मृत्युः ।

दृश्यताम्—'कर्त्तव्यो धर्मसंग्रहः' इति ।

## निन्दास्तवोपहसितानि न मां स्पृशेयुः ।

उन्मत्तमेव भुवनान्यपि मन्वतां मां निन्दन्तु मामुपहसन्त्वथवा स्तुवन्तु ।
चेदात्ममोदमदिराहतचेतनः स्यां निन्दास्तवोपहसितानि न मां स्पृशेयुः ॥ १३९॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## निनिन्द वानरान्काचित् ।

मलयाचलसम्भूते वाति वाते शनैः शनैः (ख) ।
निनिन्द वानरान्काचित्कामिनी यामिनीमुखे (ग) ॥ १४०॥

---

(क) पाठान्तरम्—'निजगुणगरिमा सुखाकरः स्यात् स्वयमनुवर्णयतां सतां न तावत्'।

(ख) 'मन्दं वहति मारुते' इति पाठान्तरम्।

(ग) कवि लोग वर्णन करते हैं कि मलयानिल विरहिणियोंके लिये अत्यन्त कष्टदायक होता है। समुद्र में सेतुबन्धन के समय वानरगण बहुसंख्यक पर्वत उत्पाटन कर लाए थे। उसी समय यदि वे मलय पर्वत को भी उपाड़ लाते तो विरहिणी स्त्रियों को मलयानिल के कारण जो दुःख भोग करना पड़ता है वह न होता। वानरों ने यह नहीं किया। इसी से यह उनकी निन्दा है।

## निपतन्ति भाग्यभाजामुपरि कटाक्षाः सरोजाक्ष्याः ।

कुचकलशस्खलदम्बरसंवरणव्यग्रपाणिकमलायाः ।
निपतन्ति भाग्यभाजामुपरि कटाक्षाः सरोजाक्ष्याः ॥ १४१॥

## निमित्तनैमित्तकयोरयं क्रमः ।

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तकयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः ॥ १४२॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## निमित्तमात्रं भव सव्यसाचिन् ।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवेते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ! ॥ १४३॥

—भगवद्गीता ।

## नियतिः केन बाध्यते ।

मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः ।
सोऽभिमन्यू रणे शेते नियतिः केन बाध्यते (क) ॥ १४४॥

## नियतिः केन लङ्घ्यते ।

भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि ।
पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ १४५॥

—दण्डिनः ।

## निर्गमे प्राणसङ्कटम् ।

दृश्यताम्—'आगमे सुखमाप्नोति' इति ।

---

(क) पाठान्तरम्—'गोविन्दो मातुलो यस्य पिता यस्य धनञ्जयः ।
अभिमन्यू रणे शेते नियतिः केन वार्यते' ॥

## निर्गुणः किं करिष्यति ।

यस्य कस्य प्रसूतोऽपि गुणवान्पूज्यते नरः ।
धनुर्वंश विशुद्धोऽपि निर्गुणः किं करिष्यति ॥ १४६ ॥

—नारायणपण्डित—हितोपदेशः।

## निर्द्रव्यं पुरुषं त्यजन्ति गणिकाः ।

दृश्यताम्—'कस्यास्ति को वल्लभः' इति ।

## निर्धनता सर्वापदामास्पदम् ।

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः सत्त्वात्परिभ्रंश्यते
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णाः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निर्धनता सर्वापदामास्पदम् ॥ १४७॥

—विष्णुशर्मा—हितोपदेशः।

## निर्धना ब्रह्मचारिणः ।

दृश्यताम्—'अशक्तस्तस्करः साधुः' इति ।

## निर्धनः परिभूयते ।

ब्रह्महाऽपि नरः पूज्यो (क) यस्यास्ति विपुलं धनम् ।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ १४८॥

—चाणक्यशतकम्।

## निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ।

किं मे वक्त्रमुपेत्य चुम्बसि बलान्निर्लज्ज ! लज्जा न ते (ख)
वस्त्रान्तं शठ ! मुञ्च मुञ्च शपथैः किं धूर्त्त ! निर्वञ्चसे (ग) ।
क्षीणाहं तव रात्रिजागरवशात्तामेव याहि प्रियां
निर्माल्योज्झितपुष्पदामनिकरे(घ) का षट्पदानां रतिः ॥ १४९॥

—कालिदास—शृङ्गारतिलकम्।

---

(क) 'चाण्डालोऽपि नरः पूज्यः' इति पाठान्तरम्।
(ख) पाठान्तरम्—'लज्जा क्व ते' इति।
(ग) पाठान्तरम्—'किं धूर्त्त वाग्बन्धनैः' इति।
(घ) निर्माल्योज्झितपुष्पदामनिकरे अर्थात् परागरहिते कुसुमे।

## निर्मिताः केन योषितः ।

अमृतस्येव कुण्डानि रत्नानामिव राशयः ।
रतेरिव निधानानि निर्मिताः केन योषितः ॥ १५० ॥

## निर्वाणदीपे किमु तैलदानम् ।

दृश्यताम्—'किमु—किं—किमु' इति ।

## निर्विवेको विधाता ।

शशिनि खलु कलङ्कः कण्टकं पद्मनाले युवतिकुचनिपातः पक्वता केशजाले ।
जलधिजलमपेयं पण्डिते निर्धनत्वं वयसि धनविवेको निर्विवेको विधाता ॥ १५१ ॥

—अष्टरत्नम् ।

## निवृत्तरागस्य गृहं तपोवनम् ।

वनेषु दोषाः प्रभवन्ति रागिणां गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्त्तते निवृत्तरागस्य गृहं तपोवनम् ॥ १५२ ॥

—शान्तिशतकम् ।

## निशमय ममापि स्तुतिमिमाम् ।

निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे !
निरायातज्ञाने नियमपरचित्तैकनिलये ! ।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतिपदे !
निरातङ्के नित्ये ! निशमय ममापि स्तुतिमिमाम् ॥ १५३ ॥

—शङ्कराचार्य—आनन्दलहरी ।

## निशान्ते च पयः पिवेत् ।

न संपत्तिः क्रियासक्तिर्भेषजं च न विद्यते ।
सर्वरोगविनाशाय निशान्ते च पयः पिबेत्(क) ॥ १५४ ॥

---

(क) दृश्यताम्—'किं वैद्यस्य प्रयोजनम्' इति ।

## निशारत्नं चन्द्रः ।

## निष्कारणवैरिणो जगति ।

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ १५५॥

—भर्त्तृहरि—नीतिशतकम् ।

## निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ।

भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमुपगतौ नष्टसन्देहवृत्तेः ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विचरतः को विधिः ? को निषेधः ? (क) ॥ १५६ ॥

—परमहंस शुकदेव—शुकाष्टकम् ।

## निस्त्रैगुण्यो भवार्जुन ।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ! ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ १५७॥

—भगवद्गीता ।

## निःस्पृहस्य तृणं जगत् ।

दृश्यताम्—'तृणं—तृणं—तृणम्' इति ।

---

(क) भेदाभेदाविति । सपदि तत्त्वावबोधमात्र एव भेदः अन्यबुद्धिः अभेदः आत्मबुद्धिः तौ गलितौ नष्टौ आत्मपरविवेकः ध्वस्त इति भावः पुण्यपापे विशीर्णे विलयं गते, पुण्यपापक्षयवत एव ब्रह्मसाक्षात्कारस्य शास्त्रीयत्वादिति भावः माया अविद्या मोहः अज्ञानं तौ क्षयमुपगतौ नाशं गतौ । शब्दातीतं अशब्दवेद्यमित्यर्थः अनिर्वचनीयमिति यावत् त्रिगुणरहितं सत्त्वरजस्तमोऽतीतं तत्त्वावबोधं ब्रह्मज्ञानमित्यर्थः प्राप्य नष्टा सन्देहस्य इदं सत्यम् इदमसत्यं वेति संशयस्य वृत्तिः स्थितिः यस्य तथाभूतस्य असन्दिग्धमनस इत्यर्थः निरस्त्रैगुण्ये त्रिगुणातीते पथि मार्गे आत्मज्ञानरूपे इति भावः विचरतः जनस्येति शेषः विधिः नित्यकाम्यनैमित्तिक-व्यापारनियमः कः ? न कोऽपीत्यर्थः, निषेधः अवैधेषु प्रतिषेधः कः ? न कोऽपीत्यर्थः ।

—जीवानन्द विद्यासागर ।

## निःस्नेहो याति निर्वाणम् ।

निःस्नेहो याति निर्वाणं स्नेहोऽनर्थस्य कारणम् ।
निःस्नेहेन प्रदीपेन यदेतदेप्रकटीकृतम् ॥१५८॥

—श्रीदामोदरदेवानाम् ।

## नीचादप्युत्तमां विद्याम् ।

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि (क) ॥१५९॥

—चाणक्यशतकम् ।

## नीचो वदति न कुरुते ।

शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥१६०॥

## नीचं सेवितुमिच्छति ।

गणेशः स्तौति मार्जारं स्ववाहस्याभिरक्षणे ।
महानपि प्रसङ्गेन नीचं सेवितुमिच्छति ॥१६१॥

## नीचः परदारलम्पटो भवति ।

परिपूर्णोऽपि तटाके काकः कुम्भोदकं पिबति ।
अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥१६२॥

## नीरतरङ्गो ममापि हृदये च ।

दिशि दिशि नीरतरङ्गो नीरतरङ्गो(ख)ममापि हृदये च ।
आयाता सखि ! वर्षा वर्षादपि यासु वासरो दीर्घः ॥१६३॥

---

(क) दृश्यताम्—'स्त्रीरत्नं दुष्कुलादपि' इति।
(ख) रतस्य प्रीतेः अभावः नीरतम् तस्य रङ्गः नृत्यम् यातनायाः अतिशय इत्यर्थः।

## नीरुजस्य किमौषधैः ।

दृश्यताम्—'दरिद्रान्भर कौन्तेय' इति ।

## नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।

दृश्यताम्—'ईश्वरवन्दना' ।

## नृपतिकुलरत्नं रघुपतिः ।

## नृपस्यैते महागुणाः ।

सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एभिर्युक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥१६४॥

—विष्णुशर्मा—हितोपदेशः ।

## नेत्रेण किं हरिविलोकनवञ्चितेन ।

दृश्यताम्—'किं—किं—किम्' इति ।

## नेयं सज्जनसङ्गे चित्तम् ।

दृश्यताम्—'गेयं गीतानामसहस्रम्' इति ।

## नैकत्र स्थापयेद्बुधः ।

दृश्यताम्—'घृतकुम्भसमा नारी' इति ।

## नैयायिकस्याशीर्वचनम् ।

यः सृष्टिस्थितिसंहृतीर्वितनुते ब्रह्मादिमूर्त्तित्रिकै—
र्यस्याधीनतया स्थितानि सदसत्कर्माण्यपि प्राणिनाम् ।
नित्येच्छाकृतिबुद्धिमानथ परो जीवात्परात्मा स्वयं
सोऽयं वो विदधातु पूर्णमचिराच्चेतोगतं यद्भवेत् (क) ॥१६५॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

---

(क) जो ब्रह्मा, विष्णु और महेश्वर इन तीनों देवताओंका रूप धारण कर सृष्टि, स्थिति और संहार का कार्य संपादन किया करता है, प्राणियों के पाप और पुण्यकर्म जिसके आधीन हैं, जो नित्य इच्छावान्, नित्य बुद्धिमान् और जो जीवात्मा से भी उत्कृष्ट है, वही परमात्मा परमेश्वर आपके मनोरथों को शीघ्र पूर्ण करे।

## नैराश्यं परमं सुखम् ।

आशा बलवती कष्टं नैराश्यं परमं सुखम् ।
आशा निराशाः कृत्वा तु सुखं स्वपिति पिङ्गला ॥१६६॥
आशैव राक्षसी पुंसामाशैव विषमञ्जरी ।
आशैव जीर्णमदिरा नैराश्यं परमं सुखम् ॥१६७॥

## नैव किञ्चित्करोति सः ।

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥१६८॥

—भगवद्गीता ।

## नैव किञ्चित्करोमीति ।

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वान्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्त इति धारयन् ॥१६९॥

—भगवद्गीता ।

## नैवाश्रितेषु महतां गुणदोषचिन्ता ।

चन्द्रः क्षयी प्रकृतिवक्रतनुर्जडात्मा दोषाकरो भवति मित्रविपत्तिकाले ।
मूर्ध्नां तथापि विधृतः परमेश्वरेण नैवाश्रितेषु महतां गुणदोषचिन्ता (क) ॥१७०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## नैष वेत्ति कुलजाधरामृतम् ।

यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि ! सादरं वचः ।
पामरीवदनलोलुपो युवा नैष वेत्ति कुलजाधरामृतम् ॥१७१॥

---

(क) पाठान्तरम्—'दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि।
चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का' ॥

## नैषा तर्केण मतिरापनीया ।

नैषा तर्केण मतिरापनीया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ! (क) ।
यान्त्वमापः सत्यधृतिर्बतासि त्वादृङ्नोभूयान्नचिकेतः प्रष्टा ॥ १७२॥

—कठोपनिषद् ।

## नो धावनं साधनमस्ति लक्ष्म्याः ।

मा धाव मा धाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः ।
चेद्धावनं साधनमस्ति लक्ष्म्याः श्वाधावमानोऽपि लभेत लक्ष्मीम् ॥ १७३॥

## नो न वेदेति वेद च ।

नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद 'नो न वेदेति वेद च' (ख) ॥ १७४॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् (ग) ॥ १७५॥

—केनोपनिषद् ।

---

(क) हे प्रेष्ठ प्रियतम ! एषा अन्येन अभिज्ञेन आचार्येण प्रोक्ता सती सुज्ञानाय सुबोधाय भवति, सुविज्ञेया भवति इत्यर्थः। —'शङ्करकृपा' टीका।

(ख) (अहं ब्रह्म) सुवेद (सुष्ठु वेद) इति न अहम् मन्ये; न वेद इति, वेद च (इति) नो (न) मन्ये। नः (अस्माकं मध्ये) 'नो न वेद वेद च इति' तत् (वचनम्) यः वेद, (सः) तत् (ब्रह्म) वेद।

(ग) (ब्रह्म) यस्य अमतम् (मया ब्रह्म अविदितम् इति निश्चयः), तस्य (तत्) मतम् (ज्ञातम्), ब्रह्म यस्य मतम् (मया ब्रह्म विदितम् इति निश्चयः) स (तत्) न वेद (जानाति)। (ब्रह्म) विजानताम् (सम्यक् विदितवताम्) अविज्ञातम् (न अस्माभिः ब्रह्म सम्यग्विदितम् इति निश्चयः) अविजानताम् (असम्यग्दर्शिनाम्) (तत्) विज्ञातम् (अस्माभिः ब्रह्म सम्यग्विदितम् इति निश्चयः )।—'शङ्करकृपा' टीका।

भावार्थ—मैं नहीं समझता हूँ कि मैंने ब्रह्म को उत्तम प्रकार से जाना है; मैं उसे नहीं जानता हूँ ऐसा नहीं, उसे जानता हूँ ऐसा भी नहीं। 'मैं उसे नहीं जानता हूँ ऐसा नहीं और उसे जानता हूँ ऐसा भी नहीं'—इस वाक्य का अर्थ हमारे बीच में जिन लोगों ने जाना है वे ही उसे जान पाये हैं।

जो समझता है कि मैं ब्रह्म को नहीं जान पाया है, उसने उसे जाना है और जो समझता है मैं उसे जान गया वह ब्रह्म को नहीं जानता है। उत्तम ज्ञानवान् व्यक्ति के निकट ब्रह्म अविज्ञात है (अर्थात् उनका यह विश्वास है कि उन्होंने ब्रह्म को नहीं जाना), परन्तु असम्यगदर्शियों के निकट वह विज्ञात है (अर्थात् ऐसे लोग समझते हैं कि उन्होंने ब्रह्म को उत्तम प्रकार से जान लिया है ) ।

## नो सख्यश्चतुराः ।

दृश्यताम्—'कथं नु विरहः सोढव्य इत्थं मया' इति ।

## न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ।

निन्दन्ति नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥१७६॥

—भर्त्तृहरि—नीतिशतकम् ।

---

# प

## पङ्गुस्तरेत् सागरम् ।

विश्वामित्रपराशरप्रभृतयो ये वारिपर्णाशना (क)—
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा—
स्तेषामिन्द्रियनिग्रहो यदि भवेत्पङ्गुस्तरेत्सागरम् (ख) ॥१॥

## पञ्चत्वमापुः स्वगुणेन बद्धाः ।

## पञ्चमो भगिनीसुतः ।

दृश्यताम्—'जामाता कृष्णसर्पश्च' इति ।

## पञ्चाग्नयो मनुष्येण परिचर्या प्रयत्नतः ।

पञ्चाग्नयो मनुष्येण परिचर्या प्रयत्नतः ।
पितामाताग्निरात्मा च गुरुश्च भरतर्षभ ! ॥२॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) 'वाताम्बुपर्णाशनाः' इति पाठान्तरम् ।
(ख) पाठान्तरम्—'विन्ध्यस्तरेत्सागरे' इति ।

## पञ्चानृतान्याहुरपातकानि ।

विवाहकाले ऋतुसंप्रयोगे प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥३॥

## पञ्चेषुः पुनरेष मां हुतवहक्रूरैः शरैः कृन्तति ।

जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा
निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गगणे निकुञ्जभवने लब्धं त्वया श्रीफलं
पञ्चेषुः पुनरेष मां हुतवहक्रूरैः शरैः कृन्तति (क) ॥४॥

—भानुदत्त मिश्र—रसमञ्जरी।

## पञ्चैता मातरः स्मृताः ।

राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च ।
पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः (ख)॥ ५॥

## पञ्चैतानि शनैः शनैः ।

शनैः कन्था शनैः पन्था शनैः पर्वतलङ्घनम् ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः (ग) ॥६॥

## पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ।

आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥७॥

—नारायणपण्डित—हितोपदेशः।

---

(क) अत्र जागर एव नेत्रलौहित्यहेतुः मधुपानमेव मनोघूर्णनकारणं चौर्यमेव प्रहारहेतुरित्येतत्त्रयस्य एकाधारवर्त्तित्वमेव युक्तं किन्त्वत्र तद्विपरीतमिति कार्यकारणयोर्भिन्नदेशावस्थानात् असङ्गतिरलङ्कारः। तदुक्तं दर्पणे। कार्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति।

—जीवानन्द विद्यासागर।

(ख) पाठान्तरम्—'आदौ माता गुरोः पत्नी ब्राह्मणी राजपत्निका।
धेनुर्धात्री तथा पृथ्वी पञ्चैता मातरः स्मृताः'॥

(ग) दृश्यताम्—'सर्व एते शनैः शनैः' इति।

## पञ्चैतेऽति पवित्रकाः ।

उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटकम् ।
काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः (क) ॥८॥

## पञ्चैते गृहिणः पोष्याः ।

अतिथिर्बालकः पत्नी जननी जनकस्तथा ।
पञ्चैते गृहिणः पोष्या इतरे च स्वशक्तितः ॥९॥

## पञ्चैते पितरः स्मृताः ।

अन्नदाता भयत्राता यस्य कन्या विवाहिता ।
जनिता चोपनेता च पञ्चैते पितरः स्मृताः (ख) ॥१०॥

## पञ्चैव पूजयन्लोके ।

पञ्चैव पूजयन्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथि पञ्चमान् ॥११॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## पञ्चैव यज्ञाः कथिता नृपाणाम् ।

दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोषस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राज्यरक्षा पञ्चैव यज्ञाः कथिता नृपाणाम् ॥१२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## पठतो नास्ति मूर्खत्वम् ।

दृश्यताम्—'नास्ति—नास्ति—नास्ति' इति ।

---

(क) दुग्धं गङ्गा मधु पट्टाम्बरं पिप्पलञ्च ।
(ख) पाठान्तरम्—'जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः' ॥

## पण्डिता एव जानन्ति सिंहशूकरयोर्बलम् ।

दश व्याघ्रा जिताः पूर्वं सप्त सिंहास्त्रयो गजाः ।
पश्यन्तु देवताः सर्वा अद्य युद्धं त्वया मया ॥
गच्छ शूकर ! भद्रं ते ब्रूहि सिंहो मया जितः ।
पण्डिता एव जानन्ति सिंहशूकरयोर्बलम् (क) ॥ १३ ॥

—घटकर्पर—नीतिसारम् ।

## पण्डिताः समदर्शिनः ।

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १४ ॥

—भगवद्गीता ।

## पतनज्ञानमतीव दुःसहम् ।

यदि यास्यसि नाथ निश्चितं ननु यामीति वचस्तु मा वद ।
अशनेः पतने न वेदना पतनज्ञानमतीव दुःसहम् ॥ १५ ॥

## पतिगृहे तव दास्यमपि क्षमम् ।

यदि यथा वदति क्षितिपस्तथा त्वमसि किं पुनरुत्कुलया त्वया ।
अथ तु वेत्सि शुचिव्रतमात्मनः पतिगृहे तव दास्यमपि क्षमम् ॥ १६ ॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## पतिं त्वपतितं भजेत् ।

सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ।
अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत (ख)॥ १७ ॥

—श्रीमद्भागवतम् ।

---

(क) अप्रस्तुतप्रशंसया मूर्खपण्डितयोः संवादो व्यज्यते ।
(ख) पाठान्तरम्—'पतितं स्वामिनं त्यजेत्' इति ।

## पत्रं पुष्पं फलं तोयम् ।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥१८॥

—भगवद्गीता ।

## पथि सूत्रवदाचरेत् ।

स्वगृहे पूर्ण आचारः परगेहे तदर्धकः ।
तदर्धकः परग्रामे पथि सूत्रवदाचरेत् ॥१९॥

## पथिक हे ! स्थानान्तरे गम्यताम् ।

वाणिज्येन गतः स मे गृहपतिर्वार्त्तापि न श्रूयते
प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता ।
बालाहं नवयौवना निशि कथं स्थातव्यमस्मद्गृहे
सायं सम्प्रति वर्त्तते पथिक हे ! स्थानान्तरे गम्यताम् (क)॥२०॥

—कालिदास—शृङ्गारतिलकम् ।

## पथिकहृदयघर्मे सोऽपि वाञ्छां करोति ।

दिनकरकिरणौघैस्तापितः पान्थ एको द्रुतगतिरतिदूरं वृक्षमूलं प्रयातः ।
तरुरपि दलहीनो मूलतश्चाभितप्तः पथिकहृदयघर्मे सोऽपि वाञ्छां करोति ॥२१॥

## पदकमलयोर्दासदासानुदासः ।

नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो
नाहं वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा ।
किन्तु प्रोद्यन्निखिलपरमानन्दपूर्णामृताब्धे—
र्गोपीभर्त्तुः पदकमलयोर्दासदासानुदासः ॥२२॥

—चैतन्यचरितामृते—पद्यावल्याम् ।

---

(क) कापि नवयौवनसम्पन्ना पृष्टवन्तं पथिकं रात्रिवासार्थं निषेधाख्यानमाह ।

## पदमेकं न गच्छति ।

पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः ।
चलते वायुवेगेन पदमेकं न गच्छति (क) ॥२३॥

## पदस्थितस्य पद्मस्य मित्रे वरुणभास्करौ ।

पदस्थितस्य पद्मस्य मित्रे वरुणभास्करौ (ख) ।
पदच्युतस्य पद्मस्य क्लेदक्लेशकरावुभौ ॥२४॥

## पदाश्रयं देहि निराश्रयाय ।

घोरेऽतिघोरे विषयान्धकारे निमीलितः सीदति मेऽन्तरात्मा ।
कोऽन्यस्त्वदन्योऽस्ति हरे शरण्यः पदाश्रयं देहि निराश्रयाय ॥२५॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## पदे तवेयं मम देव भिक्षा ।

भवोऽयमुन्मत्तनिबन्धकारा हसाम्यहो रोदिमि चात्र बद्धः ।
पदे तवेयं मम देव भिक्षा विमोचयास्माद्भवबन्धनान्माम् ॥२६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## पदे पदे प्रत्ययमावहन्ति ।

अन्यानि शास्त्राणि विनोदमात्रं प्राप्तेषु वा तेषु न तैश्च किञ्चित् ।
चिकित्सितज्योतिषतन्त्रवादाः पदे पदे प्रत्ययमावहन्ति ॥२७॥

## पदं हि सर्वत्र गुणैर्निधीयते ।

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोषवीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥२८॥

—कालिदास—रघुवंशम् ।

## पद्म पत्रमिवाम्भसा ।

---

(क) अत्रोत्तरम्—कुलालचक्रदण्डौ ।
(ख) 'सहायौ वारिभास्करौ' इति पाठान्तरम् ।

## पद्मिनी पद्मगन्धा ।

भवति कमलनेत्रा नासिका क्षुद्ररन्ध्रा अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
सुवचनसुशीला गातवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी पद्मगन्धा (क) ॥२९॥
—श्रीजयदेव—रतिमञ्जरी ।

## पद्मिन्या न गतिर्विना दिनमणिम् ।

अस्तं यास्यसि याहि वर्त्मनि तत्र स्वस्त्यस्तु भोः सर्वथा
वक्तव्यं कियदस्ति मेऽत्र जगदानन्दैकसिन्धो रवे !
नाहं कैरविणी न वास्मि रजनी तत्प्रीतिरिन्दूदये
पद्मिन्या न गतिर्विना दिनमणिं स्मर्त्तव्यमेतत्त्वया ॥३०॥

## पद्येन कोऽयं वद रौति शैले ।

गिरौ समाकर्ण्य मयूरनादं जगाद विद्या वचसा कुमारम् ।
पद्येन कोऽयं वद रौति शैले मृदुस्वरं प्राज्ञवरो यदि स्याः (ख) ॥३१॥
—विह्लण—विद्यासुन्दरम् ।

## पन्था वातेन शुध्यति ।

रजसा शुध्यते नारी काष्ठं शुध्यति तक्षणात् ।
ताम्रमाम्लप्रयोगेन पन्था वातेन शुध्यति (ग) ॥३२॥

## पयसा कमलेन बिभाति सरः ।

---

(क) तथाहि द्वात्रिंशत्पुत्तलिकायाम्—
'कमलमुकुलमृद्वी फुल्लराजीवगन्धा सुरतपयसि यस्याः सौरभं दिव्यमङ्गे ।
चकितमृगसनाभे प्रान्तरक्ते च नेत्रे स्तनयुगलमनर्घं श्रीफलश्रीविडम्बि ॥१॥
तिलकुसुमसमानां बिभ्रती नासिकां या द्विजसुरगुरुपूजां श्रद्दधाना सदैव ।
कुवलयदलकान्तिः कापि चाम्पेयगौरी विकचकमलकोशा कामिनी कान्तपत्रा ॥२॥
व्रजति मृदुसलीलं राजहंसीव तन्वी त्रिवलिललितमध्या हंसवाणी सुवेशा ।
मृदुलघुशुचि भुङ्क्ते राजहंसी सुकेशी धवलकुसुमवासोवल्लभा पद्मिनी स्यात्'॥३॥

(ख) 'नदन्ति गोकर्णशरीरभक्षाः' इति, 'रूराव कान्ते पवनाशनादः' इति श्लोकद्वये उपर्युक्त-श्लोकस्योत्तरम् तत् दृश्यताम् ।

(ग) पाठान्तरम्—'भस्मना शुध्यते कांस्यं ताम्रमाम्लेन शुध्यति ।
रजसा शुध्यते नारी नदी वेगेन शुध्यति' ॥
दृश्यताम्—'ऊर्णा वातेन शुध्यति' इति, 'द्रव्यं मूल्येन शुध्यति' इति ।

**पयोऽपि शौण्डिनीहस्ते वारुणीत्यभिधीयते ।**

दृश्यताम्—'कर्त्तव्यो महदाश्रयः' इति ।

**पयो गते किं खलु सेतुबन्धः ।**

दृश्यताम्—'किमु—किं—किमु' इति ।

**पयो हि गाङ्गं त्यजतामिहाङ्गम् ।**

पयो हि गाङ्गं त्यजतामिहाङ्गं पुनर्नचाङ्गं यदि वापि चाङ्गम् ।
करे रथाङ्गं शयने भुजङ्गो याने विहङ्गश्चरणेऽम्बु गाङ्गम् ॥३३॥
—गङ्गाष्टकम् ।

**पयोद ! तस्मिन्विमुखः कुतस्त्वम् ।**

आपो विमुक्ता क्वचिदाप एव क्वचिन्न किञ्चिद्गरलं क्वचिच्च ।
यस्मिन्विमुक्ताः प्रभवन्ति मुक्ताः पयोद ! तस्मिन्विमुखः कुतस्त्वम् ॥३४॥

**पयःपानं भुजङ्गानाम् ।**

दृश्यताम्—'उपदेशो हि मूर्खाणाम्' ।

**परदुःखं न जानन्ति ।**

राजा वेश्या यमो वह्निः प्राघूर्णो (क) बालयाचकौ ।
परदुःखं न जानन्ति ह्यष्टमो ग्रामकण्टकः ॥३५॥

**परधर्मो भयावहः ।**

**परपादेन गच्छति ।**

दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः ।
गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति (ख) ॥३६॥

**परबुद्धिर्विनाशाय ।**

---

(क) प्राघूर्णः=अतिथिः ।
(ख) अत्रोत्तरम्—उपानत् ।

## परमे ब्रह्मणि कोऽपि न लग्नः ।

बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः ।
वृद्धस्तावच्चिन्तामग्नः परमे ब्रह्मणि कोऽपि न लग्नः ॥३७॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।
—मोहमुद्गरः ।

## परलोकगतस्य को बन्धुः ।

दाराः पुत्रेषु रताः पुत्राः पितृधनपरिग्रहव्यग्राः ।
जननी रोदनशरणा परलोकगतस्य को बन्धुः (क) ॥३८॥

## परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन्प्रकृत्या पुरुषेण च ॥३९॥
परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रंश्यते स्वार्थादसत्यभिनिवेशतः ॥४०॥

—श्रीमद्भागवतम् ।

## परहस्ते गता गता ।

लेखनी पुस्तिका रामा परहस्ते गता गता ।
कदाचित्पुनरायाता भ्रष्टा मृष्टा च चुम्बिता ॥४१॥

## परहस्तगतं गतम् ।

पुस्तकञ्च कलत्रञ्च परहस्तगतं गतम् ।
यदि वा पुनरायातं भग्नं छिन्नञ्च मर्दितम् (ख)॥४२॥

---

(क) दृश्यताम्—'कर्मानुगो गच्छति जीव एकः' इति।
(ख) पाठान्तरम्—'पुस्तकं वनिता वित्तं परहस्तगतं गतम्।
यदि चेत्पुनरायातं नष्टं भ्रष्टं च खण्डितम्'॥

## परात्परं पुरुषमुपैति दिव्यम् ।

यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ४३॥
—मुण्डकोपनिषद् ।

## पराधीनं चेतः किमपि कर्त्तुं मृगयते ।

अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलादरविदलदेलापरिमलः ।
इयं प्रावृड् धन्या नवजलदविन्यासरुचिरा
पराधीनं चेतः सखि ! किमपि कर्त्तुं मृगयते ॥ ४४॥
—भानुदत्त मिश्र—रसमञ्जरी ।

## परान्नं दुर्लभं लोके ।

परान्नं प्राप्य दुर्बुद्धे मा शरीरे (क) दयां कुरु ।
परान्नं दुर्लभं लोके शरीरन्तु पुनः पुनः (ख) ॥ ४५॥

## परिभ्रमसि किं दूरम् ।

परिभ्रमसि किं दूरं तुच्छकाचजिघृक्षया ।
मनः किं नाभिजानीषे गृहे चिन्तामणिं तव ॥ ४६॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## परिहर नश्वरविषयपिपासाम् ।

यदि मम मानस ! वाञ्छसि मुक्तिं रजतधिया किमु भजसे शुक्तिम् ।
परिहर नश्वरविषयपिपासां मुरहरचरणे कुरु चरमाशाम् ॥ ४७॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) 'प्राणेषु' इति पाठान्तरम् ।
(ख) हास्यरसात्मकः श्लोकोऽयम् ।
पाठान्तरम्—'दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि' इति ।

## परीक्षा—परीक्षा—परीक्षा ।

आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भवति ।
विनये वंशपरीक्षा स्त्रियाः परीक्षा तु निर्धने पुंसि ॥४८॥

## परीक्षा न प्रकर्त्तव्या ।

नदीनां च कुलानां च मुनीनां च महात्मनाम् ।
परीक्षा न प्रकर्तव्या स्त्रीणां दुश्चरितस्य च ॥४९॥

## परोपकाराय शरीरमेतत् ।

परोपकाराय वहन्ति नद्यः परोपकाराय दुहन्ति गावः ।
परोपकाराय फलन्ति वृक्षाः परोपकाराय शरीरमेतत् ॥५०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## परोपकाराय सतां विभूतिः ।

रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति ? ।
श्रीखण्डखण्डैर्मलयाचलः किं ? परोपकाराय सतां विभूतिः ॥५१॥

—वेतालभट्ट—नीतिप्रदीपः ।

## परोपकाराय सतां विभूतयः ।

पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः ॥५२॥
मूले भुजङ्गैः शिखरे विहङ्गैः शाखाः प्लवङ्गैः कुसुमानि भृङ्गैः ।
आश्चर्यमेतत्खलु चन्दनस्य परोपकाराय सतां विभूतयः (क) ॥५३॥

## परोपकारः पुण्याय ।

श्रूयतां धर्मसर्वस्वं यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥५४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) दृश्यताम्—'नास्त्येव तच्चन्दनपादपस्य' इति ।

## परोपतापिनः सर्वे प्रायशो दीर्घजीविनः ।

ग्रीष्मकाले दिनं दीर्घं शीतकाले तु शर्वरी (क) ।
परोपतापिनः सर्वे प्रायशो दीर्घजीविनः ॥५५॥

## परोपदेशसमये जनाः सर्वेऽपि पण्डिताः ।

परोपदेशसमये जनाः सर्वेऽपि पण्डिताः ।
तदनुष्ठानसमये मुनयोऽपि न पण्डिताः ॥५६॥

## परोपदेशे पाण्डित्यम् ।

परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणां ।
धर्मे स्वीयमनुष्ठानं कस्यचित्तु महात्मनः ॥५७॥
—विष्णुशर्मा—हितोपदेशः।

## परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ।

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाम् ।
न जाने मुद्रास्ते तदपि न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥५८॥
—शङ्कराचार्य—देव्यपराधक्षमापणस्तोत्रम्।

## परं जाने मातस्त्वदभयपदं निर्वृतिपदम् ।

न मन्त्रं नो तन्त्रं जननि ! न च जाने स्तुतिकथां
न चाह्वानं ध्यानं जननि ! न च जानेऽर्चनविधिम् ।
तपो वा योगं वा किमपि नहि जाने जडमतिः
परं जाने मातस्त्वदभयपदं निर्वृतिपदम् ॥५९॥
—ताराकुमार—कृष्णभक्तिरसामृतम्।

---

(क) 'शीतकाले तथा निशा' इति पाठान्तरम्।

## पवर्गरचितामूर्त्तिः ।

पार्वती-फणि-बालेन्दु-भस्म-मन्दाकिनीयुता ।
पवर्गरचितामूर्त्तिरपवर्गप्रदायिनी (क) ॥६०॥

## पश्चाज्झनझनायते ।

सुवर्णसदृशं पुष्पं फले रत्नं भविष्यति ।
आशया सेवितो वृक्षः पश्चाज्झनझनायते (ख) ॥६१॥

## पश्य गच्छति सखे ! तरुणी किम् ।

मन्दमन्दगमना करिणी किं वा विशालनयना हरिणी किम् ।
पूर्णचन्द्रवदना रजनी किं पश्य गच्छति सखे ! तरुणी किम् ॥६२॥

## पश्यति—पश्यन्ति—पश्यति—पश्यन्ति ।

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः (ग) ॥६३॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

राजा पश्यति कर्णाभ्यां धिया पश्यति पण्डितः ।
पशुः पश्यति गन्धेन भूतैः पश्यन्ति बर्बराः ॥६४॥

## पश्यन्नपि न पश्यति ।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥६५॥

---

(क) पाठान्तरम्—'पवर्गरचितामूर्त्तिरपवर्गप्रदास्तु वः ।
दिगम्बरनितम्बिन्याः किमम्बरविभूषणम्' ॥

(ख) अत्रोत्तरम्—शणवृक्षः ।

(ग) पाठान्तरम्—'जानन्ति पशवो गन्धाद्वेदाज्जानन्ति पण्डिताः ।
चाराज्जानन्ति राजानश्चक्षुर्भ्यामितरेजनाः' ॥

## पश्यामि तन्मयमहो भुवनं किमेतत् ।

तां हेमचम्पकरुचिं मृगशावकाक्षीं पार्श्वे स्थितां च पुरतः परिवर्त्तमानाम् ।
पश्चात्तथा दशदिशासु परिस्फुरन्तीं पश्यामि तन्मयमहो भुवनं किमेतत् ॥६६॥

## पाणौ पानीयमानीय भूयो भूयो विमुञ्चति ।

पाणौ पानीयमानीय पिपासुरपि जानकी ।
शोणिते शोणितभ्रान्त्या भूयो भूयो विमुञ्चति (क) ॥६७॥

## पातकं किमतःपरम् ।

बालत्वे च मृता माता वृद्धत्वे च मृताः सुताः ।
यौवने च मृता भार्या पातकं किमतःपरम् (ख) ॥६८॥

## पात्रविशेषे न्यस्तं वित्तम् ।

पात्रविशेषे न्यस्तं गुणान्तरं भजति वित्तमाधातुः (ग) ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥६९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## पादमूले निपात्यते ।

अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा ।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥७०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## पादाभ्यां न स्पृशेदग्निम् ।

पादाभ्यां न स्पृशेदग्निं न गुरुं ब्राह्मणं तथा ।
न गां च न कुमारीं च न शिशुं न च देवताम् ॥७१॥

---

(क) शोणिते रक्तवर्णे पाणौ पानीयमानीय इत्यर्थः । अनेन श्लोकेन जानक्याः पाणेः रूपवर्णनं व्यज्यते ।

(ख) दृश्यताम्—'मनसा चिन्तितं कार्यम्' इति ।

(ग) पाठान्तरम्—'पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः' इति ।

पादाम्भोजे वरद ! भवतो भक्तिभावे प्रसीद ।

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्त्ते शमनसहजग्राहशङ्काकुले च ।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधाम—
न्पादाम्भोजे वरद ! भवतो भक्तिभावे प्रसीद ॥७२॥

—कुलशेखर—मुकुन्दमाला ।

पानीयं पानीयम् ।

पानीयं पानीयं शरदि वसन्ते च पानीयम् ।
नादेयं नादेयं शरदि वसन्ते च नादेयम् ॥७३॥

पानीयं प्राणिनां प्राणाः ।

पानीयं प्राणीनां प्राणाः पानीयं पावनं महत् ।
पानीयस्य प्रदानेन प्रीयतां मे जनार्दन ॥७४॥

पान्थ ! निद्रां जहीहि ।

यामिन्येषा गहनजलदैर्बद्धभीमान्धकारा
निद्रां यातो गृहपतिरसौ क्लेशितः कर्मदुःखैः ।
बाला चाहं मनसिजभयात्प्राप्तगाढप्रकम्पा
ग्रामश्चौरैरयमुपहतः पान्थ ! निद्रां जहीहि ॥७५॥

—कालिदास—शृङ्गारतिलकम् ।

पापात्मनां पापशतेन किं वा ।

गोमूत्रयोगेन पयो विनष्टं तक्रस्य गोमूत्रशतेन किं वा ।
अत्यल्पपापैर्विपदः शुचीनां पापात्मनां पापशतेन किं वा ॥७६॥

पापाय परपीडनम् ।

दृश्यताम्—'परोपकारः पुण्याय' इति ।

## पापं तापं च दैन्यञ्च ।

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च हन्ति सन्तो महाशयाः ॥७७॥

## पाषाणस्य कुतो विद्या ।

न विद्या कारणं पुंसां दैवमेवात्र कारणम् ।
पाषाणस्य कुतो विद्या केन देवत्वमाप्नुयात् ॥७८॥

## पिण्डे पिण्डे मतिर्भिन्ना ।

पिण्डे पिण्डे मतिर्भिन्ना कुण्डे कुण्डे नवं पयः ।
जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥७९॥
पिण्डे पिण्डे मतिर्भिन्ना तुण्डे तुण्डे सरस्वती ।
देशे देशे विभाषास्यान्नानारत्ना वसुन्धरा ॥८०॥

## पिण्डेष्वनास्था खलु भौतिकेषु ।

किमप्यहिंस्यस्तव चेन्मतोऽहं यशः शरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानं पिण्डेष्वनास्था खलु भौतिकेषु ॥८१॥
—कालिदास—रघुवंशम् ।

## पितुराज्ञा न लोपिता ।

तातेन कथितं पुत्र ! लेखं लिख ममाज्ञया ।
नतेन (क) लिखितो लेखः पितुराज्ञा न लोपिता ॥८२॥

## पितृपूर्वार्जिता भूमिर्दरिद्रादपि सुखावहा ।

पितृपूर्वार्जिता भूमिर्दरिद्रादपि सुखावहा ।
अपि स्वर्णमयी लङ्का न मे लक्ष्मण ! रोचते ॥८३॥

---

(क) नतेन=नम्रीभूतेन, (पक्षे) न तेन लिखितः ।

## पिपासितैः काव्यरसो न पीयते ।

## पिपीलिका नृत्यति वह्निमध्ये ।

कृपाबलेनैव चतुर्भुजस्य पङ्गुः समारोहति पर्वताग्रम् ।
मूकस्तथा गायति वेदराशिं पिपीलिका नृत्यति वह्निमध्ये ॥८४॥
अत्यन्तपट्वी रसमार्गणे का करोति किं भक्त्यभिवृद्धिकाले ।
हव्यं क्व वा देवगणा लभन्ते पिपीलिका नृत्यति वह्निमध्ये (क) ॥८५॥

## पिबन्ति मद्यं मदनीयमुत्तमम् ।

सुगन्धिनिःश्वासविकम्पितोत्पलं मनोहरं कामरतिप्रबोधकम् ।
निशासु हृष्टाः सह कामिभिःस्त्रियः पिबन्ति मद्यं मदनीयमुत्तमम् ॥८६॥
—कालिदास—ऋतुसंहारम् ।

## पिशुनता यद्यस्ति किं पातकैः ।

दृश्यताम्—'किं—किं—किम्' इति ।

## पुत्र आत्मा मनुष्यस्य ।

पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥८७॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## पुत्रव्याजमुपागतो रिपुरयम् ।

पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखितः
तद्दुःखादिकमर्जने तदनये तन्मूर्खतादुःखितः ।
जातश्चेत्सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः
पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥८८॥
—शान्तिशतकम् ।

---

(क) 'पिपीलिका नृत्यति वह्निमध्ये' इति समस्या।

## पुत्रहीनं गृहं शून्यम् ।

## पुत्रादपि धनभाजां भीतिः ।

दृश्यताम्—'अर्थमनर्थं भावय नित्यम्' । इति ।

## पुत्रादिच्छेत्पराजयम् ।

## पुत्राद्भवति तापसः ।

दृश्यताम्—'अपुत्रस्य गतिर्नास्ति' इति ।

## पुत्रे शिष्यवदाचरेत् ।

दृश्यताम्—'दोषा वाच्या गुरोरपि' इति ।

## पुत्रोऽप्यमित्रायते ।

## पुनरपि जननं पुनरपि मरणम् ।

पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् ।
इह संसारे खलु दुस्तारे कृपयापारे पाहि मुरारे ॥८९॥
—शङ्कराचार्य—मोहमुद्गरः ।

## पुनरपि बाल्यं कृतं जरया ।

वदनं दशनविहीनं वाचो न परिस्फुटा गता शक्तिः ।
अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥९०॥

## पुनरायाति याति च ।

दन्तिदन्तसमानं हि निःसृतं महतां वचः ।
कूर्मग्रीवेव नीचानां पुनरायाति याति च ॥९१॥

## पुनर्दरिद्रः पुनरेव पापी ।

कुपात्रदानाच्च भवेद्दरिद्रो दारिद्र्यदोषेण करोति पापम् ।
पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥९२॥

## पुनर्धनाढ्यः पुनरेव भोगी ।

सुपात्रदानाच्च भवेद्धनाढ्यो धनप्रभावेण करोति पुण्यम् ।
पुण्यप्रभावात्सुरलोकवासी पुनर्धनाढ्यः पुनरेव भोगी ॥६३॥

## पुनस्तीर्थमन्यत्किमस्ति ।

काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा
भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥६४॥

—शङ्कराचार्य—काशीपञ्चकम् ।

## पुराणानि विदुर्बुधाः ।

मद्वयं भद्वयञ्चैव ब्रत्रयं वचतुष्टयम् ।
अनाकूस्कपलिङ्गानि पुराणानि विदुर्बुधाः (क) ॥६५॥

## पुराणं पञ्चलक्षणम् ।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् (ख) ॥६६॥

---

(क) 'ब्राह्मं पाद्मं वैष्णवञ्च शैवं लैङ्गं सगारुडम् (वैनतेयम्) ।
नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ।
भविष्यं ब्रह्मवैवर्त्तं मार्कण्डेयं सवामनम् ।
वाराहं मात्स्य कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट्' ॥

—श्रीमद्भागवतम् ।

(ख) तथाहि श्रीमद्भागवते—'सर्गोऽस्याथ विसर्गश्च वृत्तिरक्षान्तराणि च ।
वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥
दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।
केचित्पञ्चविधं ब्रह्मन्महदल्पव्यवस्थया' ॥

## पुरुष एवेदं विश्वम् ।

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ! (क) ॥९७॥

—मुण्डकोपनिषद् ।

## पुरुषान्न परं किञ्चित् ।

दृश्यताम्—'इन्द्रियेभ्यः परा ह्यर्थाः' इति ।

## पुरुषो न च पौरुषम् ।

पुरुषः पौरुषं तावद्यावद्दैवं तु सन्मुखम् ।
विपरीतगते दैवे पुरुषो न च पौरुषम् ॥९८॥

## पुरुषः पञ्चलक्षणः ।

पात्रे त्यागी गुणे रागी संविभागी च बन्धुषु ।
शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः ॥९९॥

## पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।

पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥१००॥

—भगवद्गीता ।

---

(क) तथाहि—'सर्वं पुरुष एवेति युक्ते पुरुषसंज्ञिते ।
अप्युच्यते यतः श्रुत्या कथं स्याद्देहकः पुमान्' ॥

—अपरोक्षानुभूतिः ।

तथाहि श्रुतौ—'पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति' ॥

—ऋग्वेदसंहिता । मं० १० । सू० ९०

तथाहि श्रीमद्भागवते—'ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ।
सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ॥
तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ।
स्वधिष्ण्यं प्रतपन्प्राणो बहिश्च प्रतपत्यसौ' ॥

## पुर्यष्टकं सूक्ष्मशरीरमाहुः ।

वागादिपञ्च श्रवणादिपञ्च प्राणादिपञ्चाभ्रमुखानि पञ्च ।
बुद्ध्याद्यविद्यापि च कामकर्मणी पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥ १०१॥
—शङ्कराचार्य—विवेकचूडामणिः ।

## पुष्पाणि दुःखानि भवन्तु नाथ ।

नवं नवं मे व्यसनं भवेऽस्मिंस्त्वय्येव भक्तिं सुदृढीकरोतु ।
दिवश्च्युतानीव तव प्रसादात्पुष्पाणि दुःखानि भवन्तु नाथ ॥ १०२॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## पुष्पं पर्युषितं त्यजन्ति मधुपाः ।

दृश्यताम्—'कस्यास्ति को वल्लभः' इति ।

## पुस्तकस्था तु या विद्या ।

पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् (क) ॥ १०३॥
—चाणक्यशतकम् ।

## पुंसि क्षीणधने न बान्धवजनः ।

पुंसि क्षीणधने न बान्धवजनः पूर्वं यथा वर्त्तते
स्थित्या केवलयाश्रितः परिजनः स्वच्छन्दतां मुञ्चति ।
लोलत्वं सुहृदः प्रयान्ति वहुशः किं चापरैर्भाषितै—
र्भार्याया ह्यपि निश्चितं गतधने वादो मुहुः स्याद्भृशम् ॥ १०४॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## पूर्णं दर्शय मे रूपम् ।

दृष्टोऽसि दृश्यसे नैव त्वं लब्धोऽपि न लभ्यसे ।
पूर्णं दर्शय मे रूपं पूर्णब्रह्म सनातन ! ॥ १०५॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।

---

(क) पाठान्तरम्—'पुस्तकेषु च या विद्या परहस्तेषु यद्धनम् ।
संग्रामे च गृहे सैन्यं त्रयं पुसां विडम्बनम् ॥'
दृश्यताम्—'त्रयं पुसां विडम्बनम्' इति ।

## पूर्वायते जलद ! ते करुणा यदि स्यात् ।

उन्मूलिता हलधरेण पदाभिघातैः सञ्चूर्णिता तपनतापभरेण तप्ता ।
दावानलेन ननु दग्धदलापि दूर्वा पूर्वायते जलद ! ते करुणा यदि स्यात् ॥ १०६॥

## पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।

द्रष्टव्यताम्—'दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत्' इति ।

## पृथिव्यां त्रीणि रत्नानि ।

पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ १०७॥

## पेपीय्यतां हृदय रे ! भवतापशान्त्यै ।

किं कालकूटमिव कामरसं निपीय ज्वालावलीभिरनिशं परिदह्यसे त्वम् ।
श्रीकृष्णभक्तिरसपीयूषमेव तूर्णं पेपीय्यतां हृदय रे ! भवतापशान्त्यै (क) ॥ १०८॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## पौराणिकस्याशीर्वचनम् ।

वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता
दैत्येशो नखरैर्हतः फणिपतेर्लोकं बलिः प्रापितः ।
क्ष्माऽक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी
हिंसादोषवती धराप्ययवना पायात्स नारायणः ॥ १०९॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी

## प्रकृतिसिद्धमिदं हि महात्मनाम् ।

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ११०॥

—भर्तृहरि—नीतिशतकम् ।

---

(क) अत्र तृतीयपादे छन्दोभङ्गदोषः दृश्यते तथापि मूलग्रन्थमनुसृत्य यथा दृष्टं तथा लिखितम् ।

## प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।

प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ १११॥
—भगवद्गीता ।

## प्रकृतिं यान्ति भूतानि ।

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ११२॥
—भगवद्गीता ।

## प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥ ११३॥
—भगवद्गीता ।

## प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्त्तारं स पश्यति ॥ ११४॥
—भगवद्गीता ।

## प्रजा रक्षेत्पितेव हि ।

तस्करेभ्यो नियुक्तेभ्यो शत्रुभ्यो नृपवल्लभात् ।
नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥ ११५॥
—विष्णुशर्मा—हितोपदेशः ।

## प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने ।

तुष्टे सति न लाभाय रुष्टे नाशाय नैव च ।
प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने ॥ ११६॥

## प्रतप्तायासपिण्डवत् ।

स्वयमन्तर्बहिर्व्याप्य भासयन्निखिलं जगत् ।
ब्रह्म प्रकाशते वह्निप्रतप्तायासपिण्डवत् ॥ ११७॥
—शङ्कराचार्य—आत्मबोधः ।

प्रतिकुर्याद्यथोचितम् ।

तावद्भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतन्तु भयं वीक्ष्य प्रतिकुर्याद्यथोचितम् ॥११८॥

—विष्णुशर्मा—हितोपदेशः ।

प्रतिपत्पाठनाशिनी ।

प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ।

प्रतिमा स्वल्पबुद्धीनाम् ।

अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम् ।
प्रतिमा स्वल्पबुद्धीनां सर्वत्र समदर्शिनाम् ॥११९॥

प्रत्यक्षे गुरवः स्तुत्याः ।

प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः ।
कार्यान्ते दासिभृत्याश्च पुत्रो नैव मृताः स्त्रियः ॥१२०॥

प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ।

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवा—
न्रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः ।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थं कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥१२१॥

प्रबोधेऽसत्यवद्भवेत् ।

संसारः स्वप्नतुल्यो हि रागद्वेषादिसङ्कुलः ।
स्वकाले (क) सत्यवद्भाति प्रबोधेऽसत्यवद्भवेत् ॥१२२॥

—शङ्कराचार्य—आत्मबोधः ।

---

(क) स्वकाले=स्वप्नकाले ।

## प्रभावो नाधिगन्तव्यः ।

ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभावो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥१२३॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## प्रभावः प्रभवो हि सः ।

शाखामृगस्य शाखायाः शाखां गन्तु पराक्रमः ।
उल्लङ्घितो यदम्भोधिः प्रभावः प्रभवो हि सः ॥१२४॥

## प्रभुः पञ्चगुणो भवेत् ।

पात्रे त्यागी गुणे रागी भोगी पञ्चजनैः सह ।
भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् (क) ॥१२५॥

## प्रभूतवयसः पुंसो धियः पाकः प्रवर्त्तते ।

प्रभूतवयसः पुंसो धियः पाकः प्रवर्त्तते ।
जीर्णस्य चन्दनतरोरामोद उपजायते ॥१२६॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## प्रमदाः पतिवर्त्मगा इति ।

शशिना सह याति कौमुदी सहमेघेन तडित्प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥१२७॥
—कालिदास—कुमारसम्भवम् ।

## प्रयत्ने समके केचिदेव स्युः फलभागिनः ।

प्रयत्ने समके केचिदेव स्युः फलभागिनः ।
क्षीरोदमन्थनाद्देवैरमृतं प्रापि नासुरैः ॥१२८॥
—कुसुमदेव—दृष्टान्तशतकम् ।

---

(क) दृश्यताम्—'पुरुषः पञ्चलक्षणः' इति ।

## प्रयाति कान्तिं प्रमदाजनस्य ।

कर्णेषु योग्यं नवकर्णिकारं चलेषु नीलेष्वलकेष्वशोकम् ।
पुष्पञ्च फुल्लं नवमल्लिकायाः प्रयाति कान्तिं प्रमदाजनस्य ॥ १२९॥
—कालिदास—ऋतुसंहारम् ।

## प्रलयेऽपि न लीयते ।

काले विलीयते सर्वं जगत्स्थावरजङ्गमम् ।
समाहितात्मा गोविन्दे प्रलयेऽपि न लीयते ॥ १३०॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ।

दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां
द्रुतं दूरीकुर्वन्सकृदुपगतो दृष्टिसरणिम् ।
अपि द्राक् चाविद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ १३१॥
—श्रीजगन्नाथ कवि—गङ्गालहरी ।

## प्रविश हृदय ! तूर्णं सच्चिदानन्दसिन्धुम् ।

जरठतृणलघीयो जीवनं मानवानामचिररुचिविलोलान्कामभोगांश्च सर्वान् ।
गृहधनपरिवारान्स्वप्नरूपान्विदित्वा प्रविश हृदय ! तूर्णं सच्चिदानन्दसिन्धुम् ॥ १३२॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ।

## प्रसादमधिगच्छति ।

रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ।
प्रसादे सर्वदुःखानां हानिरस्योपजायते प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते(क)॥ १३३॥
—भगवद्गीता ।

## प्रस्थिते लग्नचिन्ता ।

---

(क) दृश्यताम्—'अशान्तस्य कुतः सुखम्' इति ।

## प्रहारेण धनञ्जयः ।

हविर्विना हरिर्याति विना पीठेन माधवः ।
कदन्नैः पुण्डरीकाक्षः प्रहारेण धनञ्जयः (क) ॥१३४॥

## प्राकृतं केन लङ्घ्यते ।

माता लक्ष्मीः पिता विष्णुः स्वयञ्च विषमायुधः ।
तथापि शम्भुना दग्धः प्राकृतं केन लङ्घ्यते ॥१३५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ।

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नश्छिन्नः पुनरपि पुनः स्वादुमानिक्षुदण्डः ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥१३६॥

## प्राणाश्च रक्षस्व हि मे मृगाक्षि ।

बालेऽबलारत्न ! दयार्द्रचित्ते ! प्राणेश्वरि ! श्रीमति ! सुप्रसन्ने ! ।
दासोऽस्मि ते सुन्दरि ! राजपुत्रि ! प्राणांश्च रक्षस्व हि मे मृगाक्षि ! ॥१३७॥

—विह्लण—विद्यासुन्दरम् ।

---

(क) किसी ब्राह्मण के चार जामाता थे। उनमें से ज्येष्ठ का नाम हरि, मध्यम का नाम माधव, तीसरे का नाम पुण्डरीकाक्ष और चौथे का नाम धनञ्जय था। ये चारों दामादों के श्वशुरालय में अनेक दिन वास करने के कारण इनके श्यालकगण असन्तुष्ट हो कर उन को दूर करने का उपाय सोचने लगे। अनन्तर एक दिन भोजन के समय हरि को घृत न देने से वह अपना अपमान समझ कर चल दिया। दूसरे दिन भोजन के समय आसन न मिलने के कारण दूसरे दामाद माधव ने प्रस्थान किया। और एक दिन तीसरे दामाद पुण्डरीकाक्ष को भोजन के निमित्त कदर्य अन्न दिया गया, इस कारण वह भी चला गया। अब रह गया केवल धनञ्जय जो किसी प्रकार से नहीं हटता था। उसे उसके श्यालकों ने एक दिन अच्छी रीति से प्रहार किया जिस से उसको भी अन्त में श्वशुरालय त्याग करना पड़ा।

हिन्दी में भी कहावत हैः—

'ससुराल सुखन की सार। जब रहै दिना दुइ चार॥
जो रहे चहे दुइ चार पखवार ? तो हाथ में खुरपी बगल में झार॥
ना ले खुरपी ना ले झार ? बरसे जूता माँझ कपार'॥

हास्यरसात्मकः श्लोकोऽयम्।

## प्राणाः प्राणा न भूपतेः ।

स ह्यमात्यः सदा श्रेयान्काकिर्नीं यः प्रवर्धयेत् ।
कोशः कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥१३८॥

—विष्णुशर्मा—हितोपदेशः ।

## प्राचीनकर्म बलवन्मुनयो वदन्ति ।

वैद्या वदन्ति कफपित्तमरुद्विकाराज्ज्योतिर्विदो ग्रहगतिं परिवर्तयन्ति ।
भूताभिषङ्ग इति भूतविदो वदन्ति प्राचीनकर्म बलवन्मुनयो वदन्ति ॥१३९॥

## प्राज्ञे शास्त्रं स्वयं याति विस्तारं बहुशक्तितः ।

जले तैलं खले गुह्यं पात्रे दानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं बहुशक्तितः ॥१४०॥

## प्राणदानात्परं दानम् ।

प्राणदानात्परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरं किञ्चिदस्तीह निश्चितम् ॥१४१॥

—महाभारतीयानुशासनपर्वणि ।

## प्रातः स्मरामि—प्रातर्भजामि—प्रातर्नमामि ।

## ( प्रभातीवन्दना )

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं सच्चित्सुखं परमहंसगतिं तुरीयम् ।
यत्स्वप्नजागरसुषुप्तमवैति नित्यं तद्ब्रह्मनिष्कलमहं न च भूतसङ्घः ॥१४२॥
प्रातर्भजामि मनसा वचसामगम्यं वाचो विभान्ति निखिला यदनुग्रहेण ।
यन्नेति नेति वचनैर्निगमा अवोचंस्तं देवदेवमखिलेश्वरमाहुरग्र्यम् ॥१४३॥
प्रातर्नमामि तमसः परमर्कवर्णं पूर्णं सनातनपदं पुरुषोत्तमाख्यम् ।
यस्मिन्निदं जगदशेषमशेषमूर्तौ रज्ज्वां भुजङ्गम इव प्रतिभासितं वै ॥१४४॥

नमस्ते सते ते जगत्कारणाय नमस्ते चिते सर्वलोकाश्रयाय ।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय नमो ब्रह्मणे व्यापिने शाश्वताय ॥१४५॥
त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्कारणं स्वप्रकाशम् ।
त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पम् ॥१४६॥

प्रातरारभ्य सायान्तं सायाह्नात्प्रातरन्ततः ।
यत्करोमिजगन्मातस्तदेवं पूजनं तव ॥१४७॥
देवेश ! चैतन्यमयादिदेव ! श्रीकान्त ! विष्णो ! भवदाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये ॥१४८॥

## प्राप्तकालो न जीवति

नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशकण्टकविद्धोऽपि प्राप्तकालो न जीवति ॥१४९॥

—घटकर्पर—नीतिसारम् ।

## प्राप्तेष्टः करिकेतनो यदि भवेत्किं कल्पभूमीरुहैः ।

दृश्यताम्—'किं—किं—किम्' इति ।

## प्राप्तं पदं शाम्भवम् ।

## प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।

आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ! ॥१५०॥
संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥१५१॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ! ॥१५२॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ।

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥१५३॥

—भर्तृहरि—नीतिशतकम् ।

## प्रायो नाम तपः प्रोक्तम् ।

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयोगात्प्रायश्चित्तं प्रकीर्त्तितम् ॥१५४॥

## प्रायो मतिः क्षीयते ।

दृश्यताम्—'प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते' इति ।

## प्रायो मूर्खः परिभवविधौ नाभिमानं तनोति ।

दृष्ट्वा यासां नयनसुभगं बङ्कवाराङ्गनानां
देशत्यागः परमकृतिभिः कृष्णसारैरकारि ।
तासामेव स्तनयुगजिता दन्तिनः सन्ति मत्ताः
प्रायो मूर्खः परिभवविधौ नाभिमानं तनोति ॥१५५॥

—कालिदास—शृङ्गारतिलकम् ।

## प्रायः श्वश्रूस्नुषयोर्न सौहृदं लोके ।

कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र ।
प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥१५६॥

## प्रियतमवदनेन पीयते कः ।

किमकरवमहं हरिर्महीध्रं स्वभुजबलेन गवां हितं विधित्सुः ।
प्रियतमवदनेन पीयते कः परिणतविम्वफलोपमः प्रियायाः(क) ॥१५७॥

—धर्मदास—विदग्धमुखमण्डनम् ।

---

(क) अत्रोत्तरम्—'अहं हरिः कृष्णः गवां पशूनां हितं विधित्सुः चिकीर्षुः स्वभुजबलेन निजबाहुबलेन महीध्रं पर्वतं गोवर्धनमिति यावत् किम् अकरवं कृतवान् ? धृतवानसीत्यर्थ इति प्रथमस्य । प्रियायाः कान्तायाः परिणतं परिपक्वं रक्तमिति भावः विम्बफलं तदुपमः तत्सदृशः कः प्रियतमस्य कान्तस्य वदनेन पीयते ? अधरः दशनच्छद इति द्वितीयस्य ।

## प्रियस्य कीदृशी कान्ता ।

अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये ।
प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् (क) ॥ १५८॥

—धर्मदास—विदग्धमुखमण्डनम् ।

## प्रियप्रीत्यै सासीदुदितललितालङ्कृतियुता ।

ह्रिया तिर्यग्ग्रीवा चरणकटिभङ्गी सुमधुरा
चलच्चिल्लीवल्लीदलितरतिनाथोर्ज्जितधनुः ।
प्रियप्रेमोल्लासोल्लसितललिता लालिततनुः
प्रियप्रीत्यै सासीदुदितललितालङ्कृतियुता ॥ १५९॥

—चैतन्यचरितामृते—गोविन्दलीलामृतम् ।

## प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ।

सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्त्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ॥ १६०॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## प्रियाविरहजं दुःखं नान्यो जानाति कश्चन ।

किं कुर्मः कस्य वा ब्रूमो रामो नास्तीह भूतले ।
प्रियाविरहजं दुःखं नान्यो जानाति कश्चन ॥ १६१॥

## प्रिये सीमाह्लादः ।

## प्रियः को नाम योषिताम् ।

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमम् ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ १६२॥

—भगवतो व्यासस्य ।

## प्रीणाति यः सुचरितैः पितरं स पुत्रः ।

दृश्यताम्—'एतत्त्रयं जगति पुण्यकृतो लभन्ते' इति ।

---

(क) अत्रोत्तरम्—'मदनवती'। प्रथमस्य मदनाख्यवृक्षपूर्णेत्यर्थः। द्वितीयस्य कामवती।

## प्रेमरज्जुकृतबन्धनमन्यत् ।

बन्धनानि यदि सन्ति बहूनि प्रेमरज्जुकृतबन्धनमन्यत् ।
दारुभेदनिपुणोऽपि षडङ्घ्रिर्निष्क्रियो भवति पङ्कजबद्धः ॥ १६३॥

## प्रेषितस्य कुतो मानः ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

---

# फ

## (स) फणिनमभिशेते पद्मया पद्मनाभः ।

विकसति नयनाभ्यां कैरवं पङ्कजं च
श्लथयति चरणाम्बु ब्रह्मचर्यं पयोधेः ।
उरसि लसति यस्य श्रेयसां संप्रदायः
स फणिनमभिशेते पद्मया पद्मनाभः (क) ॥ १॥

—अभिरामपशुपतेः ।

## फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम् ।

दृश्यताम्—'गुणायन्ते दोषाः सुजनवदने' इति ।

## फलति कपालं न भूपालः ।

आरोहतु गिरिशिखरं तरतु समुद्रं प्रयातु पातालम् ।
विधिलिखिताक्षरभालं फलति कपालं न भूपालः ॥२॥

---

(क) स पद्मनाभः पद्मया सह फणिनं शेषमभिशेते। यस्य नयनाभ्यां चन्द्रसूर्यलक्षणाभ्यां कैरवं पङ्कजं च विकसति, यस्य चरणाम्बु गङ्गा पयोधेर्ब्रह्मचर्यं श्लथयति दूरीकरोति, गङ्गायाः समुद्रपत्नीत्वात्, यस्योरसि श्रेयसां संप्रदायः कौस्तुभमणिर्लसति, एवंविधः पद्मनाभः फणिनमभिशेते। —सुभाषितरत्नभाण्डागारम् ।

## फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ।

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ ३ ॥
—कालिदास—रघुवंशम् ।

## फलान्येतानि देहिनाम् ।

रोगशोकपरीतापबन्धनव्यसनानि च ।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ ४ ॥
—विष्णुशर्मा—हितोपदेशः ।

## फलेन परिचीयते ।

एका भूरुभयोरैक्यमुभयोर्दलकाण्डयोः ।
शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥ ५ ॥
—हलायुध—धर्मविवेकः ।

## फलेन फलमादिशेत् ।

## फलं भाग्यानुसारतः ।

महतामाश्रयः पुंसां फलं भाग्यानुसारतः ।
ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभक्षकः (क) ॥ ६ ॥
पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ॥ ७ ॥

## फलं—फला—फलम् ।

आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः (ख) ।
ज्ञानमात्रफला विद्या दत्तभुक्तफलं धनम् ॥ ८ ॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) पाठान्तरम्—'कर्त्तव्योऽप्याश्रयः श्रेयान् फलं भाग्यानुसारतः ।
नीलकण्ठस्य कण्ठेऽपि वासुकिर्वायुभक्षकः' ॥

(ख) 'ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः इति पातञ्जलसूत्रम् ।

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥९॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि।

### फाल्गुने बालका इव ।

दृश्यताम्—'कलौ वेदान्तिनो भान्ति' इति ।

---

## ब

### बकवद्ध्यानमाचरेत् ।

दृश्यताम्—'अजवच्चर्वणं कुर्यात्' इति ।

### बकः परमदारुणः ।

राघव ! त्वं न जानासि बकः परमदारुणः ।
निर्जीवभक्षको गृध्रो बको जीवितभक्षकः ॥१॥

### बकः परमधार्मिकः ।

शनैः शनैः क्षिपेत्पादौ प्राणिनां वधशङ्कया ।
पश्य लक्ष्मण ! पम्पायां बकः परमधार्मिकः ॥२॥

### बध्नीयात्पूजयेच्च वा ।

न परस्यापराधेन परेषां दण्डमाचरेत् ।
आत्मनावगतं कृत्वा बध्नीयात्पूजयेच्च वा ॥३॥

—विष्णुशर्मा—हितोपदेशः।

## बन्धस्य हेतुर्मलिनं रजोगुणैः ।

तस्मान्मनः कारणमस्य जन्तोर्बन्धस्य मोक्षस्य च वा विधाने ।
बन्धस्य हेतुर्मलिनं रजोगुणैर्मोक्षस्य शुद्धं विरजस्तमस्कम् ॥४॥
—शङ्कराचार्य—विवेकचूडामणिः ।

## बलादुच्छेद्यारिपवश्च मोहममतासंकल्पवैरादयः ।

नित्यानित्यविचारणा प्रणयिनी वैराग्यमेकं सुहृ-
न्मित्राण्येव यमादयः शमदमप्रायाः सखायो मताः ।
मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षा
बलादुच्छेद्या रिपवश्च मोहममतासंकल्पवैरादयः ॥५॥

## बलाद्दैवेन नीयते ।

येन यत्रैव भोक्तव्यं सुखं वा दुःखमेव वा ।
स तत्र बद्ध्वा रज्ज्वेव बलाद्दैवेन नीयते (क) ॥६॥

## बली बलं वेत्ति न वेत्ति निर्बलः ।

दृश्यताम्—'गुणी गुणं वेत्ति न वेत्ति निर्गुणः' इति ।

## बलीयसी केवलमीश्वरेच्छा ।

स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः ।
तथापि भिक्षाटनमेव शम्भोर्बलीयसी केवलमीश्वरेच्छा ॥७॥
भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदी गन्धफलीमजिघ्रत् ।
सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥८॥
वह्नौ विशुद्धामपि जानकीं तां जहौ वनान्ते किल रामचन्द्रः ।
सा किं न शुद्धा स च किं न वेत्ता बलीयसी केवलमीश्वरेच्छा ॥९॥

## बले रिपुभयम् ।

---

(क) दृश्यताम्—'यत्रस्थं तत्र नीयते' इति ।
तथाहि भाषायाम्:—
'तुलसी जस भवितव्यता तैसी मिलै सहाय ।
आपु न आवे ताहि पै ताहि तहां लै जाय' ॥

## बलेन किं यश्च रिपून्न बाधते ।

दृश्यताम्—'किमात्मना यो न जितेन्द्रियो भवेत्' इति ।

## बलं—बलं—बलम् ।

दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ १० ॥

—चाणक्यशतकम् ।

## बलं पञ्चविधं नित्यम् ।

बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ११ ॥
अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभं तु बलमाहुर्मनीषिणः ॥ १२ ॥
यत्त्वस्य सहजं राजन् ! पितृपैतामहं बलम् ।
अभिजातस्य नाम चतुर्थं बलं स्मृतम् ॥ १३ ॥
येन त्वेतानि सर्वाणि संगृहीतानि भारत ! ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ १४ ॥

—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## बहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः ।

लतामूले लीनो हरिणपरिहीनो हिमकरो
गलत्ताराकारा पतति जलधारा कुवलयात् ।
धुनीते बन्धूकं तिलकुसुमजन्मापि पवने
बहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः (क) ॥ १५ ॥

## बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ।

दृश्यताम्—'धिक्—धिक्—धिक्' इति ।

---

(क) वियोगिन्या अवस्थावर्णनम् ।

## बहुरत्ना वसुन्धरा ।

दाने तपसि शौर्ये वा विज्ञाने विनये नये ।
विस्मयो न हि कर्त्तव्यो बहुरत्ना वसुन्धरा (क) ॥ १६॥

## बहुव्रीहिरहं राजन् ।

अहं च त्वं च राजेन्द्र ! लोकनाथावुभावपि ।
बहुव्रीहिरहं राजन् ! षष्ठीतत्पुरुषो भवान् (ख) ॥ १७॥

## बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १८॥
—भगवद्गीता ।

## बह्वारम्भे लघुक्रिया ।

अजायुद्धमृषिश्राद्धे प्रभाते मेघडम्बरे ।
दम्पत्योः कलहे चैव बह्वारम्भे लघुक्रिया (ग) ॥ १९॥

## बाधते दिग्भ्रमादिव ।

तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा ।
अहं ममेति चाज्ञानं बाधते दिग्भ्रमादिव ॥ २०॥
—शङ्कराचार्य—आत्मबोधः ।

## बान्धवाः—बान्धवाः—बान्धवाः ।

पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणाः वदेबान्धवाः ॥ २१॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) दृश्यताम्—'भाग्यहीना न पश्यन्ति' इति ।
(ख) (बहुव्रीहि पक्षे) लोका जना नाथाः स्वामिनो यस्येवंविधोऽहम् याचकत्वात्, (षष्ठीतत्पुरुष पक्षे) लोकानां जनानां नाथ एवंविधस्त्वम्, राजत्वेन पालकत्वात् । दृश्यताम्—'येनाहं स्यां बहुव्रीहिः' इति ।
(ग) पाठान्तरम्—'अजायुद्धमृषिश्राद्धं प्रभाते मेघडम्बरम् ।
दम्पत्योः कलहश्चैव परिणामे न किञ्चन' ॥

## बालादपि गृहीतव्यम् ।

बालादपि गृहीतव्यं युक्तमुक्तं मनीषिभिः ।
रवेरविषये किं न दीपस्य प्रकाशनम् ॥२२॥

—विष्णुशर्मा—हितोपदेशः ।

## बालानां रोदनं बलम् ।

दृश्यताम्—'बलं—बलं—बलम्' इति ।

## बालं मुकुन्दं मनसा स्मरामि ।

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥२३॥

## बाहुसहस्रार्जुनः पिशुनः ।

परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः ।
सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥२४॥

## बुद्धिः कर्मानुसारिणी ।

किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मणा ।
प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥२५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥२६॥

—भर्तृहरि—नीतिशतकम् ।

## बुद्धिनाशात्प्रणश्यति ।

दृश्यताम्—'ध्यायतो विषयान्पुंसः' इति ।

## बुद्धिर्यस्य बलं तस्य ।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥२७॥

—विष्णुशर्मा—हितोपदेशः ।

## बुद्धेरात्मा महान्परः ।

दृश्यताम्—'इन्द्रियेभ्यः परा ह्यर्थाः' इति ।

## बुधे गुरौ पश्चिमकार्यसिद्धी ।

दृश्यताम्—'अङ्गारपूर्वे गमने च लाभः' इति ।

## बुभुक्षिता नैव तृणं चरन्ति ।

वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता न नीचकर्माणि समाचरन्ति ॥२८॥

## बुभुक्षितैर्व्याकरणं न भुज्यते ।

बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते ।
नच्छन्दसा केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फला गुणाः ॥२९॥

## बुभुक्षितः किं द्विकरेण भुङ्क्ते ।

ज्योत्स्ना दिवं गच्छति वाञ्छितस्य सिद्धिर्भवेत्कर्मबलेन पुंसाम् ।
पुनः पुनर्वाक्यमिदं सुलब्धं बुभुक्षितः किं द्विकरेण भुङ्क्ते ? ॥३०॥
—विह्लण—विद्यासुन्दरम् ।

जागर्ति लोको ज्वलति प्रदीपः सखीजनः पश्यति कौतुकं मे ।
मुहूर्त्तमेकं कुरु कान्त ! धैर्यं बुभुक्षितः किं द्विकरेण भुङ्क्ते ? ॥३१॥

## बुभुक्षितः किं न करोति पापम् ।

त्यजेत्क्षुधार्त्ता महिलां सपुत्रं खादेत्क्षुधार्त्ता भुजगी स्वमण्डम् ।
बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥३२॥
—विष्णुशर्मा—हितोपदेशः ।

## बुभुक्षुरपि केशरी न खलु मूषिकं धावति ।

स्वपौरुषमहायशाः समयदोषदुःस्थोऽपि सन्ननल्पविषयाशयो लघुषु नेहते कर्मसु ।
महीधरसहोदरद्विरदयूथविद्रावणो बुभुक्षुरपि केशरी न खलु मूषिकं धावति ॥३३॥

## बोधे बोधे भासते चन्द्रचूडः ।

मार्गे मार्गे निर्मलं ब्रह्मवृन्दं वृन्दे वृन्दे तत्त्वचिन्तानुवादः ।
वादे वादे जायते तत्त्वबोधः बोधे बोधे भासते चन्द्रचूडः ॥३४॥

## ब्रह्म जानाति ब्राह्मणः ।

जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते ।
वेदाभ्यासी भवेद्विप्रः ब्रह्म जानाति ब्राह्मणः (क) ॥३५॥

## ब्रह्म सत्यं जगन्मिथ्या ।

ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ।
इदमेव तु सच्छास्त्रमिति वेदान्तडिण्डिमः ॥३६॥

—शङ्कराचार्य—ब्रह्मनामावलीमाला ।

## ब्रह्मण्यासक्तचित्ता भवत ।

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री—
र्थाः सङ्कल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः ।
कण्ठाश्लेषोपगूढं तदपि न चिरं यत्प्रियाभिः प्रणीतं (ख)
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरन्तः ॥३७॥

—भर्तृहरि—वैराग्यशतकम् ।

## ब्रह्मचर्यफलं तपः ।

दृश्यताम्—'फलं—फला—फलम्' इति ।

## ब्रह्मचारी च निर्धनः ।

---

(क) 'जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते' ॥

(ख) प्रियाभिः कान्ताभिः प्रणीतं कृतं यत कण्ठाश्लेषेण उपगूढम् आलिङ्गनं तदपि अतिसुखकर-मपीति भावः न चिरं न दीर्घकालस्थायीत्यर्थः ।

### ब्रह्मत्वञ्च तथा भवेत् ।

सुवर्णाज्जायमानस्य सुवर्णत्वञ्च शाश्वतम् ।
ब्रह्मणो जायमानस्य ब्रह्मत्वञ्च तथा भवेत् ॥३८॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

### ब्रह्मद्वेषं न कारयेत् ।

दृश्यताम्—'न—न—न—न' इति ।

### ब्रह्मविद्ब्रह्मणि स्थितः ।

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥३९॥

—भगवद्गीता ।

### ब्रह्मवृत्या हि ब्रह्मत्वम् ।

दृश्यताम्—'तथा पूर्णत्वमभ्यसेत्' इति ।

### ब्रह्मसरः किं नावगाहसे ।

संसारमृगतृष्णां त्वं मनो ! धावसि किं मुधा ।
अनाविलमिदं ब्रह्मसरः किं नावगाहसे ॥४०॥

—शान्तिशतकम् ।

### ब्रह्महाऽपि नरः पूज्यः ।

दृश्यताम्—'निर्धनः परिभूयते' इति ।

### ब्रह्मात्मैकत्वबोधेन मोक्षः ।

न योगेन न सांख्येन कर्मणा नो न विद्यया ।
ब्रह्मात्मैकत्वबोधेन मोक्षः सिध्यति नान्यथा ॥४१॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## ब्रह्मैव तेन गन्तव्यम् ।

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना (क) ॥४२॥

—भगवद्गीता।

## ब्रह्मैव सर्वमपरं न च किञ्चिदस्ति ।

ब्रह्मैव सर्वमपरं न च किञ्चिदस्ति तस्मान्न मे सखि ! परापरभेदबुद्धिः ।
जारे यथा गृहपतौ नु तथा रतिर्मे मूढाः किमर्थमसतीति कदर्थयन्ति (ख) ॥४३॥

—भानुदत्तमिश्र—रसमञ्जरी।

## ब्रह्मैवेदं विश्वमित्येव वाणी ।

ब्रह्मैवेदं विश्वमित्येव वाणी श्रौती ब्रूतेऽथर्वनिष्ठा वरिष्ठा ।
तस्मादेतद्ब्रह्ममात्रं हि विश्वं नाधिष्ठानाद्भिन्नतारोपितस्य ॥४४॥

—शङ्कराचार्य—विवेकचूडामणिः।

---

(क) ब्रह्मार्पणं किम् ?

'ब्रह्मणा दीयते देयं ब्रह्मणे सम्प्रदीयते।
ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥१॥
नाहं कर्त्ता सर्वमेतद्ब्रह्मैव कुरुते तथा।
एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥२॥
प्रीणाति भगवानीशः कर्मणानेन शाश्वतः।
करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् ॥३॥
यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे।
कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम्' ॥४॥

—कूर्मपुराणम्।

अर्थात् जो कुछ मिलता है वह मुझे ब्रह्म ही देता है, मैं भी ब्रह्म को सम्प्रदान करता हूँ; मैं जो कुछ सम्प्रदान करता हूँ वह सब ब्रह्म है। इस प्रकार के ज्ञान को 'ब्रह्मार्पण' कहते हैं। मैं कुछ भी नहीं करता हूँ, ब्रह्म सब करता है, इस प्रकार के ज्ञान को तत्त्वदर्शी ऋषिगण 'ब्रह्मार्पण' कहते हैं। इस कर्म से वही शाश्वत भगवान् ईश्वर प्रसन्न हो, सदा इस प्रकार की बुद्धि से कर्म करने को 'ब्रह्मार्पण' कहते हैं। सकल कर्मफलों को ब्रह्म को समर्पण करने को सर्वोत्तम ब्रह्मार्पण कहते हैं।

(ख) पाठान्तरम्—'ब्रह्मैव सर्वमखिलं न हि किञ्चिदन्यत्तस्मान्न मे सखि ! परापरभेदबुद्धिः।
जारे तथा निजवरे सदृशोऽनुरागो व्यर्थं किमसतीति कदर्थयन्ति' ॥

—सुभाषित।

## ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ।

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् (क) ॥४५॥

—मुण्डकोपनिषद् ।

## ब्राह्मणो भोजनप्रियः ।

अलङ्कारप्रियो विष्णुर्जलधाराप्रियः शिवः ।
नमस्कारप्रियो भानुर्ब्राह्मणो भोजनप्रियः ॥४६॥

## ब्राह्मीव दौर्जनी संसद्बन्दनीया समेखला ।

अक्षमालापवृत्तिज्ञा कुशासनपरिग्रहा ।
ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला (ख) ॥४७॥

---

# भ

## भक्तिरेव न जहातु माम् ।

गेहिनी च तनयो जहातु मां यातु यातु विभवोऽथ बान्धवः ।
हे मुकुन्द ! तव पादपङ्कजे भक्तिरेव न जहातु माम् ॥१॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) तथाहि भगवद्गीतायाम्—

'नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्याऽमितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः' ।

(ख) अक्षमा य आलापास्तेषां वृत्तिज्ञाः, (पक्षे) अक्षमाला जपमाला तस्या अपवृत्तिर्भ्रमणं जानातीति सा । कुत्सितं यच्छाशनं शिक्षा तस्य परिग्रहोऽवलम्बो यस्याः सा; (पक्षे) कुशासनं दर्भासनं तत्परिग्रहः स्वीकारो यस्याः सा । समे साधौ खला; (पक्षे ) मेखलया सहिता । दुर्जननिन्देति श्लोकेन ध्वन्यते ।

—सुभाषितरत्नभाण्डागारम् ।

## भक्तिश्चेन्नवलक्षणा ।

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥२॥

—श्रीमद्भागवतम् ।

## भक्तिहीना हि या बुद्धिः ।

भक्तिहीना हि या बुद्धिः शास्त्रमात्रानुशीलनी ।
परमार्थं न सा वेत्ति दर्वी पाकरसं यथा (क) ॥३॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## भक्तिहीने तथा नरे ।

पाषाणे पतितं बीजं यथा नैव प्ररोहति ।
न फलत्युपदेशोऽपि भक्तिहीने तथा नरे ॥४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## भक्तो भावेन पश्यति ।

सर्वेषां हृदयस्थं तमन्तर्यामिनमीश्वरम् ।
नैव पश्यति मोहान्धो भक्तो भावेन पश्यति ॥५॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## भक्ष्यभक्षकयोः प्रीतिः ।

भक्ष्यभक्षकयोःप्रीतिर्विपत्तेः कारणं मतम् ।
शृगालात्पाशबद्धोऽसौ मृगः काकेन रक्षितः ॥६॥

—विष्णुशर्मा—हितोपदेशः

## भक्ष्यमाणो निरादायः सुमेरुरपि हीयते ।

दृश्यताम्—'अर्थानामर्जनं कार्यम्' इति ।

---

(क) दृश्यताम्—'दर्वी पाकरसानिव' इति ।

## भगवति भिक्षे ! नमस्तुभ्यम् ।

प्रतिदिनमयत्नसुलभे ! भिक्षुकजननि ! साधुजनकल्पलते ! ।
नृपनमननरकतारिणि ! भगवति भिक्षे ! नमस्तुभ्यम् ॥७॥

## भगवान्भूततां गतः ।

चक्रः सेव्यो नृपः सेव्यो नो सेव्यः केवलो नृपः ।
अहो चक्रस्य माहात्म्याद्भगवान्भूततां गतः (क) ॥८॥

## भजेद्भ्रमरकीटवत् ।

जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत् ।
सच्चिदानन्दरूपत्वं भजेद्भ्रमरकीटवत् (ख) ॥९॥

—शङ्कराचार्य—आत्मबोधः ।

---

(क) किसी देश में भगवान् नामा कोई पण्डित वास करता था। वह विद्वत्ता के कारण राजा का अतिशय प्रीतिपात्र हो गया था। आमात्यगण यह देख भगवान् से द्वेष रखते थे और किस प्रकार से उसको दूर करना होगा सर्वदा इसी विषय में विचार किया करते थे। एक समय उन सबों ने चक्रान्त कर द्वारपाल से कह दिया कि राजा का आदेश है कि भगवान् को घर में घुसने न देना। अब राजा ने जब भगवान् को नहीं देखा तो उसका चित्त चञ्चल हो गया और उसने अपने सभासदों से उसकी वार्त्ता पूछी। तब सबों ने एकवाक्य से कहा उसका तो देहान्त हो गया। राजवैद्य ने भी इसकी साक्षी दी। राजा ने बड़ा शोक प्रकाश किया। इसके कुछ दिन पीछे एक दिन राजा जब नगरभ्रमण करने को निकला तब भगवान् ने उससे मिलने की इच्छा की। परन्तु राजा के अनेक अनुचरों की भीड़ को भेद कर वह उस तक पहुँच न सका। तब वह एक वृक्ष पर चढ़ कर चिल्लाने लगा "हे महाराज ! मैं वही भगवान् पण्डित हूँ"। राजा ने यह सुनकर ज्यों ही अपनी दृष्टि डाली त्यों ही उसके पारिषद्वर्ग बोल उठे "महाराज ! भगवान् पण्डित मर कर भूतयोनि को प्राप्त हुआ है। यह देखिये वह वृक्ष पर बैठ कर आपको बुला रहा है। अतएव शीघ्र इस स्थान को त्याग दीजिये"। राजा इस वाक्य पर विश्वास कर दूसरे मार्ग से चला गया। तब भगवान् पण्डित बोला "केवल राजसेवा ही से कोई फल नहीं होता है। इसके साथ ही साथ चक्र की भी सेवा करना उचित है। अहो ! आज इस चक्र के माहात्म्य से भगवान् भूत हो गया"।

पाठान्तरम्—'चक्रः सेव्यो नृपः सेव्यो नो सेव्यः केवलो नृपः।
चक्रवक्रप्रभावेण भैरवो भूतनायकः' ॥
'पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः' ।

(ख) जीवन्मुक्त इति। जीवत एव मुक्तिः अविद्याबन्धनभ्रंश इति यावत् यस्य तथाभूतो जनः तद्विद्वान् तत्त्ववित् सन् पूर्वोपाधिगुणान् अविद्याजनितान् भावानित्यर्थः पूर्वभुक्तान् कमलादींश्च भ्रमरकीटवत् भृङ्ग इव त्यजेत् भ्रमरो यथा पूर्वभुक्तं मधुमत्कमलादि परिणामे यदा मधुरहितं पश्यति तदा तत् त्यजति तथा जनः पूर्वभुक्तं संसारसुखम् अविद्याविगमात् यदा हेयमवबुध्यते तदा तत् त्यजेदिति भावः। ततश्च सच्चिदानन्दरूपत्वं ब्रह्मभावं भजेत् लभेत्।

—जीवानन्द विद्यासागर।

## भयमर्थवतां नित्यम् ।

राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १० ॥

—विष्णुशर्मा—हितोपदेशः ।

## भये सीमा मृत्युः ।

## भर्त्तव्या मनुरब्रवीत् ।

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत् ॥ ११ ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## भर्त्तारं का न पूजयेत् ।

मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य च दातारं भर्त्तारं का न पूजयेत् (क) ॥ १२ ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## भर्त्तुराज्ञा न लङ्घिता ।

कान्ते ! धावय मे पादाविति भर्त्रा निवेदिता ।
न तया धावितौ पादौ भर्त्तुराज्ञा न लङ्घिता (ख) ॥ १३ ॥

## भव पञ्चतपा जीव ।

दृश्यताम्—'असिधाराव्रतमिदम्' इति ।

## भव मृत्युञ्जयः सद्यः ।

सानन्दं पिब रे जीव ! कृष्णभक्तिरसामृतम् ।
भव मृत्युञ्जयः सद्यः कृतान्तात्किमु ते भयम् ॥ १४ ॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) 'भर्त्तारं का न शोचति' इति पाठान्तरम् । वाल्मीकिमुनेः । करुणारसात्मकः श्लोकोऽयम् ।
(ख) नतया=नम्रीभूतेन (पक्षे) न तया=न तया कान्तया धावितौ ।

## भवति भूरिपुण्यैर्नरः ।

परद्रविणनिस्पृहः परकलत्रनिष्कौतुकः परप्रणयवत्सलः परनिकारवद्धक्षमः ।
परस्तुतिविशारदः परगुणापवादोज्झितः परार्त्तिहरणोद्यतो भवति भूरिपुण्यैर्नरः ॥ १५॥

—क्षेमेन्द्रस्य ।

## भवति मरणं किन्तु सम्भावितानाम् ।

साध्वीस्त्रीणां दयितविरहे मानिनां मानभङ्गे
सल्लोकानामपि जनरवे निग्रहे पण्डितानाम् ।
अन्योद्रेके कुटिलमनसां निर्गुणानां विदेशे
भृत्याभावे भवति मरणं किन्तु सम्भावितानाम् ॥ १६॥

—वररुचि—नीतिरत्नम् ।

## भवति विज्ञतमः क्रमशो जनः ।

दृश्यताम्—'इति विधिर्विदधे रमणीमुखम्' इति ।

## भवति शरणमेको विष्णुपोतो नराणाम् ।

भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम् ।
विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ १७॥
रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गकानाम् ।
शरणमशरणानामेक एवातुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥ १८॥

—कुलशेखर—मुकुन्दमाला ।

## भवति हृदयहारी कोऽपि कस्यापि हेतुः ।

भवति हृदयहारी कोऽपि कस्यापि हेतु—
र्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयितवनान्ते कोकिलारावरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ १९॥

## भवन्ति नम्रास्तरवः फलोद्गमैः ।

## भवन्ति योग्या अयोग्याश्च

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥२०॥

—विष्णुशर्मा—हितोपदेशः ।

## भवान्यत्र करप्रदः ।

तव तन्वि ! कुचावेतौ नियतौ चक्रवर्त्तिनौ ।
आसमुद्रकरग्राही भवान्यत्र करप्रदः (क) ॥२१॥

---

(क) इस श्लोक के विषय में जो किंवदन्ती है वह यह है:—

कालिदास की आराधना से प्रसन्न हो कर सरस्वती देवी उनके सन्मुख प्रगट हुईं। तब कालिदास ने अत्यन्त भक्तिपूर्वक सरस्वती देवी को बारम्बार प्रणाम और प्रदक्षिणा करके उनका वर्णन किया। यह वर्णन आराध्यदेवता का जैसा होना उचित था उसके अनुसार नहीं हुआ। इस कारण सरस्वती देवी असन्तुष्ट हो कर बोलीं "तुमने सामान्य नायिका के समान मेरा वर्णन करके मेरा अपमान किया। इस अपराध के कारण तुम्हारी मृत्यु नायिका के हाथ होगी"।

राजा विक्रमादित्य ने एक वारवनिता रक्खी थी। राजा की कृपा से उस वारवनिता के सुख, सम्पत्ति और आधिपत्य की सीमा न थी। कालिदास उस वारवनिता के प्रीतिपात्र थे। प्रति दिन छिप कर उसके भवन में जाया करते थे। एक दिन कालिदास आमोद-प्रमोद कर रहे थे कि इतने में राजा उस वारवनिता के घर पहुँचे। उनके आगमन की वार्त्ता सुन, कालिदास और वारवनिता दोनों भीत और चकित हो अस्तव्यस्त हुए। जब और उपाय न सूझा तब कालिदास पार्श्ववर्त्ती घर में जाकर छिप रहे। कुछ समय व्यतीत होने पर, राजा वारवनिता के निकट पहुँचे और दोनों एकासन पर बैठ इष्टालाप करने लगे। राजा ने वारवनिता के स्तन पर हाथ रख कर कहा—

'तव तन्वि ! कुचावेतौ नियतं चक्रवर्त्तिनौ' ।

राजा ने स्तन का वर्णन किया उसे सुनते ही कालिदास वाह्यज्ञानशून्य हो कर उस वर्णन को समर्थन करते हुए बोल उठे—

'आसमुद्रकरग्राही भवान्यत्र करप्रदः' ।

राजा कालिदास का स्वर सुनते ही चकित और लज्जित हुए, और इस स्थान में भी कालिदास की गति है यह समझ ईर्ष्यावश हो कर उस वारवनिता पर अत्यन्त रुष्ट और असन्तुष्ट हुए, और "आज से मैंने तुम्हारा सङ्ग त्याग दिया" यह कह कर चले गए। कालिदास की निर्बुद्धिता और अविमृष्यकारिता के कारण मैं सदा के लिए राजप्रसाद से वञ्चित हुई यह सोच क्रोधान्ध और उन्मत्त हो कर उस वारवनिता ने उसी मुहूर्त्त अपने हाथ से कालिदास का सिर काट लिया। इस प्रकार से सरस्वती देवी का शाप फलीभूत हुआ।

## भवानेवावलम्बनम् ।

नदेभ्योऽपि ह्रदेभ्योऽपि पिबन्त्यन्ये सदा पयः ।
चातकस्य तु जीमूत ! भवानेवावलम्बनम् ॥२२॥

—पूर्वचातकाष्टकम् ।

## भवितव्यं भवत्येव ।

भवितव्यं भवत्येव नारिकेलफलाम्बुवत् ।
गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत् (क) ॥२३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## भविष्यति प्रार्थितदुर्लभः कथम् ।

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥२४॥

—कालिदास—कुमारसम्भवम् ।

## भवे भवे तत्र रतिर्ममास्तु ।

किमस्ति मे नास्ति च किं न जाने किमर्थये त्वां न हि वेद्मि देव ! ।
जाने परं त्वच्चरणारविन्दं भवे भवे तत्र रतिर्ममास्तु ॥२५॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## भवे भवे मेऽस्तु तव प्रसादात् ।

न पुत्रदारान्न गृहान्न बन्धून्याचे न चोच्चैः कुलवित्तमानान् ।
भक्तिर्हरे त्वच्चरणारविन्दे भवे भवे मेऽस्तु तव प्रसादात् ॥२६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) कपित्थान्तर्गतः कीटो गज इत्यभिधीयते ।
दृश्यताम्—'कर्मणामीदृशी गतिः' इति ।

## भवेच्छ्मशानमुद्यानम् ।

जीयते भूगतोऽप्यात्मा कालेनात्मापि स्वर्गतः (क) ।
भवेच्छ्मशानमुद्यानमुद्यानञ्च श्मशानभम् ॥२७॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## भये सीमा मृत्युः ।

## भयं—भयं—भयम् ।

पादपानां भयं वातात्पद्मानां शिशिराद्भयम् ।
पर्वतानां भयं वज्रात्साधूनां दुर्जनाद्भयम् ॥२८॥

—चाणक्यशतकम् ।

## भस्मसात्कुरुते तथा ।

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥२९॥

—भगवद्गीता ।

## भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।

दृश्यताम्—'ऋणं कृत्वा घृतं पिबेत् इति ।'

## भागीरथीतीरसमाश्रितानाम् ।

रवेः कवेः किं समरस्य सारं ? कृषेर्भयं किं किमुशन्ति भृङ्गाः ? ।
सदा भयं चाप्यभयञ्च केषां ? भागीरथीतीरसमाश्रितानाम् (ख) ॥३०॥

—कविभट्ट—पद्यसंग्रहः ।

## भाग्यवन्तं प्रसूयेथा ।

---

(क) भूगतः पृथिवीस्थोऽपि आत्मा जीयते शत्रुभिः पराभूयते। कालेन स आत्मापि स्वर्गतः स्वर्गस्थः भवतीति शेषः।

(ख) भाः=कान्तिः, गीः=वाणी, रथी=योद्धा, इतिः=अनावृष्ट्यादिः, भृङ्गा रसं उशन्ति वाञ्छन्ति, भयं च केषां? आश्रितानां, अभयं च केषां? भागीरथीतीरसमाश्रितानाम्। चतुर्थपादस्थपदैः श्लोकस्योत्तरम्।

## भाग्यहीना न पश्यन्ति ।

पदे पदे च रत्नानि योजने रसकूपिका ।
भाग्यहीना न पश्यन्ति बहुरत्ना वसुन्धरा ॥३१॥

## भाग्यानि पूर्वतपसा किल सञ्चितानि ।

दृश्यताम्—'काले फलन्ति पुरुषस्य यथैव वृक्षाः' इति ।

## भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ।

आहारे वडवानलश्च शयने यः कुम्भकर्णायते
संदेशे बधिरः पलायनविधौ सिंहः शृगालो रणे ।
अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने
भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥३२॥

## भाग्यं फलति सर्वत्र ।

भाग्यं फलति सर्वत्र न विद्या न च पौरुषम् ।
समुद्रमन्थने लेभे हरिर्लक्ष्मीं हरो विषम् ॥३३॥

## भारते सारमुद्योगम् ।

भारते सारमुद्योगं तत्रापि विदुरोक्तयः ।
सनत्सुजातं तत्रापि तत्र श्लोकचतुष्टयम् (क) ॥३४॥

---

(क) 'श्लोकचतुष्टयम्' यथा—
'उभे सत्ये क्षत्रियैतस्य विद्धि मोहान्मृत्युः सम्मतोऽयं कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि तथाप्रमादममृतत्वं ब्रवीमि ॥४॥
प्रमादाद्वै असुराः पराभवन्नप्रमादाद्ब्रह्मभूता भवन्ति ।
नैव मृत्युर्व्याघ्र इवात्ति जन्तून्न ह्यस्य रूपमुपलभ्यते हि ॥५॥
यमं त्वेके मृत्युमतोऽन्यमाहुरात्मावसन्नममृतं ब्रह्मचर्यम् ।
पितृलोके राज्यमनुशास्ति देवः शिवः शिवानामशिवोऽशिवानाम् ॥६॥
अस्यादेशान्निःसरते नराणां क्रोधः प्रमादो लोभरूपश्च मृत्युः ।
अहंगते नैव चरन्विमार्गान्न चात्मनो योगमुपैति कश्चित्' ॥७॥
—महाभारते उद्योगपर्वणि अध्याय ४३ श्लोकाः ४—७ ।

एते चत्वारो ब्रह्मविद्या-वेदविद्या-अमृत-मृत्युप्रकाशकाः । एषां विषदार्थौ विद्यावाचस्पति पण्डितमधुसूदनविरचितब्रह्मसमन्वयादिग्रन्थेषु द्रष्टव्यः ।

विदुरोक्तयश्च यत्र यत्रास्मिन् ग्रन्थे सन्निवेशितास्तत्र तत्र दृश्यताम् ।

—रु० ना० घोष ।

**भारतं पञ्चमो वेदः ।**

दृश्यताम्—'जामाता दशमो ग्रहः' इति ।

**भार्या बिभ्यति तस्मिन्काये ।**

यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे ।
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये ॥३५॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

**भार्या मित्रं गृहेषु च ।**

**भार्या रूपवती शत्रुः ।**

दृश्यताम्—'ऋणकर्त्ता पिता शत्रुः' इति ।

**भार्यासमं नास्ति शरीरतोषणम् ।**

**भालस्थलीं किमु करः समुपाजगाम ।**

गन्तुं प्रिये ! वदति निःश्वसितं न दीर्घमासीन्न वा नयनयोर्जलमाविरासीत् ।
आयुर्लिपिं पठितुमेणीदृशः परन्तु भालस्थलीं किमु करः समुपाजगाम (क) ? ॥३६॥

—भानुदत्त मिश्र—रसमञ्जरी ।

**भावगम्यो हि केशवः ।**

न देवो विद्यते मन्त्रे न तन्त्रे न व्रतेऽपि वा ।
न तीर्थे प्रतिमायां वा भावगम्यो हि केशवः ॥३७॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

**भाववृत्त्या हि भावत्वम् ।**

दृश्यताम्—'तथा पूर्णत्वमभ्यसेत्' इति ।

---

(क) परन्तु किन्तु करः हस्तः आयुषः लिपिं लिखनं विधातृविहितमिति शेषः पठितुं भालस्थलीं ललाटदेशं किमु समुपाजगाम ? शिरसि करो निहित इति भावः। मध्या प्रोष्यत्पतिकानायिकावर्णनमित्यनेन श्लोकेन ध्वन्यते। —जीवानन्द विद्यासागर।

## भाविनी कर्मरेखा ।

पञ्चैते पाण्डुपुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः
शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः ।
ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः
को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेखा ॥३८॥

## भाविनं नैव चिन्तयेत् ।

गतशोको न कर्त्तव्यो भाविनं नैव चिन्तयेत् ।
वर्त्तमानेषु कार्येषु चिन्तयन्ति विचक्षणाः ॥३९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## भिक्षामटति दुर्मतिः ।

करस्थमुदकं त्यक्त्वा घनस्थमभिवाञ्छति ।
सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः ॥४०॥

## भिक्षायां नैव नैव च ।

वाणिज्ये वसते लक्ष्मीस्तदर्धा कृषिकर्मणि ।
तदर्धा राजसेवायां भिक्षायां नैव नैव च ॥४१॥

## भिक्षुः शेते नृप इव ।

भूः पर्यङ्को निजभुजलता कन्दुकः खं वितानं
दीपश्चन्द्रो विरतिवनितासङ्गलब्धप्रमोदः ।
दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्ता-
द्भिक्षुः शेते नृप इव भुवि त्यक्तसर्वस्पृहोऽपि (क) ॥४२॥

—भर्तृहरि—वैराग्यशतकम् ।

---

(क) दृश्यताम्—'सुखं शान्तः शेते' इति ।

## भिक्षुर्न चाहं निजबोधरूपः ।

नाहं मनुष्यो न च देवयक्षौ न ब्राह्मणक्षत्रियवैश्यशूद्राः ।
न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥ ४३ ॥

—शङ्कराचार्य—हस्तामलक ।

## भिन्नरुचिर्हि लोकः ।

अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी ।
नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ ४४ ॥

—कालिदास—रघुवंशम् ।

## भूतानि कालः पचतीति वार्त्ता ।

अस्मिन्महामोहमये कटाहे सूर्याग्निना रात्रिदिवेन्धनेन ।
मासर्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता ॥ ४५ ॥

—महाभारते वनपर्वणि ।

## भूत्याश्रितः कथय पालितसर्वभूतः ।

कल्याणवाक् त्वमिव किं पदमत्र कान्तं
सद्भूपतेस्त्वमिव कः परितोषकारी ।
कः सर्वदा वृषगतिस्त्वमिवातिमात्रं
भूत्याश्रितः कथय पालितसर्वभूतः (क) ॥ ४६ ॥

—धर्मदास—विदग्धमुखमण्डनम् ।

## भूय एवाभिवर्धते ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४७ ॥

—विष्णुपुराणे ययात्युपाख्यानम् ।

---

(क) अत्रोत्तरम्—'शङ्करः'। शं मङ्गलमिति प्रथमस्य, करः राजस्वमिति द्वितीयस्य, शङ्करः शिव इति तृतीयस्य।

## भूयाद्भारतपङ्कजं कलिमलप्रध्वंसिनः श्रेयसे ।

पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानावर्णनकेसरं हरिकथा संबोधनाबोधनम् ।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसिनः श्रेयसे ॥४८॥

—गीताध्यानम् ।

## भूषणे किं प्रयोजनम् ।

हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् ।
श्रोत्रस्य भूषणं शास्त्रं भूषणे किं प्रयोजनम् ॥४९॥

## भूषणं—दूषणम् ।

क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥५०॥

—विष्णुशर्मा—हितोपदेशः ।

## भूषा—भूषा—भूषा ।

नभोभूषा पूषा कमलवनभूषा मधुकरो
वचोभूषा सत्यं वरविभवभूषा वितरणम् ।
मनोभूषा मैत्री मधुसमयभूषा मनसिजः
सदोभूषा सूक्तिः सकलगुणभूषा च विनयः ॥५१॥

## भूषाहानिस्तु भूषणं भवति ।

दृश्यताम्—'अवसरपठिता वाणी' इति ।

## भेको मकमकायते ।

दिव्यं चूतरसं पीत्वा न गर्वं याति कोकिलः ।
पीत्वा कर्दमपानीयं भेको मकमकायते ॥५२॥

—वररुचि—नीतिरत्नम् ।

## भोगस्य भीमो मणिः ।

सायं नायमुदेति वासरमणिश्चन्द्रो न चण्डद्युति—
र्दावाग्निः कथमम्बरे ? किमशनिः ? स्वच्छान्तरीक्षे कुतः ? ।
हन्तेदं निरणायि पान्थरमणीप्राणानिलाशाशया
धावद्घोरविभावरीविषधरीभोगस्य भीमो मणिः (क) ॥५३॥

—कालिदास—शृङ्गाररसाष्टकम् ।

## भोगा न भुक्ता वयमेव भुक्ताः ।

द्रश्यताम्—'तृष्णा न जीर्णा वयमेव जीर्णाः' इति ।

## भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चलाः ।

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलोच्छिन्नाम्बुवद्भङ्गुरम् ।
लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधद्ध्वं बुधाः ॥५४॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## भोगास्तुङ्गतरङ्गतुल्यचपलाः ।

भोगास्तुङ्गतरङ्गतुल्यचपलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव दिनानि यौवनसुखं स्फूर्त्तिः क्रियासु स्थिता ।
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा ! बोधका !
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥५५॥

—भर्त्तृहरि—वैराग्यशतकम् ।

---

(क) सन्ध्यायां समुदितं चन्द्रं अवलोक्य काचित् विरहिणी कोऽयं उदेति इति तर्कयति सायमिति । पान्थानां प्रोषितानां या रमण्यः तासां प्राणानिलानां प्राणवायूनां आशः अशनं पानमित्यर्थः सर्पाणां पवनाशनत्वादिति भावः तस्य आशया भोक्तुमिच्छया तासां विनाशाय इति यावत् धावन्ती आगच्छन्ती या घोरविभावरी रात्रिः सैव विषधरी भुजङ्गी तस्याः भोगस्थः फणस्थः भीमो भयानको मणिः । अर्थात् विरहिणीनां प्राणापहारकः सर्पमणि-रयमुदेतीत्यर्थः ।

भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति ।

दृश्यताम्—'तृष्णा प्रत्युत जायते' इति ।

भोगे रोगभयम् ।

भोजनमफलमगव्यम् ।

दृश्यताम्—'अफलं—अफलं—अफलम्' इति ।

भोजनान्ते पिबेत्तक्रम् ।

दृश्यताम्—'किं वैद्यस्य प्रयोजनम्' इति ।

भोजनान्ते विषं वारि ।

भोजनान्ते विषं वारि भोजने चामृतं परम् ।
अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम् (क) ॥५६॥

भोजनं तामसप्रियम् ।

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥५७॥

—भगवद्गीता ।

भ्रमयति दृशं घूर्णयति च ।

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिशतकैः ।
भ्रमावेगादङ्गे किमपि विदधद्भङ्ग्यमसमः
स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥५८॥

—भर्तृहरि—शृङ्गारशतकम् ।

---

(क) दृश्यताम्—'अजीर्णे भेषजं वारि' इति ।

# म

## मकारा दश चञ्चलाः ।

मनो मधुकरो मेघो मानिनी मदनो मरुत् ।
मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥ १ ॥

## मकरे कुण्डलाकृति ।

## मक्षिका इव भिक्षुकाः ।

अनाहूताः स्वयं यान्ति रसास्वादविलोलुपाः ।
निवारिता न गच्छन्ति मक्षिका इव भिक्षुकाः ॥ २ ॥

## मक्षिका व्रणमिच्छन्ति ।

मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः ।
नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥ ३ ॥

## मणिना बलयेन विभाति करः ।

## मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ।

पुरो वा पश्चाद्वा क्वचिदपि वसामः क्षितिपते
ततः का नो हानिर्वचनरचनाक्रीतजगताम् (क) ।
अगारे कान्तारे कुचकलशभारे मृगदृशां
मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः (ख) ॥ ४ ॥

## मतिमान्न प्रकाशयेत् ।

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनञ्चापमानञ्च मतिमान्न प्रकाशयेत् ॥ ५ ॥

—चाणक्यशतकम् ।

---

(क) पाठान्तरम्—'पुरो वा पश्चाद्वा वयमुपविशामः क्षितिभुजां
ततः किं नश्छिन्नं वचनरचनाक्रीतजगताम्' ।
—सुभाषित् ।

(ख) मनस्विप्रशंसा अनेन श्लोकेन ध्वन्यते।

## मतिरेव बलाद्गरीयसी ।

मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा ।
इति घोषयतीव डिण्डिमः करिणो हस्तिपकापहतः क्वणन् ॥६॥

—भवभूति—गुणरत्नम् ।

## मत्त एवेति तान्विद्धि ।

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥७॥

—भगवद्गीता ।

## मत्त्वा धीरो हर्षशोकौ जहाति ।

तन्दुर्दर्शङ्गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठम्पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्त्वा धीरो हर्षशोकौ जहाति ॥८॥

—कठोपनिषद् ।

## मदिरा मन्यते जनः ।

न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह ।
पयोऽपि शौण्डिणीहस्ते मदिरां मन्यते जनः (क) ॥९॥

## मद्यपाः किं न जल्पन्ति ।

दृश्यताम्—'किं—किं—किम्' इति ।

## मधु तिष्ठति जिह्वाग्रे ।

दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥१०॥

—चाणक्यशतकम् ।

## मधुकर बन्धो ! मुधा भ्रमसि ।

इह रूपमात्रसारे चित्रगते कनककह्लारे ।
न रसो नापि च गन्धो मधुकर बन्धो ! मुधा भ्रमसि ॥११॥

---

(क) दृश्यताम्—'हीनसेवा न कर्त्तव्या' इति ।

## मधुकर ! मा कुरु शोकम् ।

मधुकर ! मा कुरु शोकं विचर करीरद्रुमस्य कुसुमेषु ।
घनतुहिनपातदलिता कथं नु सा मालती मिलति ॥ १२॥

## मधुसमयभूषा मनसिजः ।

द्दश्यताम्—'भूषा—भूषा—भूषा' इति ।

## मधुरयमधुना धिनोति धराम् ।

मलयानिलमिलनोत्कटमदकलकलकण्ठकलकललललामः ।
मधुरमधुविधुरमधुपो मधुरयमधुना धिनोति धराम् (क) ॥ १३॥
—भट्टरुद्रस्य ।

## मधुरेण समापयेत् ।

कुर्यात्क्षीरान्तमाहारं दध्यन्तं न कदाचन ।
लवणाम्लकटूष्णानि विदाहीनि च यानि तु ।
तद्दोषं हर्तुमाहारं मधुरेण समापयेत् ॥ १४॥

## मधुरं वचनं यस्य तेन क्रीतमिदं जगत् ।

द्दश्यताम्—'एकतः—एकतो—एकतः' इति ।

## मधौ मुग्धो हरिः क्रीडति ।

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवर—
श्रेणी—श्यामल—कोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
श्रृङ्गारः सखि ! मूर्त्तिमानिव मधौ मुग्धो हरिः क्रीडति ॥ १५॥
—जयदेव—गीतगोविन्दम् ।

---

(क) वसन्तवर्णनमनेन श्लोकेन ध्वन्यते।

## मध्वभावे गुडं दद्यात् ।

यवाभावे तु गोधूमं मुद्गाभावेऽपि माषकम् ।
मध्वभावे गुडं दद्याद्घृताभावे तु तैलकम् ॥ १६॥

## मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
गुणेषु सक्तं बन्धाय मोक्षाय तपसि स्थितम् ॥ १७॥

## मनसस्तु परा बुद्धिः ।

दृश्यताम्—'इन्द्रियेभ्यः परा ह्यर्थाः' इति ।

## मनस्तत्रैव रमते ।

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
मनस्तत्रैव रमते हताः पाणिनिना वयम् (क) ॥ १८॥

## मनसा कल्पिता मूर्त्तिः ।

मनसा कल्पिता मूर्त्तिर्नृणाञ्चेन्मोक्षसाधनी ।
स्वप्नलब्धेन राज्येन राजानो मानवास्तदा ॥ १९॥
—महानिर्वाणतन्त्रम् ।

## मनसा चिन्तितं कर्म ।

मनसा चिन्तितं कर्म वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥ २०॥
—चाणक्यशतकम् ।

---

(क) पाठान्तरम्—'नपुंसकमिति ज्ञात्वा तां प्रति प्रहितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥'

## मनसा चिन्तितं कार्यम् ।

मनसा चिन्तितं कार्यं वाचा नैव प्रकाशयेत् ।
मन्त्ररक्षणगूढात्मा कार्यसिद्धिं प्रकाशयेत् ॥२१॥
तारुण्ये च मृता भार्या पातकं किमतःपरम् (क) ।
मनसा चिन्तितं कार्यं दैवमन्यत्तु चिन्तयेत् ॥२२॥

## मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ।

वयमिह परितुष्टा बल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥२३॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## मनसि विचारय वारंवारम् ।

नारीस्तनभरनाभिनिवेशं मिथ्यामायामोहावेशम् ।
एतन्मांसवसादिविकारं मनसि विचारय वारंवारम् ॥२४॥

—शङ्कराचार्य—चर्पटपञ्जरिकास्तोत्रम् ।

## मनसि सप्तशल्यानि मे ।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्तशल्यानि मे ॥२५॥

—भर्त्तृहरि—नीतिशतकम् ।

## मनसैव कृतं पापम् ।

मनसैव कृतं पापं न शरीरकृतं कृतम् ।
येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥२६॥

---

(क) दृश्यताम्—'पातकं किमतःपरम्' इति ।

## मनस्येकं वचस्येकम् ।

मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ।
मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम् ॥२७॥

—विष्णुशर्मा—हितोपदेशः ।

## मनीषिभिः (सतां सङ्गतं) साप्तपदीनमुच्यते ।

प्रयुक्तसत्कारविशेषमात्मना न मां परं सम्प्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि ! सङ्गतं मनीषिभिः साप्तपदीनमुच्यते (क) ॥२८॥

—कालिदास—कुमारसम्भवम् ।

## मनुजो हि पापभाग्भवति ।

पश्यति परस्य युवतीं सकाममपि तन्मनोरथं कुरुते ।
ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजो हि पापभाग्भवति ॥२९॥

## मनुष्यरूपेण मृगाश्चरन्ति ।

येषां न विद्या न तपो न दानं न चापि शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भूवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥३०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## मनो दुर्निग्रहं चलम् ।

असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥३१॥

—भगवद्गीता ।

## मनो नाम महाव्याघ्रः ।

मनो नाम महाव्याघ्रो विषयारण्यभूमिषु ।
चरत्यत्र न गच्छन्तु साधवो ये मुमुक्षवः ॥३२॥

—शङ्कराचार्य—विवेकचूडामणिः ।

---

(क) सप्तभिः पदैरापद्यत इति साप्तपदीनं सप्तपदोच्चारणसाध्यमुच्यते। अर्थात् मनीषियों ने कहा है "परस्पर सात बातें कहने से, अथवा एक साथ सात पैर चलने से साधुगण की मित्रता सिद्ध होती है"।

## मनोभूषा मैत्री ।

दृश्यताम्—'भूषा—भूषा—भूषा' इति ।

## मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति ।

प्रियः सोऽयं कृष्णः सहचरि ! कुरुक्षेत्रमिलित—
स्तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम् ।
तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे
मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति (क) ॥३३॥

—श्रीरूपगोस्वामी—विदग्धमाधवम् ।

## मनो हि द्विविधं प्रोक्तम् ।

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥३४॥

—ब्रह्मविन्दूपनिषद् ।

## मनो ह्यविद्या भवबन्धहेतुः ।

दृश्यताम्—'तस्मिन्विनष्टे सकलं विनष्टम्' इति ।

## मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति मुहुः ।

अरे चेतो मीन ! भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिजलधौ पश्यसि न किम् ।
तनूजालीजालं स्तनयुगलतुम्बीफलयुतं
मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति मुहुः ॥३५॥

—शान्तिशतकम् ।

## मनोरथानामगतिर्न विद्यते ।

यथा श्रुतं वेदविदांवर ! त्वया जनोयमुच्चैः पदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥३६॥

—कालिदास—कुमारसम्भवम् ।

---

(क) श्रीमतीराधिकाया उक्तिरियं सहचरीं प्रति ।

## मनः किं नाभिजानीषे गृहे चिन्तामणिं तव ।

दृश्यताम्—'परिभ्रमसि किं दूरम्' इति ।

## मनःपूतं समाचरेत् ।

चक्षुःपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् (क) ॥३७॥

—मार्कण्डेयपुराणम् ।

## मन्तव्यश्चोपपत्तिभिः ।

दृश्यताम्—'एते दर्शनहेतवः' इति ।

## मन्दाक्रान्ता वितरति रसं नेक्षुयष्टिः समग्रम् ।

तन्वी बाला मृदुतनुरिति त्यज्यतामत्र शङ्का
दृष्टा काचिद्भ्रमरभरतो मञ्जरी भिद्यमाना ।
तस्मादेषा रहसि भवता निर्दयं मर्दनीया (ख)
मन्दाक्रान्ता वितरति रसं नेक्षुयष्टिः समग्रम् ॥३८॥

—विकटनितम्बायाः ।

## मन्मथो मां दुनोति ।

कलयति मम चेतस्तल्पमङ्गारकल्पं ज्वलयति मम गात्रं चन्दनं चन्द्रकश्च ।
तिरयति मम नेत्रे मोहजन्मान्धकारो विकृतबहुविकारं मन्मथो मां दुनोति ॥३९॥

## मन्यामहे नवबधूरथ तस्य वश्या ।

दृश्यताम्—'क्रोडे कृतापि यतते' इति ।

## मन्ये जननि ! जनानामुदरनिवासं निवारयसि ।

जह्नोरुदरनिवासात्स्वयमनुभूयेह भूयसीं बाधाम् ।
मन्ये जननि ! जनानामुदरनिवासं निवारयसि ॥४०॥

---

(क) पाठान्तरम्—'दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
शास्त्रपूतां वदेद्वाणीं मनःपूतं समाचरेत्' ॥

(ख) "पीडनीया" इति पाठान्तरम् ।

## मन्ये त्वद्वचसात्र नागतवती ।

माता मे तु सरस्वती प्रतिदिनं लक्ष्म्या विमात्रा सह
मौखर्यं विदधाति साथ चपला रुष्टा गृहान्निर्गता ।
तामन्वेषयता मया नु भवतो द्वारि प्रविष्टं मुदा
मन्ये त्वद्वचसात्र नागतवती स्थानान्तरं गम्यते ॥४१॥

## मन्ये मत्कुणशङ्कया ।

कमले कमला शेते हरः शेते हिमालये ।
क्षीराब्धौ च हरिः शेते मन्ये मत्कुणशङ्कया (क) ॥४२॥

## मन्ये विशिखनिपातस्तदवधि ।

यदवधि मदन ! कटाक्षो भवदनुभूतः पुरारातेः ।
मन्ये विशिखनिपातस्तदवधि भवतोऽबलास्वेव ॥४३॥

## मम तु भवानिव भवानेव ।

अहमिव बहवो भवतो मम तु भवानिव भवानेव ।
कुमुदिन्यः कति न विधोर्विधुरिव विधुरेव कुमुदिन्याः ॥४४॥

## मम धृतिधनं चेतः कोषाद्विलुण्ठयतीह यः।

सहचरि ! निरातङ्कः कोऽयं युवा मुदिरद्युति—
र्व्रजभुवि कुतः प्राप्तो माद्यन्मतङ्गविभ्रमः ।
अहह ! चटुलैरुत्सर्पद्भिर्दृगञ्चलतस्करै—
र्मम धृतिधनं चेतः कोषाद्विलुण्ठयतीह यः (ख) ॥४५॥

—चैतन्यचरितामृते—ललितमाधवम् ।

---

(क) हास्यरसात्मकः श्लोकोऽयम् ।

(ख) श्रीकृष्णं दृष्ट्वा श्रीमतीराधिकाया उक्तिरियं स्वसखीं प्रति ।

## ममानन्दं वृन्दाविपिनमतुलं तुन्दिलयति ।

सुगन्धौ माकन्दप्रकरमकरन्दस्य मधुरे
विनिस्यन्दे बन्दीकृतमधुपवृन्दं मुहुरिदम् ।
कृतान्दोलं मन्दोन्नतिभिरनिलैश्चन्दनगिरे—
र्ममानन्दं वृन्दाविपिनमतुलं तुन्दिलयति (क)॥ ४६ ॥

—श्रीरूपगोस्वामी—विदग्धमाधवम् ।

## ममेति बध्यते जन्तुः ।

ममेति बध्यते जन्तुर्न ममेति च मुच्यते ।
बन्धाय विषयासक्तं मुक्तौ निर्विषयं मनः ॥ ४७ ॥

## ममेन्द्रियकुलं राधे ! मुहुर्मोदते ।

निर्धूतामृतमाधुरीपरिमलं कल्याणि ! बिम्बाधरो
वक्त्रं पङ्कजसौरभं कुहुरिति श्लाघाभिदस्ते गिरः ।
अङ्गं चन्दनशीतलं तनुरियं सौन्दर्यसर्वस्वभाक्
त्वामासाद्य ममेन्द्रियकुलं राधे ! मुहुर्मोदते (ख) ॥ ४८ ॥

—चैतन्यचरितामृते—ललितमाधवम् ।

## ममेयं मानसी व्यथा ।

गोपने जीवनग्लानिर्मानहानिरगोपने ।
अनूढानङ्गपीडेव ममेयं मानसी व्यथा ॥ ४९ ॥

## मयि सर्वमिदं प्रोतम् ।

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ५० ॥

—भगवद्गीता ।

---

(क) वृन्दावनदर्शनानन्तरं श्रीकृष्णस्योक्तिरियम् ।
(ख) श्रीकृष्णस्योक्तिरियं श्रीमतीराधिकां प्रति ।

## मरणं प्रकृतिः शरीरिणाम् ।

मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ ५१ ॥
—कालिदास—रघुवंशम् ।

## मरणं मानुषो भावः ।

स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परिवादोऽसतामिव ॥ ५२ ॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## मर्कटस्य सुरापानम् ।

मर्कटस्य सुरापानं ततो वृश्चिकदंशनम् ।
तन्मध्ये भूतसञ्चारो यद्वा तद्वा भविष्यति ॥ ५३ ॥

## मर्तव्यमिति यद्दुःखम् ।

मर्तव्यमिति यद्दुखं पुरुषस्योपजायते ।
शक्यते नानुमानेन परेण परिवर्णितुम् ॥ ५४ ॥
—विष्णुशर्मा—हितोपदेशः ।

## मर्त्यास्त्रस्यन्ति मृत्युतः ।

जन्ममृत्युजरादुःखैर्नित्यं संसारसागरे ।
क्लिश्यन्ति जन्तवो घोरे मर्त्यास्त्रस्यन्ति मृत्युतः ॥ ५५ ॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## मर्दनं गुणवर्धनम्

इक्षुदण्डास्तिलाः क्षुद्राः कान्ता हेम च मेदिनी ।
चन्दनं दधि ताम्बूलं मर्दनं गुणवर्धनम् ॥ ५६ ॥

## मलम्—मलाः—मलम् ।

अनाम्नाय मला वेदा ब्राह्मणस्याव्रतं मलम् ॥ ५७ ॥

मलं पृथिव्या बाह्लीकाः पुरुषस्यानृतं मलम् ।
कौतुहलमला साध्वी विप्रवासमलाः स्त्रियः ॥५८॥
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥५९॥

—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## महतामेकरूपता ।

उदये सविता रक्तो रक्तश्चास्तमने तथा ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥६०॥

## महतः परमव्यक्तम्

द्दश्यताम्—'इन्द्रियेभ्यः परा ह्यर्थाः' इति ।

## महाजनो येन गतः स पन्थाः ।

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् (क) ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥६१॥

—महाभारते बनपर्वणि ।

वेदा विभिन्नाः स्मृतयो विभिन्ना (ख) नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥६२॥
प्रिये प्रयाते हृदयं प्रयाति लज्जा प्रयाता बत चेतना च ।
निर्लज्ज रे जीवित ! न श्रुतं किं महाजनो येन गतः स पन्थाः ॥६३॥

## महान्महत्येव करोति विक्रमम्

तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वतः ।
समुच्छ्रितानेव तरून्प्रबाधते महान्महत्येव करोति विक्रमम् ॥६४॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) 'नासावृषिर्यस्य मतं न भिन्नम्' इति पाठान्तरम् 'एकादशीत्त्वे' ।
(ख) 'श्रुतिर्विभिन्नाः स्मृतयश्च भिन्नाः' इति पाठान्तरम् ।

## महापापानि सप्तैव ।

द्यूत-मांस-सुरा-वेश्याखेट-चौर्य-पराङ्गनाः
महापापानि सप्तैव व्यसनानि त्यजेद्बुधः।
यस्त्वेकव्यसनासक्तो निर्गमे च न पश्यति
किं पुनः सप्तभिर्युक्तो व्यसनैः सङ्कुलः पुमान् ॥६५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका।

## महामोहजालं कपालम् ।

क्वैतद्वक्त्रारविन्दं क्व तदधरमधु क्वायतास्ते कटाक्षाः
क्वालापाः कोमलास्ते क्व च मदनधनुर्भङ्गुरो भ्रूविलासः ।
इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं
रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालम् (क) ॥६६॥

—शान्तिशतकम्।

## महामोहान्धानां किमिव रमणीयं न भवति ।

समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको महामोहान्धानां किमिव रमणीयं न भवति ॥६७॥

—शान्तिशतकम्।

## महीरत्नं श्रीमाञ्जयति रघुनाथो नृपवरः ।

## मा कुरु धनजनयौवनगर्वम् ।

मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् ।
मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा ॥६८॥

—शङ्कराचार्य—मोहमुद्गरः।

---

(क) खट्वाङ्गस्य शववहनीयपर्य्यङ्कपादपीठस्येति यावत् कोटौ अग्रे प्रकटितदशनं विस्तृतदन्तं मञ्जु मनोज्ञं यथा तथा गुञ्जन् स्वनन् समीरो वायुर्यस्मात् तादृशं कपालं शिरोऽस्थि-खण्डं रागान्धानाम् उच्चैः महामोहजालम् इत्थम् अनेन प्रकारेण उपहसतीव । यदेतत् कान्तामुखकमलमतिमनोहरं तदपि एतां दशां कालेन यास्यतीति, तत् कोऽयं युष्माकं एतदर्थं महामोहविलास इति हसतीवेति भावः ।

—जीवानन्द विद्यासागर।

## मा भूत्कदाचिदपि पापतिथिर्द्वितीया ।

मातस्त्रयोदशि तिथे ! प्रणमामि तुभ्यं
मत्कान्तसङ्गमविधायिनि सर्वसिद्धे ! ।
भूयास्त्वमेव दश पञ्च च वासराणि
मा भूत्कदाचिदपि पापतिथिर्द्वितीया (क) ॥६९॥

## मा भूज्जन्म कुलस्त्रीणाम् ।

मा भूज्जन्म कुलस्त्रीणां जन्म चेद्यौवनं न हि ।
यौवनं चेन्न तु प्रेम प्रेम चेद्विरहो न हि ॥७०॥

## मातङ्गोऽष्टायुधः स्मृतः ।

बलेषु प्रमुखो हस्ती न तथान्यो महीपते ! ।
निजैरवयवैरेव मातङ्गोऽष्टायुधः (ख) स्मृतः ॥७१॥

—विष्णुशर्मा—हितोपदेशः।

## माघे सन्ति त्रयो गुणाः ।

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥७२॥

---

(क) शुक्लपक्ष की त्रयोदशी, चतुर्दशी, पूर्णिमा, प्रतिपद् और कृष्णपक्ष की त्रयोदशी, चतुर्दशी, आमावस्या, प्रतिपद् इन कई तिथियों में संस्कृत पाठ निषिद्ध है। जो विद्यार्थी दूरवर्त्ती चतुष्पाठियों में अध्ययन किया करते थे, वे त्रयोदशी के दिन अपने अपने घर जाकर वहाँ प्रतिपदा तक रह कर द्वितीया के दिन पुनः चतुष्पाठी में जाया करते थे। सुतरां विवाहित विद्यार्थियों की स्त्रियों को एक एक पक्ष में केवल चार दिन पतिसहवास होने का अवसर मिलता था। यह ऐसे विद्यार्थियों की स्त्रियों का आक्षेपवाक्य है।

अष्टमी के दिन भी पाठ निषिद्ध है। ऐसा जान पड़ता है कि केवल एक दिन के निमित्त विद्यार्थी अपने घर नहीं जाते थे। इसी कारण उसका कोई उल्लेख नहीं है। तथाहि—

'अष्टमी गुरुहन्त्री च शिष्यहन्त्री चतुर्दशी।
आमावस्या द्वयोर्हन्त्री प्रतिपत्पाठनाशिनी॥
अमा पूर्णा गुरुं हन्ति शिष्यं हन्ति चतुर्दशी।
उभावप्यष्टमी हन्ति प्रतिपत्पाठनाशिनी'॥

(ख) हस्तिनः अष्टः आयुधानि यथा चत्वारः पादाः, द्वौ दन्तौ, एकः शुण्डः, एकः पुच्छश्च।

## माता कुपुत्रे विमुखी भवेत्किम् ।

हरे कृपालो ! कुरु दृष्टिपातं पुत्रो मुमूर्षुः शरणं गतस्ते ।
यद्यस्मि पापी नितरां तथापि माता कुपुत्रे विमुखी भवेत्किम् ॥७३॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## मातासमं नास्ति शरीरपोषणम् ।

## मातुरुच्चार एव सः ।

दाने तपसि शौर्ये च यस्य न प्रथितं मनः ।
विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥७४॥

—नारायण पण्डित—हितोपदेशः ।

## माधव ! मा धाव मा धाव ।

नीतं यदि नवनीतं नीतं नीतं किमेतेन ।
आतपतापितभूमौ माधव ! मा धाव मा धाव ॥७५॥

## माधवाय मधुविद्विषे नमः ।

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये ।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥७६॥

—कुलशेखर—मुकुन्दमाला ।

## मानवाः स्वर्गमिच्छन्ति ।

## मानसे मम कथं न लीयसे ।

क्षीरसारमपहृत्य शङ्कया स्वीकृतं यदि पलायनं त्वया ।
मानसे मम नितान्ततामसे नन्दनन्दन ! कथं न लीयसे ? ॥७७॥

## मानो हि महतां धनम् ।

दृश्यताम्—'अधमाः—मध्यमाः—उत्तमाः' इति ।

## मानं कुर्वन्ति नेतरे ।

मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे ।
शम्भुर्बिभर्त्ति मूर्ध्नेन्दुं स्वर्भानुस्तं जिघृक्षति ॥७८॥

## मानं मानिनि ! मुञ्च देवि ।

मानं मानिनि ! मुञ्च देवि ! दयिते ! मिथ्यावचः श्रूयते
किं कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते ।
दोर्भ्यां बन्धनमाशु दन्तदलनं पीनस्तनास्फालनं
दोषश्चेन्मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु ॥७९॥

—विह्लण—विद्यासुन्दरम् ।

## मित्रं—मित्रं—मित्रम् ।

विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च ।
व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥८०॥

## मित्रं ज्ञेयं चतुर्विधम् ।

औरसं कृतसंबन्धं तथा वंशक्रमागतम् ।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥८१॥

—विष्णुशर्मा—हितोपदेशः ।

## मिथ्याचारः स उच्यते ।

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥८२॥

—भगवद्गीता ।

## मिष्टान्नमितरे जनाः ।

कन्या वरयते रूपं (क) माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥८३॥

(क) 'वरं वरयते कन्या' इति पाठान्तरम् ।

## मीने शीतनिवारणम् ।

चापाकृति धनुर्मासे मकरे कुण्डलाकृति ।
कुम्भे शीतमशीतं वा मीने शीतनिवारणम् (क) ॥८४॥

## मीमांसकस्याशीर्वचनम् ।

येनाभवच्छतमखोऽधिपतिः सुराणां येनाप्ययं दिनकरोऽधिपतिर्ग्रहाणाम् ।
त्वं येन भूमिवलयेऽधिपतिर्नराणां तस्मिन्पुनर्भवतु कर्मणि ते प्रयत्नः (ख) ॥८५॥

—चिरंजीव शर्मा—विद्वन्मोदतरङ्गिणी ।

## मुक्ता हि जवया रक्ता ।

मुक्ता हि जवया रक्ता न शुभ्रा मुक्तया जवा ।
भवेत्परगुणग्राही महीयानेव नापरः ॥८६॥

## मुक्तिर्न सिध्यति ब्रह्मशतान्तरेऽपि ।

वदन्तु शास्त्राणि यजन्तु देवान्कुर्वन्तु कर्माणि भजन्तु देवान् ।
आत्मैक्यबोधेन विनापि मुक्तिर्न सिध्यति ब्रह्मशतान्तरेऽपि ॥८७॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## मुक्तिर्नो शतजन्मकोटिसुकृतैः पुण्यैर्विना लभ्यते ।

जन्तूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति-
र्मुक्तिर्नो शतजन्मकोटिसुकृतैः पुण्यैर्विना लभ्यते ॥८८॥

—शङ्कराचार्य—विवेकचूडामणिः ।

---

(क) दृश्यताम्—'शीतं-शीतं-शीतम्' इति यस्मिन् श्लोके 'मेषे शीत निवर्त्तते' इति कथ्यते ।

(ख) जिसके प्रभाव से शताश्वमेधकारी इन्द्र देवगण का अधिपति हुआ है, जिसके द्वारा सूर्य ग्रहगण का अधीश्वर हुआ है और जिसके द्वारा आप इस पृथिवी के मनुष्यों के राजा हुए हैं, उसी वेदोक्त कर्म में आप यत्नवान् हों ।

## मुखमण्डलगोपनं किमिति ।

कुचयोर्गोपनमुचितं कनकाद्रिकान्तितस्करयोः ।
ननु विजितविधुमण्डलमुखमण्डलगोपनं किमिति (क) ॥८९॥

## मुखरस्तत्र हन्यते ।

न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम् ।
यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥९०॥

—विष्णुशर्मा—हितोपदेशः ।

## मुखवर्जं तु गौः शुद्धा ।

मुखवर्जं तु गौः शुद्धा मार्जारश्चाश्रमे शुचिः ।
शय्या भार्या शिशोर्वस्त्रमुपवीतं कमण्डलुः ॥९१॥

## मुग्धे ! किमित्यद्भुतम् ।

ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात्क्वचि-
त्ते सर्वे कवयो भवन्ति सुतरां प्रख्यातभूमीभुजः ।
त्वद्वक्त्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जना-
स्तेते मन्मथबाणजालविकला मुग्धे ! किमित्यद्भुतम् (ख) ॥९२॥

—कालिदास—शृङ्गारतिलकम् ।

## मुञ्चन्ति शीघ्रं बुधाः ।

वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं
युद्धे कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् ।
राजानञ्च कुमन्त्रिभिः परिवृतं देशञ्च सोपद्रवं
भार्यां यौवनगर्वितां पररतां मुञ्चन्ति शीघ्रं बुधाः ॥९३॥

—पञ्चरत्नम् ।

---

(क) 'अवधीरितविधुमण्डलमुखमण्डलगोपनं किमिति' इति पाठान्तरम् ।

(ख) मुग्धः कोऽपि नागरीं प्रति आह ये ये इति ।

राजा धर्मविना (क) द्विजः शुचिविना ज्ञानं विना योगिनः
कान्ता सत्यविना हयो गतिविना भूषा च ज्योतिर्विना ।
योद्धा शूरविना तपो व्रतविना छन्दो विना गीयते
भ्राता स्नेहविना नरो हरिविना मुञ्चन्ति शीघ्रं बुधाः ॥९४॥

—सप्तरत्नम् ।

## मुनीनाञ्च मतिभ्रमः ।

जिह्वा टलति धीरस्य पादष्टलति हस्तिनः ।
भीमस्यापि रणे भङ्गो मुनीनाञ्च मतिभ्रमः ॥९५॥

## मुहुर्निन्द्यं रूपम् ।

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनं
मुहुर्निन्द्यं रूपं कविवरविशेषैर्गुरुकृतम् ॥९६॥

—भर्तृहरि—वैराग्यशतकम् ।

## मुहुर्मुहुर्वारि पिबेदभूरि ।

अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः ।
तस्मान्नरो वह्निविवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥९७॥

## मूकोऽस्ति को वा वधिरश्च को वा ।

मूकोऽस्ति को वा बधिरश्च को वा वक्तुं न युक्तं समये समर्थः ।
तथ्यं सुपथ्यं न शृणोति वाक्यं विश्वासपात्रं न किमस्ति नारी (ख) ॥९८॥

—शङ्कराचार्य—मणिरत्नमाला ।

## मूढाः किमर्थमसतीति कदर्थयन्ति ।

दृश्यताम्—'ब्रह्मैव सर्वमपरं न च किञ्चिदस्ति' इति ।

---

(क) 'धर्मविना' इत्यादिकमपभ्रंश इति चिन्तनीयम् ।

(ख) अन्यच्च—'कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति नैतानि ।
को मूको यः काले प्रियाणि वक्तुं न जानाति' ॥

## मूर्खस्य किं धर्मकथाप्रसङ्गः ।

मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभानाम् ।
अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥९९॥

## मूर्खस्य किं शास्त्रकथाप्रसङ्गः ।

किमिष्टमन्नं खरसूकराणां किं रत्नहारो मृगपक्षिणां च ।
अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं शास्त्रकथाप्रसङ्गः ॥१००॥

## मूर्खस्य चाष्टचिह्नानि ।

मूर्खस्य चाष्टचिह्नानि शीका टीका च मालिका ।
प्रतिष्ठा लम्बधोत्राणि हाजी होजी च योग्यता ॥१०१॥

## मूर्खस्य नास्त्यौषधम् ।

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन चपलौ दण्डेन गोगर्दभौ ।
व्याधिर्वैद्यकभेषजैरनुदिनं मन्त्रप्रभावाद्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥१०२॥

—पञ्चरत्नम् ।

## मूर्खस्य पञ्च चिह्नानि ।

मूर्खस्य पञ्च चिह्नानि गर्वी दुर्वचनी तथा ।
हठी चाप्रियवादी च परोक्तं नैव मन्यते ॥१०३॥

## मूर्ध्नि तस्यैव सा पतेत् ।

निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ ।
खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥१०४॥

## मूर्ध्नि तिष्ठन्ति वायसाः ।

विहाय पौरुषं यो हि दैवमेवावलम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥१०५॥

## मूलादुद्धरणं सुखम् ।

विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥१०६॥
—विष्णुशर्मा—हितोपदेशः ।

## मृगात्सिंहः पलायते ।

अयं मृगः समायाति त्वरितैस्त्वरितैः पदैः ।
अतो गच्छस्व शीघ्रं त्वं मृगात्सिंहः पलायते(क)॥१०७॥
तिष्ठार्जुनाद्य संग्रामे त्वां हनिष्याम्यहं शरैः ।
तिष्ठामि कर्ण ! किं मूढ ! मृगात्सिंहः पलायते(ख)॥१०८॥

## मृगात्सिंहः पलायनम् ।

कस्तूरी जायते कस्मात्को हन्ति करिणां कुलम् ।
किं कुर्यात्कातरो युद्धे मृगात्सिंहः पलायनम् (ग) ॥१०९॥

## मृतोऽपि जीवति चिरम् ।

मृतोऽपि जीवति चिरं हरिभक्तिपरायणः ।
हरिभक्तिविहीनस्तु श्वसन्नपि न जीवति ॥११०॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## मृतो दरिद्रः पुरुषः ।

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥१११॥
—महाभारते बनपर्वणि ।

---

(क) (ख) 'मृगात्सिंहः पलायते' इति समस्या।
(ग) अत्रोत्तरम्—कस्तूरी कस्मात् जायते—मृगात्, करिणां कुलं को हन्ति—सिंहः, कातरो युद्धे किं कुर्यात्—पलायनम् इति योजना। 'मृगात्सिंहः पलायनम्' इति समस्या।

## मृतः को वा न जायते ।

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ॥ ११२॥

—भर्तृहरि—नीतिशतकम् ।

## मृत्युः किं यदि दुर्जनेष्ववनतिः ।

द्रश्यताम्—'किं—किं—किम्' इति ।

## मृत्युरेव न संशयः ।

यस्य क्षेत्रं नदीतीरे भार्या वापि परप्रिया ।
पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ११३॥
दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ११४॥

—चाणक्यशतकम् ।

## मृत्युर्धावति धावतः ।

भुक्त्वोपविशतो ह्येवं भुक्त्वा संविशतः सुखम् ।
आयुष्यं क्रममाणस्य मृत्युर्धावति धावतः ॥ ११५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## मृत्युर्धावति पञ्चमः ।

भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः (क) ॥ ११६॥

—कठोपनिषद् ।

---

(क) तथाहि श्रीमद्भागवते—

'यद्भयाद्वाति वातोऽयं सूर्यस्तपति यद्भयात् ।
यद्भयाद्वर्षते देवो भगणो भाति यद्भयात् ॥
यद्वनस्पतयो भीता लताश्चौषधिभिः सह ।
स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलानि च ॥
स्रवन्ति सरितो भीता नोत्सर्पत्युदधिर्यतः ।
अग्निरिन्धे सगिरिभिर्भूर्न मज्जति यद्भयात् ॥

## मृत्युर्वै प्राणिनां ध्रुवः ।

मृत्युर्जन्मवतां वीर ! देहेन सह जायते ।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ११७॥

## मृत्युर्भवति निश्चितम् ।

खरोष्ट्रमहिषव्याघ्रान् स्वप्ने यस्त्वधिरोहति ।
षण्मासाभ्यन्तरे तस्य मृत्युर्भवति निश्चितम् ॥ ११८॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## मृत्योः स मृत्युङ्गच्छति ।

मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युङ्गच्छति य इह नानेव पश्यति ॥ ११९॥

—कठोपनिषद् ।

## मृत्योः स मृत्युमाप्नोति ।

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १२०॥

—कठोपनिषद् ।

## मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ।

को न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १२१॥

—भर्त्तृहरि—नीतिशतकम् ।

---

नभो ददाति श्वसतां पदं यन्नियमाददः ।
लोकं स्वदेहं तनुते महान्सप्तभिरावृतम् ॥
गुणाभिमानिनो देवाः स्वर्गादिष्वस्य यद्भयात् ।
वर्त्तन्तेऽनुयुगं येषां वश एतच्चराचरम् ॥
सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।
जनं जनेन जनयन्मारयन्मृत्युनान्तकम् ॥

३।३०।४०—४५ ।

## मोक्षमिच्छन्ति देवताः ।

अधना धनमिच्छन्ति वाचं चैव चतुष्पदः ।
मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति देवताः ॥१२२॥

## मोक्षस्य शुद्धं विरजस्तमस्कम् ।

दृश्यताम्—'बन्धस्य हेतुर्मलिनं रजोगुणैः' इति ।

## मोदते कीदृशः पुमान् ।

कीदृक् किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम् ।
गुणैः परेषामत्यर्थं मोदते कीदृशः पुमान् (क) ॥१२३॥

—धर्मदास—विदग्धमुखमण्डनम् ।

## मोह एव महामृत्युः ।

मोह एव महामृत्युर्मुमुक्षोर्वपुरादिषु ।
मोहो विनिर्जितो येन स मुक्तिपदमर्हति ॥१२४॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## मोहं जहि महामृत्युम् ।

मोहं जहि महामृत्युं देहदारसुतादिषु ।
यं जित्वा मुनयो यान्ति तद्विष्णोः परमं पदम् ॥१२५॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## मौक्तिकं न गजे गजे ।

दृश्यताम्—'चन्दनं न वने वने' इति ।

## मौनिनः कलहो नास्ति ।

दृश्यताम्—'नास्ति—नास्ति—नास्ति' इति ।

---

(क) अत्रोत्तरं विमत्सरः। प्रथमस्य विमत्पक्षियुक्तं सर इति। द्वितीयस्य विगतो मत्सरः अन्य-शुभद्वेषः यस्य तादृशः।

## मौनं सर्वार्थसाधकम् ।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधकम् ॥१२६॥

---

# य

## य इह नानेव पश्यति ।

दृश्यताम्—'मृत्योः स मृत्युङ्गच्छति' इति ।
'मृत्योः स मृत्युमाप्नोति' इति ।

## यच्चिन्तितं तदिह दूरतरं प्रयाति ।

यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं(क) तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिप चक्रवर्त्ती सोऽहं व्रजामि विपिनं जटिलस्तपस्वा(ख)॥ १॥

## यजेत पुरुषं परम् ।

दृश्यताम्—'अकामः सर्वकामो वा' इति ।

## यत एवागतो दोषस्तत एव निवर्तते ।

यत एवागतो दोषस्तत एव निवर्त्तते ।
अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम् ॥२॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## यत्तदग्रे विषमिव परिणामेऽमृतोपम् ।

---

(क) 'यच्चेतसापि न कृतं' इति पाठान्तरम् ।

(ख) पाठान्तरम्—'इत्थं विधेर्विधिविपर्ययमाकलय्य सन्तः सदा सुरसरित्तटमाश्रयन्ति' ॥ श्रीरामचन्द्रस्योक्तिरियमित्यनेन श्लोकेन ध्वन्यते ।

## यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ३ ॥

—घटकर्पर—नीतिसारम् ।

## यत्परं ब्रह्माहमेव तत् ।

निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ४ ॥
अहमाकाशवत्सर्वबहिरन्तर्गतोऽच्युतः ।
सदा सर्वसमः शुद्धो निःसङ्गो निर्मलोऽचलः ॥ ५ ॥
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥ ६ ॥

—शङ्कराचार्य—आत्मबोधः ।

## यत्रस्थं तत्र नीयते ।

विवाहोऽर्थश्च मरणमन्नं जननमेव च ।
कण्ठे बद्ध्वा दृढं सूत्रं यत्रस्थं तत्र नीयते (क) ॥ ७ ॥

## यत्सावमानपरपिण्डरता मनुष्याः ।

गङ्गातरङ्गकणशीकरशीतलानि विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि यत्सावमानपरपिण्डरता मनुष्याः ॥ ८ ॥

—भर्तृहरि—वैराग्यशतकम् ।

## यत्सारभूतं तदुपासितव्यम् ।

अनन्तशास्त्रं बहुवेदितव्यं स्वल्पश्च कालो बहवश्च विघ्नाः ।
यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रम् ॥ ९ ॥

---

(क) दृश्यताम्—'बलाद्दैवेन नीयते' इति। 'स्वयं वा तत्र गच्छति' इति।

## यतो धर्मस्ततो जयः ।

जयोऽस्तु पाण्डुपुत्राणां येषां पक्षे जनार्दनः ।
यतो कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः (क) ॥ १० ॥

—हलायुध—धर्मविवेकः ।

धर्मेण हन्यते व्याधिर्हन्यन्ते वै तथा ग्रहाः ।
धर्मेण हन्यते शत्रुर्यतो धर्मस्ततो जयः ॥ ११ ॥

## यतो नागास्ततो जयः ।

यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम् ।
यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ १२ ॥

## यतो वाञ्छा निवर्त्तते ।

यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्त्तते ।
प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्त्तते (ख) ॥ १३ ॥

—विष्णुशर्मा—हितोपदेशः ।

## यथाकर्म यथाश्रुतम् ।

हन्त त इदं प्रवक्ष्यामि गुह्यम् ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ! ॥ १४ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् (ग) ॥ १५ ॥

—कठोपनिषद् ।

## यथा चतुर्भिः कनकं परीक्ष्यते ।

दृश्यताम्—'तथा चतुर्भिः पुरुषं परीक्ष्यते' इति ।

---

(क) कुरुक्षेत्रे कौरवाणां पाण्डवानां च युद्धात्पूर्वं भीष्मपितामहस्योक्तिरियम् ।

(ख) दृश्यताम्—'किं नु दुःखमतःपरम्' इति ।

(ग) यथाकर्म (यैः यादृशं कर्म इह जन्मनि कृतं तदनुसारेण) यथाश्रुतं (यैः यादृशं विज्ञानम् उपार्जितं तदनुसारेण) अन्ये (केचित्) देहिनः शरीरत्वाय (शरीर ग्रहणार्थम्) योनिम् प्रपद्यन्ते (प्रविशन्ति ) अन्ये स्थाणुं (स्थावरभावम्) अनुसंयन्ति (अनुगच्छन्ति) ।

—'शङ्करकृपा' टीका ।

यथा चित्तं तथा वाक्यं यथा वाक्यं तथा क्रियाः ।

## यथा दीपो निवातस्थः ।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १६ ॥

—भगवद्गीता ।

## यथा देशस्तथा भाषा ।

## यथा नदीनां बह्वोऽम्बुवेगाः ।

यथा नदीनां बह्वोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ १७ ॥

—भगवद्गीता ।

## यथा नियुक्तोऽस्मि तथा करोमि ।

जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ।
त्वया हृषीकेश ! हृदिस्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥ १८ ॥

## यथा प्रकृत्या मधुरं गवां पयः ।

## यथा प्रदीप्तं ज्वलनं पतङ्गाः ।

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ १९ ॥

—भगवद्गीता ।

## यथा देशस्तथा भाषा ।

## यथा भक्तिर्ममोर्जिता ।

न साधयति मां योगो न सांख्यं धर्म उद्धव ! ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता ॥२०॥

—श्रीमद्भागवतम् ।

## यथारण्यं तथा गृहम् ।

माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥२१॥

—चाणक्यशतकम् ।

## यथा राजा तथा प्रजाः ।

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
लोकास्तदनुवर्त्तन्ते यथा राजा तथा प्रजाः ॥२२॥
यथा देशस्तथा भाषा यथा राजा तथा प्रजाः ।
यथा भूमिस्तथा तोयं यथा बीजं तथाङ्कुरः ॥२३॥
स्वधर्मरूपो राजेन्द्रो दयारूपेण मन्त्रिणः ।
सेवकाः साधुरूपेण यथा राजा तथा प्रजाः ॥२४॥
राजा राक्षसरूपेण व्याघ्ररूपेण मन्त्रिणः ।
सेवकाः साधुरूपेण यथा राजा तथा प्रजाः ॥२५॥

## यथा बीजं तथाङ्कुरः ।

दृश्यताम्—'यथा राजा तथा प्रजा' इति ।

## यथैकेन न हस्तेन तालिका संप्रपद्यते ।

यथैकेन न हस्तेन तालिका संप्रपद्यते ।
तथोद्यमपरित्यक्तं कर्म नोत्पादयेत्फलम् ॥२६॥

## यदभावि न तद्भावि ।

यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते (क) ॥२७॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) 'इति मत्वा नरो विद्वान्निश्चिन्तो भवति ध्रुवम्' इति पाठान्तरम् ।

## यदशक्यं न तच्छक्यम् ।

यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न च नौर्गच्छति स्थले ॥२८॥

—विष्णुशर्मा—हितोपदेशः ।

## यदि विरहो जीविताशा का ।

माभूत्सज्जनयोगो यदि योगो मा पुनः स्नेहः ।
स्नेहो यदि विरहो मा यदि विरहो जीविताशा का ॥२९॥

## यदीच्छसि वशीकर्त्तुम् ।

यदीच्छसि वशीकर्त्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गां चरन्तीं निवारय (क) ॥३०॥

—भगवद्व्यासमुनेः ।

## यदेतस्यैश्वर्यं तव जननि ! सौभाग्यमहिमा ।

वृषो वृद्धो यानं विषमशनमाशानिवसनं
श्मशानं क्रीडाभूर्भुजगनिवहो भूषणविधिः ।
समग्रा सामग्री जगति विदितैव स्मररिपो—
र्यदेतस्यैश्वर्यं तव जननि ! सौभाग्यमहिमा ॥३१॥

—शङ्कराचार्य—आनन्दलहरीस्तुतिः ।

## यदेव रोचते यस्मै ।

किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम् ।
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥३२॥

—विष्णुशर्मा—हितोपदेशः ।

---

(क) 'उपास्यतां कलौ कल्पलतादेवी प्रतारणा' । इति पाठान्तरम् । उपर्युक्त श्लोक का भावार्थ यह है कि यदि तुम एक कर्म से संसार को वश करना चाहते हो तो दूसरों की निन्दारूपी धान्यों से चरती हुई अपनी वाणीरूपी गाय को हटा लो । अर्थात् दूसरों की निन्दा न करो । उत्त-रार्ध में वह एक कर्म बतलाता है जिससे जगत् वश में किया जा सकता है ।

## यद्दैवेन ललाटपत्रलिखितम् ।

दृश्यताम्—'तत्प्रोज्झितुं कः क्षमः' इति ।

## यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ।

दृश्यताम्—'बलं पञ्चविधं नित्यम्' इति ।

## यद्भावि तद्भवत्येव ।

यद्भावि तद्भवत्येव यन्न भावि न तद्भवेत् ।
इति निश्चिन्तबुद्धीनां न चिन्ता बाधते क्वचित् ॥३३॥

## यद्भाव्यं तद्भवतु भगवन् !

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन् ! पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥३४॥

—कुलशेखर—मुकुन्दमाला ।

## यद्येन युज्यते लोके ।

यद्येन युज्यते लोके लोकस्तत्तेन योजयेत् ।
अहमन्नं भवान्भोक्ता कथं प्रीतिर्भविष्यति ॥३५॥

—विष्णुशर्मा—हितोपदेशः ।

## यद्रोचते तत्कुरु दीनबन्धो ।

हरे ! न पापी सदृशो ममास्ते न पापहारी सदृशस्तवास्ति ।
इत्येव चित्ते ननु चिन्तयित्वा यद्रोचते तत्कुरु दीनबन्धो ॥३६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## यद्रोचते तत्पिब ।

कस्येयं तरुणि ! प्रपा (क) पथिक मे किं पीयतेऽस्यां पयो (ख)
धेनूनामथ माहिषं बधिर हे ! वारः (ग) कथं मङ्गलः ।
सोमो वाथ शनैश्चरोऽमृतमहो (घ) तत्तेऽधरे दृश्यते
श्रीमन् पान्थ ! नितान्तनागरगुरो ! यद्रोचते तत्पिब ॥३७॥

## यद्वदन्ति वचः स्वप्ने ।

देवो द्विजो गुरुर्गावः पितरो लिङ्गिनो नृपः ।
यद्वदन्ति वचः स्वप्ने तत्तथैव विनिर्दिशेत् ॥३८॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## यद्वा तद्वा भविष्यति ।

दृश्यताम्—'मर्कटस्य सुरापानम्' इति ।

## यद्विधेर्मनसि स्थितम् ।

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेव स्याद्यद्विधेर्मनसि स्थितम् ॥३९॥
—घटकर्पर—नीतिसारम् ।

## यन्मरणं सोऽस्य विश्रामः ।

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥४०॥
—विष्णुशर्मा—हितोपदेशः ।

## यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः ।

## यवाः प्रकीर्णा न भवन्ति शालयः ।

दृश्यताम्—'न वेशजाताः शुचयस्तथाङ्गनाः' इति ।

---

(क) प्रपा=पानीयशालिका ।
(ख) पयः=जलम्; (पक्षे) क्षीरम् ।
(ग) वारः=जलानि; (पक्षे) सोमादिवासरः ।
(घ) अमृतम्=उदकम्; (पक्षे) पीयूषम् ।

## यशः पुण्यैरवाप्यते ।

मत्स्यादयोऽपि जानन्ति नीरक्षीरविवेचनम् ।
प्रसिद्धमेव हंसस्य यशः पुण्यैरवाप्यते ॥ ४१ ॥
पञ्चभिः कामिता कुन्ती तद्वधूरपि पञ्चभिः ।
सतीं वदति लोकोऽयं यशः पुण्यैरवाप्यते ॥ ४२ ॥
मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि ।
तत्रैव शुक्लपक्षोऽभूत् यशः पुण्यैरवाप्यते ॥ ४३ ॥

## यस्तिष्ठति स बान्धवः ।

उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ४४ ॥

—चाणक्यशतकम् ।

## यस्माच्च येन च—तस्माच्च तेन च ।

यस्माच्च येन च यथा च यदा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च तावच्च तत्र च विधातृवशादुपैति (क) ॥ ४५ ॥

—विष्णशर्मा—हितोपदेशः ।

## यस्माद्वाचो निवर्त्तन्ते ।

यस्माद्वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा बुधः (ख) ॥ ४६ ॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

---

(क) जिस कारण से, जिसके करने से, जिस प्रकार से, जिस समय में, जिस काल तक और जिस स्थान में जो कुछ भला और बुरा अपना कर्म है, उसी कारण से, उसीके द्वारा, उसी प्रकार से, उसी समय में, वही कर्म, उसी काल तक, उसी स्थान में प्रारब्ध के वश से पाता है ।

(ख) दृश्यताम्—'सोऽपि शब्दविवर्जितः' इति ।

## यस्मिन्देशे य आचारः ।

न दोषो मगधे मद्ये अन्ने योनौ कलिङ्गके ।
ओड्रे भ्रातृवधूभोगे गौडे मत्स्यस्य भोजने ॥ ४७॥
दुहितुर्मातुलस्यापि विवाहे द्राविडे तथा ।
यस्मिन्देशे य आचारः स सदाचार उच्यते (क) ॥ ४८॥

## यस्य वर्णस्य यो राजा ।

यस्य वर्णस्य यो राजा स वर्णः सुखमेधते ।
जामदग्न्येन रामेण ब्राह्मणाः भूभुजः कृताः ॥ ४९॥

## यस्य स्मरणमात्रेण ।

यस्य स्मरणमात्रेण लीयन्ते सर्वयातनाः ।
अमृतात्मा स देवो मे जागर्तु हृदि सर्वदा ॥ ५०॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## यस्यार्थाः—यस्यार्थाः—यस्यार्थाः ।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ५१॥

—भगवद्व्यासमुनेः ।

---

(क) मगध देश में मदिरापान करने से कोई दोष नहीं है, कलिङ्ग में अन्न विचार वा योनि विचार नहीं है, उड़ीसा में भ्रातृवधू का उपभोग करने में कोई दोष नहीं है, गौड़ में मत्स्य भोजन करने में कोई दोष नहीं है और द्राविड़ देश में मातुल की कन्या के साथ विवाह करने में कोई आपत्ति नहीं है। अतएव जिस देश में जैसा आचार परम्परा से सिद्ध है वहाँ उसी प्रकार आचरण करना उचित है।

पाठान्तरम्—'यस्मिन्देशे य आचारः स्थाने स्थाने यथा स्थितिः।
तथैव व्यवहर्त्तव्यं पारम्पर्यागतो विधिः' ॥

## यस्यैते करदा भवन्ति सखि ।

काकोलं[१] कलकण्ठिका[२] कुवलयं[३] कादम्बिनी[४] कर्दमः,
कंसारिः[५] कबरी[६] कृपाणलतिका[७] कस्तूरिका कज्जलम् ।
कालिन्दी[८] कषपट्टिका[९] करिघटा[१०] कामारिकण्ठस्थली[११]
यस्यैते करदा भवन्ति सखि ! तद्वन्दे विनिद्रं तमः (क) ॥५२॥

## या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी ।

## या निशा—सा निशा ।

या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः (ख) ॥५३॥

—भगवद्गीता ।

---

(क) तमोवर्णनमित्यनेन श्लोकेन व्यज्यते ।

१=विषभेदः । २=कोकिलः । ३=नीलोत्पलम् । ४=मेघपङ्क्तिः । ५=श्रीकृष्णः । ६=केशपाशः । ७=खड्गलतिका । ८=यमुना । ९=स्वर्णपरीक्षाकरणार्थं शिलाखण्डविशेषः । १०=गजसमूहः । ११=शिवस्य कण्ठे विषस्याधारः ।

ये सब वस्तु नीलवर्ण हैं और अन्धकार भी नीलवर्ण है । अन्धकार नीलता में इन सबों से उत्कृष्ट है । इस कारण इन सब वस्तुओं को 'करदा' अर्थात् 'करप्रदा' कहा है ।

भावार्थ यह है कि हे सखि ! मैं उस निद्रातीत परम उत्कृष्ट कृष्णरूपी अन्धकार को प्रणाम करती हूँ जो इन सब वस्तुओं से बढ़ कर है । उत्कृष्ट को अपकृष्ट कर दिया करते हैं जैसे राजा को प्रजा कर दिया करती है । —रु० ना० घोष ।

(ख) भावार्थ यह है कि साधारण मनुष्यों के लिए आत्मनिष्ठा निशास्वरूप होती है, जिस निशा में इन्द्रियनिग्रहकारी योगीगण जागते हैं । और साधारण मनुष्य विषयनिष्ठा में जागते रहते हैं, वह विषयनिष्ठा आत्मदर्शी मुनियों के लिए निशास्वरूप होती है जिसमें वे नहीं जागा करते हैं अर्थात् सोया करते हैं ।

The sage is awake to truths over which the ordinary man sleeps, *i.e.*, the eyes of the sage are open to truths shut out from the common vision; while *vice-versa* that which is real for the masses is illusion for the sage.

—Dr. Annie Besant.

तथाहि 'रामचरितमानसे'—
'मोहनिशा सब सोवनि हारा । देखिय सपन अनेक प्रकारा ॥
यह जग जामिनि जागहिं जोगी । परमारथी प्रपंच-वियोगी ॥
जानिय तबहिं जीव जग जागा । जब सब विषय-विलास विरागा ॥
होइ विवेक मोह भ्रम भागा । तब रघुनाथ चरण अनुरागा' ॥

—तुलसीदास ।

## या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ।

काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके
मूर्खः पण्डितसङ्गमे न रमते दासो न सिंहासने ।
कुस्त्री सज्जनसङ्गमे न रमते नीचं जनं सेवते
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥५४॥

व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते
हंसः सेवति पद्मिनीं कुसुमितां गृध्रः श्मशानस्थलीम् ।
साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जनं
या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥५५॥

## या—सा—या—सा—या—सा ।

या राका शशिशोभना गतघना सा यामिनी यामिनी
या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी ।
या गोविन्द-रस-प्रमोद-मधुरा सा माधुरी माधुरी
या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ॥५६॥

—भवभूति—गुणरत्नम् ।

## याचनान्तं हि गौरवम् ।

विशाखान्तं गता मेघाः प्रसवान्तं हि यौवनम् ।
प्रणामान्तं सतां कोपो याचनान्तं हि गौरवम् ॥५७॥

---

भोगी मनुष्य रात को बारह बजे तक नाच रंग पान आदि में अपना समय बिताते हैं, और फिर सबेरे उठ कर सात आठ बजे तक सोते रहते हैं। संयमी पुरुष रात को सात आठ बजे तक सो कर मध्य रात्रि में उठ कर ईश्वर का ध्यान करते हैं। साथ ही भोगी पुरुष संसार का प्रपञ्च बढ़ाता है और ईश्वर को भूलता है। उधर संयमी सांसारिक प्रपञ्चों से अनजान रहता है और ईश्वर का साक्षात्कार करता है। इस प्रकार दोनों का मार्ग भिन्न भिन्न है, यह इस श्लोक में भगवान् ने बतलाया है।

—महात्मा गाँधी—अनासक्तियोग।

## यादृशी भावना यस्य ।

देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥५८॥

—हलायुधः—धर्मविवेकः ।

## यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ।

दृश्यताम्—'दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत्' इति ।

## यावज्जीवं च विद्यया ।

अन्नदानात्परं दानं विद्यादानमतःपरम् ।
अन्नेन क्षणिका प्रीतिर्यावज्जीवं च विद्यया (क) ॥५९॥

## यावज्जीवं जडो दहेत ।

अजातमृतमूर्खेभ्यो मृताजातौ वरौ सुतौ ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् (ख) ॥६०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिवाणाः पतन्ति ।

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥६१॥

—विष्णुशर्मा—हितोपदेशः ।

## युक्तियुक्तमुपादेयं वचनं बालकादपि ।

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना (ग) ॥६२॥

---

(क) दृश्यताम्—'अन्नदानात्परं दानम्' इति ।
(ख) दृश्यताम्—'अन्तिमस्तु पदे पदे' इति ।
(ग) 'विदुषापि सदा ग्राह्यं वृद्धादपि न दुर्वचः' इति पाठान्तरम् ।

## युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः ।

युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः ।
रवेरविषयं वस्तु किं न दीपः प्रकाशयेत् ॥६३॥

## युक्तो न ते पिक ! मनागपि मूकभावः ।

सन्तापमुज्झति मही विरजाः समीरः
पान्था नितान्तमुदिता निलयं प्रयान्ति ।
एवङ्गुणे नु नववारिधरागमेऽस्मि–
न्युक्तो न ते पिक ! मनागपि मूकभावः ॥६४॥

## युगधर्मस्य महिमा ।

न यातश्चूर्णत्वं कथमहह ! पाथोधिमथने
न वा भस्मीभूतः स्मरविजयिनो नेत्रशिखिना ।
सुधांशो स्वर्भानोरपि च कवलाज्जीवसि पुन–
र्दुरात्मा दीर्घायुर्भवति युगधर्मस्य महिमा ॥६५॥

## युद्धस्य वार्त्ता रम्याः ।

दृश्यताम्—'त्रीणि रम्याणि दूरतः' इति ।

## युवतिषु स्वाभाविकं मण्डनम् ।

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानाञ्चयः ।
वक्षोजाविभकुम्भसम्भ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥६६॥

—भर्तृहरि—शृङ्गारशतकम् ।

## युष्मत्तो यदि चार्धचन्द्रमलभे प्राप्तं पदं शाम्भवम् ।

धूलीधूसरितः पलालशयनाच्छूली कदन्नाशना—
त्तैलाभाववशात्सदा शिरसि मे केशा जटात्वं गताः ।
गौरेकः स च नैव लाङ्गलवहो भार्या गृहे चण्डिका
युष्मत्तो यदि चार्धचन्द्रमलभे प्राप्तं पदं शाम्भवम् ॥६७॥

## ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने ।

सज्वरो विज्वरो वापि पित्तलः परिभुञ्जयेत् ।
ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने ॥६८॥
निर्वाते ये गुणाः प्रोक्तास्ते गुणाः कर्णवन्धने ।
ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने ॥६९॥
अतीव बलहीनं हि लङ्घनं नैव कारयेत् ।
ये गुणा लङ्घने प्रोक्तास्ते गुणा लघुभोजने ॥७०॥

## ये यथा मां प्रपद्यन्ते ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ ! सर्वशः ॥७१॥

—भगवद्गीता।

## येन वा भवति सुखजातम् ।

दृश्यताम्—'देहि खरनयनशरघातम्' इति ।

## येनाहं स्यां बहुव्रीहिः ।

द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।
तत्पुरुष कर्मधारय येनाहं स्यां बहुव्रीहिः (क) ॥७२॥

---

(क) द्वन्द्वः—यतः स्त्रीपुरुषरूपव्यक्तिद्वयात्मकः, द्विगुः—द्वौ गावौ यस्य सः, अव्ययीभावः—भावः वस्तुमात्रम्, अव्ययी व्ययाभाववान्, मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थः, यद्वा अव्ययीभवनं अव्ययीभावः। तत्पुरुष तत्तस्माद्धेपुरुष ! येनाहं बहुव्रीहिर्बहुधान्यविशिष्टः स्यां तत्कर्म धारयेत्यन्वयः। समासषटकप्रतिपादनमत्र चित्रम्।

—सुभाषितरत्नभाण्डागारम्।

दृश्यताम्—'बहुव्रीहिरहं राजन्' इति।

## येनेष्टं तेन गम्यताम् ।

आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥७३॥
—चाणक्यशतकम् ।

## योऽसावसौ पुरुषः सोऽहमस्मि ।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥७४॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि ।
योऽसावसौ पुरुषः सोऽहमस्मि ॥७५॥
वायुरनिलममृतमथेदं भस्मान्त ँ शरीरम् ।
ॐ क्रतो स्मर कृत ँ स्मर क्रतो स्मर कृत ँ स्मर ॥७६॥
—ईशोपनिषद् ।

## यो जानाति स पण्डितः ।

वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च ।
अकारादि सकारान्तं यो जानाति स पण्डितः (क) ॥७७॥
अर्धचन्द्रसमायुक्तं पुंनाम चतुरक्षरम् ।
ककारादि लकारान्तं यो जानाति स पण्डितः (ख) ॥७८॥
अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखः स्फुटवक्ता च यो जानाति स पण्डितः (ग) ॥७९॥
वने जाता वने त्यक्ता वने तिष्ठति नित्यशः ।
पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः (घ) ॥८०॥
गोपालो नैव गोपालस्त्रिशूली नैव शङ्करः ।
चक्रपाणिः स नो विष्णुर्यो जानाति स पण्डितः (ङ) ॥८१॥
अनेकसुषिरं वाद्यं कान्तं च ऋषिसंज्ञितम् ।
चक्रिणा च सदाराध्यं यो जानाति स पण्डितः (च) ॥८२॥

---

(क) अननस् । (ख) करतालः, वाद्यविशेषः । (ग) लेखपत्रम् । (घ) नौका । (ङ) महोक्षः ।
(च) वल्मीकम् ।

श्यामं च वर्त्तुलाकारं पुंनाम चतुरक्षरम् ।
शकारादि मकारान्तं यो जानाति स पण्डितः (क) ॥८३॥
अर्धचन्द्रवदाकारं स्त्रीनामाथ च त्र्यक्षरम् ।
नकारादि रिकारान्तं यो जानाति स पण्डितः (ख) ॥८४॥
मुखे कृष्णा न मार्जारी द्विजिह्वा न च सर्पिणी ।
पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः (ग) ॥८५॥

## यो जानाति स वैष्णवः ।

आत्मा नारायणो ब्रह्म चात्मैव सकलं जगत् ।
अहं स सोऽहमित्येव यो जानाति स वैष्णवः ॥८६॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## यो न ददाति न भुङ्क्ते ।

यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् ।
तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे (घ) ॥८७॥

## यो बुद्धेः परतस्तु सः ।

दृश्यताम्—'इन्द्रियाणि पराण्याहुः' इति ।

## यो यदिच्छति तस्य तत् ।

एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् (ङ) ॥८८॥

—कठोपनिषद् ।

---

(क) शालग्रामः । (ख) नेवरी । (ग) लेखनी ।

(घ) तृणकृतकपटपुरुषः सस्यरक्षणार्थमुच्चप्रदेशे श्वापदभयहेतुस्तृणादिभिः पुरुषः क्रियत इति प्रसिद्धम् । दृश्यताम्—'तस्य तृतीया गतिर्भवति' इति ।

(ङ) एतत् अक्षरं हि ब्रह्म, एतत् अक्षरम् एव परम्, एतत् अक्षरं हि एव ज्ञात्वा य यत् इच्छति तत् तस्य भवति ।

## यो यस्य मित्रं नहि तस्य दूरम् ।

गिरौ कलापी गगने पयोदो लक्षान्तरेऽर्कश्च जलेषु पद्मम् ।
इन्दुर्द्विलक्षे कुमुदस्य बन्धुर्यो यस्य मित्रं न हि तस्य दूरम् (क) ॥८९॥

—घटकर्पर—नीतिसारम् ।

## यो वेद स परः कविः ।

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः (ख) ॥९०॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## योगस्तडित्तोयदयोरिवास्तु ।

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभा परिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥९१॥

—कालिदास—रघुवंशम् ।

## योगाचाराश्च कीदृशाः ।

के प्रवीणाः कुतो हीनं जीर्णं वासोऽशुमांश्च कः ।
निराकरिष्णवो बाह्यं योगाचाराश्च कीदृशाः (ग) ॥९२॥

—धर्मदास—विदग्धमुखमण्डनम् ।

---

(क) पाठान्तरम्—'गिरौ कलापी गगने च मेघो लक्षान्तरेऽर्कः सलिले च पद्मम् ।
द्विलक्षदूरे कुमुदस्य नाथो यो यस्य मित्रं न हि तस्य दूरम्' ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

(ख) नवेति । श्रोत्रादिपञ्चकं मनोबुद्ध्यहंकाराः स्थूलशरीरं चेति नवद्वाराणीवद्वाराणि विषय-ग्रहणमार्गा यस्मिंस्तत् तिस्रः स्थूणाः स्तम्भा इव विधारका यस्य ते च अविद्या कामः कर्म च वेश्म गृहं देहद्वयात्मकं पञ्चसाक्षिवदुदासीनाः शब्दादयो ग्राह्या यस्मिन् पञ्चभूमिकमिति पाठे पञ्चभूमयः प्रचारस्थानानीति त एव पाञ्चभौतिकमित्यर्वाचीनः पाठ उपेक्ष्यः क्षेत्रज्ञेन चिदात्मना अधिष्ठितमिदं क्षेत्रं तत्त्वेन यो विद्वान् वेद स परः सर्वोत्कृष्टः कविर्ब्रह्मविदित्यर्थः ।

—नीलकण्ठ ।

(ग) अत्रोत्तरं 'विज्ञानवादिनः' । विज्ञा इति प्रथमस्य । नवात् नवीनात् वस्त्रादिति शेषः, नवीनं वस्त्रमासाद्य जीर्णं परित्यजतीति भाव इति द्वितीयस्य । इनः सूर्य इति तृतीयस्य । विज्ञान-वादिनः विशिष्टतत्त्वदर्शिन इत्यर्थ इति चतुर्थस्य । कीदृशाः योगाचाराः योगिनः बाह्यं बहिर्भवं वस्तुजातं निराकरिष्णवः असत्वेनेति शेषः ।

—जीवानन्द विद्यासागर ।

## योगारूढस्तदोच्यते ।

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥६३॥

—भगवद्गीता ।

## योगी सुखं तिष्ठति ।

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
निश्चिन्तं सुखसाध्यभैक्ष्यमशनं शय्या श्मशाने वने ।
मित्रामित्रसमानता पशुपतेश्चिन्ताथ शून्यालये
स्वात्मानन्दमदप्रमोदमुदितो योगी सुखं तिष्ठति ॥६४॥

## योगो भवति दुःखहा ।

नात्यश्नस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥६५॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥६६॥

—भगवद्गीता ।

## योग्यं योग्येन युज्यते ।

भार्या मे नटकी चेयमहञ्च यवनाधमः ।
जामाता हड्डिकश्चैव योग्यं योग्येन युज्यते (क) ॥६७॥

---

(क) किसी यवन के साथ एक नटी का प्रणय होने पर दोनों ने विदेश जाकर अपने को ब्राह्मण कह कर परिचय दिया और किसी ब्राह्मण के घर जाकर वे रहने लगे। वहाँ रहते रहते उस नटी के गर्भ से एक कन्या उत्पन्न हुई। कन्या जब बड़ी हुई तब यवन उसके विवाहार्थ वर खोजने लगा, परन्तु उसे कहीं योग्य वर न मिला। इस कारण उसने जिस ब्राह्मण के घर में वास करता था उसके पुत्र के साथ अपनी कन्या का विवाह कर दिया। उस ब्राह्मण का पुत्र भी वास्तव में ब्राह्मण नहीं था। ब्राह्मण की रक्षिता हाड़ी जात की एक स्त्री के गर्भ से उसका जन्म हुआ था।

विवाह के कुछ दिन अन्तर एक दिन दोनों संबन्धी परस्पर वार्त्तालाप कर रहे थे, इतने में सायंकाल हो जाने पर छद्मवेषी यवन ने सन्ध्या वन्दना का बहाना कर अपने संबन्धी से विदा होने की प्रार्थना की। तब ब्राह्मण हँस कर बोला, "हे महाशय! तुम्हें अब संध्या

## योगः कर्मसु कौशलम् ।

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥९८॥

—भगवद्गीता ।

## योजकस्तत्र दुर्लभः ।

अमन्तमक्षरं नास्ति नास्ति मूलमनौषधम् ।
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥९९॥

## (मातुः) यौवनवनच्छेदे कुठारा वयम् ।

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारी पीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुःकेवलमेव यौवनवनच्छेदे कुठारा वयम् ॥१००॥

—भर्तृहरि—वैराग्यशतकम् ।

## यौवने च मृता भार्या ।

द्रश्यताम्—'पातकं किमतःपरम्' इति ।

## यं ज्ञात्वा मुच्यते जन्तुः ।

द्रश्यताम्—'इन्द्रियेभ्यः परं मनः' इति ।

## यः पश्यति सः पश्यति ।

द्रश्यताम्—'एकं सांख्यं च योगं च' इति ।

---

वन्दना का क्या प्रयोजन है ? तुम तो जातिच्युत हो गए। जिस पुत्र को तुमने कन्यादान किया है वह हाड़िनी के गर्भ से उत्पन्न हुआ है"। संबन्धी के इस वचन को सुनकर यवन हँस कर बोला, "महाशय ! इस चतुराई में आप ही की पराजय है। योग्य के साथ योग्य का सम्मेलन हुआ है। मेरी भार्य्या नटी है और मैं स्वयं यवन हूँ, अब मेरा जामाता हाड़ी हुआ। इस कारण विधाता ने योग्य कन्या का योग्य वर के साथ मेल करा दिया"।

## यः पश्यति सः पण्डितः ।

दृश्यताम्—'आत्मवत्सर्वभूतेषु' इति ।

## यः पश्यति स वैष्णवः ।

तिर्य्यगूर्ध्वमधस्ताच्च सर्वं विष्णुमयं जगत् ।
तन्मयेनैव भावेन यः पश्यति स वैष्णवः ॥१०१॥
हृदयेऽनाहते चक्रे कृष्णमोङ्काररूपिणम् ।
अव्यक्तं ध्यानयोगेन यः पश्यति स वैष्णवः (क) ॥१०२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## यः प्रयाति स जीवति ।

चिरकालं वने वासश्चलद्वृक्षं न पश्यति ।
अविचारपुरीदोषाद्यः प्रयाति स जीवति (ख) ॥१०३॥

---

(क) हृदय के बीच में एक चक्र है जिसे 'अनाहतचक्र' कहते हैं। योगशास्त्रकारों ने शरीर के भीतर जो ६ प्रकार के चक्र (षट्चक्र) निर्देश किए हैं उनमें चौथे चक्र का नाम 'अनाहत-चक्र' है। इसके द्वादश दल अर्थात् पत्र हैं और इसकी प्रभा अरुणोदय के समान है। इस चक्र के बीच में असंख्य सूर्य्य के समान तेजोमय ओंकाररूपी ब्रह्म विराजमान है। "आघात" अर्थात् ताड़न विना यह ओंकार शब्द अव्यक्त भाव से स्वतः ही उठा करता है, इस कारण इसे 'अनाहत' कहते हैं और इसी अनाहत शब्द के आधार को 'अनाहतचक्र' कहते हैं, जिसका निगूढ़ स्थान हृदय है। परमानन्दनिकेतन शिवमय ओंकाररूपी परमात्मा इसी निभृत गुहा के मध्य में स्थित है। वह सब के हृदय में स्थित होने पर भी समाधि विना उसका साक्षात्कार नहीं होता है। मुमुक्षु योगी महायोग में निमग्न हो कर उसी अव्यक्त ओंकार-रूपी ब्रह्म का हृदय के मध्य में दर्शन करते हैं और उसकी मानसी पूजा किया करते हैं। षट्चक्र यथाः—

(१) आधारचक्र—चतुर्दलपद्म पायुदेश के कुछ ऊपर।
(२) स्वाधिष्ठानचक्र—षट्दलपद्म लिङ्गमूल में।
(३) मणिपुरचक्र—दशदलपद्म नाभिमूल में।
(४) अनाहतचक्र—द्वादशदलपद्म हृदय में।
(५) विशुद्धचक्र—षोडशदलपद्म कण्ठदेश में।
(६) आज्ञाचक्र—द्विदलपद्म भ्रूमध्य में।

इस आज्ञाचक्र के ऊपर ब्रह्मरन्ध्रस्थित सहस्रदलपद्म है जिसके भीतर परब्रह्म शिव की स्थिति है।

(ख) एक व्याध कपोत पकड़ने के निमित्त वृक्ष की शाखाओं में अपने शरीर को छिपा कर हाथ में जाल लिए हुए आगे को बढ़ रहा था। यह देख कर एक बुड्ढा कबूतर बोला "मैं इस बन में अनेक दिन से वास करता हूँ, परन्तु मैंने कभी चलता हुआ वृक्ष नहीं देखा। सुतरां अविचारपुरी दोष से जो भागता है वही बचता है"।

## यः प्रियः प्रिय एव सः ।

प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः (क) ॥१०४॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## यः सेव्यमानो रिपुतामुपैति ।

दृश्यताम्—'अयं त्वपूर्वप्रतिमाविशेषः' इति ।

---

# र

## रक्षन्ति पुण्यानि पुराकृतानि ।

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥१॥
—भर्तृहरि—नीतिशतकम् ।

## रक्ष्यते—रक्ष्यते—रक्ष्यते ।

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते (ख) ॥२॥
मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः (ग) ।
अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचेलतः ॥३॥
—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## रङ्कं करोति राजानम् ।

रङ्कं करोति राजानं राजानं रङ्कमेव च ।
धनिनं निर्धनं चैव निर्धनं धनिनं तथा (घ) ॥४॥

---

(क) दृश्यताम्—'कायः कस्य न वल्लभः' इति ।
(ख) योगेन=अभ्यासेन । मृजया=उद्वर्त्तनेन ।
(ग) अनुक्रमः=व्यायामशिक्षादिः ।
(घ) तथाहि प्रकारान्तरम्—'सपने होइ भिखारि नृप रंक नाकपति होइ ।
जागे लाभ न हानि कछु तिमि प्रपंच जिय होइ' ॥
—तुलसीदास ।

## रजकः किं करिष्यति ।

किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ५॥

—चाणक्यशतकम् ।

## रजसा शुध्यते नारी ।

दृश्यताम्—'पन्था वातेन शुध्यति' इति ।

## रतिपुत्रफला दारा ।

दृश्यताम्—'फलं—फला—फलं—फला' इति ।

## रत्नाकरः किं कुरुते स्वरत्नैः ।

दृश्यताम्—'परोपकाराय सतां विभूतिः' इति ।

## रत्नानि वै वररुचिर्नव विक्रमस्य ।

धन्वन्तरि–क्षपणकामरसिंह–शङ्कु–वेतालभट्ट–घटकर्पर–कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ ६॥

## रत्नं—रत्नं—रत्नम् ।

गले रत्नं गानं गगनतलरत्नं दिनमणि—
र्निशारत्नं चन्द्रः शयनसुखरत्नं शशिमुखी ।
सभारत्नं विद्या सकलसुखरत्नं हरिकथा
नदीरत्नं गङ्गा नृपतिकुलरत्नं रघुपतिः (क) ॥ ७॥

---

(क) पाठान्तरम्—'कलारत्नं गीतं गगनतलरत्नं दिनमणिः
सभारत्नं विद्वाञ्श्रवणपुटरत्नं हरिकथा ।
निशारत्नं चन्द्रः शयनसुखरत्नं शशिमुखी
महीरत्नं श्रीमाञ्जयति रघुनाथो नृपवरः' ॥

## रथः शरीरं पुरुषस्य ।

रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः (क) ॥८॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## रमन्ति मूढा विरमन्ति पण्डिताः ।

अमेध्यपूर्णे कृमिजालसङ्कुले स्वभावदुर्गन्धिविनिन्दितान्तरे ।
कलेवरे मूत्रपुरीषभाविते रमन्ति मूढा विरमन्ति पण्डिताः ॥९॥
—योगोपनिषद् ।

## रमन्ते तत्र सम्पदः ।

दृश्यताम्—'अप्रियस्यापि पथ्यस्य परिणामः सुखावहः' इति ।

## रमन्ते योगिनो यत्र

रमन्ते योगिनो यत्र परानन्दे चिदात्मनि ।
अतो रामपदेनासौ परं ब्रह्माभिधीयते ॥१०॥
—पद्मपुराणम् ।

## रम्याणि स्थलगौरवेण कतिचिद्वस्तूनि

माकन्दं मकरन्दतुन्दिलममुं गाहस्व काक ! स्वयं (ख)
कर्णारुन्तुदमन्तरेण रणितं त्वां मन्महे कोकिलम् ।
रम्याणि स्थलगौरवेण कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालमिलिते पङ्के न शङ्कते कः ॥११॥

## रम्यं सरो निर्मितम् ।

बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं
श्रोणीतीर्थशिला च नेत्रशफरं धम्मिल्लशैवालकम् ।
कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलै—
र्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥१२॥
—कालिदास—शृङ्गारतिलकम् ।

---

(क) दृश्यताम्—'आत्मानं रथिनं विद्धि' इति ।
(ख) माकन्द=आम्र । मकरन्दतुन्दिल=पुष्परस से व्याप्त ।
गाहस्व=इसमें गोता लगाओ अर्थात् रमण करो ।
गाहस्व काक स्वयम्=हे कौवे ! तू खुद (ऐसे आम्र में) क्रीड़ा कर ।

## रवौ भृगौ चोत्तरमर्थलाभः ।

दृश्यताम्—'अङ्गारपूर्वे गमने च लाभः' इति ।

## रसय परमानन्दमनिशम् ।

तृषाशान्त्यै भ्रान्तो भ्रमसि किमु घोरे भवमरौ
न जानीषे जीव ! स्वगृहगतमेवामृतनिधिम् ।
सुषुम्नानिःश्रेण्या सुखमधिगतो ब्रह्मविवरं
सुधाधारे चक्रे रसय परमानन्दमनिशम् (क) ॥ १३॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

(क) ईश्वर ने मानवदेह को जैसे आधिभौतिक भाव से उसी प्रकार आध्यात्मिक भाव से बनाया है। इस कारण मनुष्यशरीर जैसे आधिभौतिक प्रक्रियाओं में उपयोगी है उसी प्रकार आध्यात्मिक प्रक्रियाओं में भी उपयोगी है। शास्त्रकारों ने कहा है:—

'एवंविधे तु देहेऽस्मिन्मलसञ्चयसंवृते ।
प्रसाधयन्ति धीमन्तो भुक्तिं मुक्तिमुपायतः' ॥

—इति रत्नाकरे।

अर्थात्, इस नाड़ीचक्रादिघटित मलमूत्रादिसमाकीर्ण भौतिक देह में भगवान् ने एक ऐसी शक्ति दी है जिसके द्वारा ज्ञानी पुरुष भोग और मोक्ष दोनों का साधन कर सकते हैं। आध्यात्मिक प्रक्रिया के साधन के निमित्त योगशास्त्रकारों ने देहतत्त्व को ६ भागों में विभक्त किया है। इन्हीं ६ भागों को 'षट्चक्र' कहते हैं। पायु और उपस्थ के मध्यस्थल में चतुर्दल पद्माकार चक्र का नाम 'आधारचक्र' है। कुण्डलिनी नामक ब्रह्मशक्ति का यह आधार-स्वरूप है, इसी से इसका नाम 'आधारचक्र' है। मृणालसूत्र के समान कोमल और सूक्ष्म शिरः स्थित ब्रह्मरन्ध्र के मध्य में पद्माकार 'सहस्रदल' चक्र है। यह चक्र सुधा का आधार है। इस स्थान से अमृतवाहिनी नाड़ी हो कर अविरत अमृतधारा का प्रवाह देह की रक्षा करता है। उसी अमृतवाहिनी नाड़ी का नाम सुषुम्ना है। सुषुम्ना नाड़ी आधारचक्र से ब्रह्मरन्ध्र पर्यन्त विस्तृत है। जैसे बाजीगर रस्सी के सहारे ऊपर उठ कर नृत्यगीतादि क्रीड़ा दिखाता है और उसी रस्सी के द्वारा नीचे उतर आता है, उसी प्रकार जीवात्मा भी प्राणवायु का अवलम्बन कर सुषुम्नारूप रज्जु द्वारा ऊर्ध्वस्थित ब्रह्मरन्ध्र में उठ कर उसी सुधा के आधार सहस्रदल चक्र में निमग्न होता है। वहाँ निमग्न होते ही जीवात्मा परमानन्द भोग करता हुआ अनेक प्रकार के सात्त्विक विलासों को प्रकाश करता है; तदनन्तर सुषुम्नारूप रज्जुद्वारा पुनः नीचे उतर आता है।

## रसवर्णादिभेदवत् ।

नानोपाधिवशादेव जातिनामाश्रयादयः ।
आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ १४ ॥

—शङ्कराचार्य—आत्मबोधः ।

## रसाल ! जानीहि तवैव भृङ्गाः ।

कुन्दे कदम्बे कुमुदेऽरविन्दे यथाकथञ्चित्समयं नयन्ति ।
प्राप्ते वसन्ते पुनरुत्तरङ्गा रसाल ! जानीहि तवैव भृङ्गाः ॥ १५ ॥

## राजसेवा मनुष्याणाम् ।

राजसेवा मनुष्याणामसिधारावलेहनम् ।
पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥ १६ ॥

## राजा—राजा—राजा

राजाबन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा माता पिता चैव सर्वस्यार्त्तिहरो गुरुः ॥ १७ ॥

## राजा दूतमुखो यतः ।

दृश्यताम्—'उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा' इति ।

## राजा पश्यति कर्णाभ्याम् ।

दृश्यताम्—'पश्यति—पश्यन्ति—पश्यति—पश्यन्ति' इति ।

## राजा प्रकृतिरञ्जनात् ।

यथा प्रह्लादनाच्चन्द्रः प्रतपात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो (क) राजा प्रकृतिरञ्जनात् ॥ १८ ॥

—कालिदास—रघुवंशम् ।

---

(क) अभूदन्वर्थः=सार्थकराजशब्दोऽभूत् ।

राजा मित्रं केन दृष्टं श्रुतं व ।

दृश्यताम्—'केन दृष्टं श्रुतं वा' इति ।

राज्यं (नश्यति) प्रमत्तसचिवस्य नराधिपस्य ।

स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टेन्द्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥१९॥

—विष्णुशर्मा—हितोपदेशः ।

रात्रिः कालयुगोपमा विच्छेदतो मे तव ।

रात्रिः कालयुगोपमा मलयजो गन्धानिलः किं विषं
सोमः सूर्य इवाभवन्मलयजालेपः स्फुलिङ्गोपमः ।
तिक्तः सुस्वरगीतवाद्यपरभृत्पारावतादिध्वनि—
र्वज्रस्याहतिरेव कर्णयुगले विच्छेदतो मे तव ॥२०॥

—विह्लण—विद्यासुन्दरम् ।

राधिकैका न चान्या ।

का कृष्णस्य प्रणयजनिभूः श्रीमती राधिकैका
कास्य प्रेयस्यनुपमगुणा राधिकैका न चान्या ।
जैह्मं (क) केशे दृशि तरलता निष्ठुरत्वं कुचेऽस्या
वाञ्छापूर्तै प्रभवति हरे राधिकैका न चान्या ॥२१॥

—चैतन्यचरितामृते—श्रीगोविन्दलीलामृतम् ।

राधे त्वयि विपरीतम् ।

जाता लता हि शैले जातु लतायां न जायते शैलः ।
राधे ! त्वयि विपरीतं कनकलतायां गिरिद्वयं जातम् (ख) ॥२२॥

---

(क) जैह्मं = कुटिलता ।

(ख) पाठान्तरम्—'अधुना तद्विपरीतं कनकलतायां शैलयुगं जातम्' इति । अद्भुतरसात्मकः श्लोकोऽयम् ।

## रामरामेऽतिरामेऽतिरमे रामे मनोरमे ।

रामरामेऽतिरामेऽतिरमे रामे मनोरमे ।
सहस्रनामतत्तुल्यं रामनाम वरानने ! (क) ॥२३॥

—पद्मपुराणम् ।

## रामरावणयोर्युद्धं रामरावणयोरिव ।

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥२४॥

## रामाय तस्यै नमः ।

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम ! मामुद्धर ॥२५॥

## रामं सत्यं परब्रह्म ।

रामं सत्यं परब्रह्मं रामात्किञ्चिन्न विद्यते ।
तस्माद्रामस्वरूपोऽहं सत्यं सत्यमिदं जगत् ॥२६॥

## रामः किं भ्रमते वनम् ।

कर्मणो हि प्रधानत्वं किं कुर्वन्ति शुभा ग्रहाः ।
वसिष्ठदत्तलग्नोऽपि रामः किं भ्रमते वनम् ॥२७॥

---

(क) हे वरानने ! अहं रामे अतिरमे, कथंभूते रामे, अतिरामे अतिक्रान्ता रामा येनासौ तस्मिन् शुद्धे ब्रह्मणि। पु० क० मनोरमे मनो रमयतीति तस्मिन्, कथंभूतः अहम्, रामराः राम एव रा द्रव्यं यस्य सः, यतः कारणान्मे मम सहस्रनामभिस्तुल्यं रामनाम अत इति कारणात्। अथवा अहं रामे अतिरमे, कथंभूते रामे, वरानने वरमाननं यस्यासौ तस्मिन्। पार्वत्याः संबोधनं वा, कथंभूतं रामनाम, सहस्रनामतत् सहस्रनाम तनोतीति सहस्रनामतत्।

तथाहि पद्मपुराणे—

'रमन्ते योगिनो यत्र परानन्दे चिदात्मनि।
अतो रामपदेनासौ परब्रह्माभिधीयते' ॥

—सुभाषितरत्नभाण्डागारम्।

## रावणः कीदृशो वद ।

सानुजः काननं गत्वा नैकषेयाञ्जघान कः ।
मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद (क) ॥२८॥

## रिक्तपाणिर्न पश्येत् ।

इष्टां भार्यां प्रियं मित्रं पुत्रं चातिकनीयसम् ।
रिक्तपाणिर्न पश्येत्तु तथा नैमित्तिकं नरम् ॥२९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

अग्निहोत्रं गृहं क्षेत्रं मित्रं भार्यां सुतं शिशुम् ।
रिक्तपाणिर्न पश्येद्राजानं देवतां गुरुम् ॥३०॥

## रिक्तपाणिस्तु नो पश्येत ।

रिक्तपाणिस्तु नो पश्येद्राजानं देवतां गुरुम् ।
नैमित्तिकं विशेषेण फलेन फलमादिशेत् (ख) ॥३१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ।

आपद्गतं हससि किं द्रविणान्ध मूढ !
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥३२॥

## रुतमिह सहते को दंशनाशङ्किचेताः ।

सुललितमपि काव्यं याचकैर्वाच्यमानं
धनवितरणभीत्या नाद्रियन्ते धनाढ्याः ।
कलमपि मशकानां मञ्जुगुञ्जन्मुखानां
रुतमिह सहते को दंशनाशङ्किचेताः ॥३३॥

---

(क) अत्रोत्तरं, रामः दाशरथिः प्रथमस्य, राक्षसोत्तमः राक्षसानां मध्ये उत्तमः श्रेष्ठः द्वितीयस्य ।
(ख) पाठान्तरम्—'रिक्तपाणिर्न पश्येद्राजानं देवतां गुरुम् ।
दैवज्ञं पुत्रकं मित्रं फलेन फलमादिशेत् ॥

## रुराव कान्ते ! पवनाशनादः ।

स्वयोनिभद्ध्वजसम्भवानां श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोऽरिविम्बप्रतिविम्बधारी रुराव कान्ते ! पवनाशनादः (क) ॥३४॥

—विल्लण—विद्यासुन्दरम् ।

## रूपे तरुण्या भयम् ।

## रूपं रूपं प्रतिरूपो वहिश्च ।

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥३५॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो वहिश्च ॥३६॥

—कठोपनिषद् ।

## रे जीव ! रोदिषि कियच्चिरं वा ।

स्रोतस्वती वहति चेन्नयनप्रवाहैः शोकस्य हन्त ! न तथाप्यवसानमस्ति ।
रे जीव ! रोदिषि भवेऽत्र कियच्चिरं वा तूर्णं मुरारिपदमाश्रय शोकहारि ॥३७॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## रेजे ग्रहमयीव सा ।

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा (ख) ॥३८॥

—भर्तृहरि—शृङ्गारशतकम् ।

---

(क) दृश्यताम्—'पद्येन कोऽयं वद रौति शैले' इति यस्योत्तरे उपर्युक्तः श्लोकः कथितः। अस्यार्थः—हे कान्ते ! गिरिगह्वरस्थः पर्वतगुहावर्त्ती, पवनाशनान् सर्पान् अत्तीति तथोक्तः मयूर इत्यर्थः, स्वस्य आत्मनः योनयः कारणानि काष्ठानीति भावः भक्षयतीति तथोक्तः अग्निरित्यर्थः तस्य ध्वजः धूमः तत्सम्भवानां मेघानामित्यर्थः, निनादं श्रुत्वा तमसां अरिविम्बश्चन्द्रः तस्य प्रतिविम्बधारी मेचकधारीत्यर्थः विस्तारितपिच्छ इति यावत् रुराव दध्वान।

—जीवानन्द विद्यासागर।

(ख) सा कान्ता गुरुणा महता (पक्षे) बृहस्पतिना स्तनभारेण च, भास्वता कान्तिमता सूर्य्येण च, मुखचन्द्रेण मुखेन चन्द्रेणेव तथा शनैश्चराभ्यां मन्दगतिभ्यां (पक्षे तदाख्यग्रहाभ्याञ्च) पादाभ्यां चरणाभ्यां ग्रहमयीव गुरुचन्द्रसूर्य्यशनैश्चरग्रहस्वरूपेव रेजे शुशुभे।

## रेजे रत्नमयीव सा ।

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा (क) ॥३९॥

—भर्तृहरि—शृङ्गारशतकम् ।

## रेतः शोणितयोरियं परिणतिः ।

रेतःशोणितयोरियं परिणतिर्यद्वर्ष्म तच्चाभव—
न्मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः ।
जानन्नप्यवशी विवेकविरहान्मज्जन्नविद्याम्बुधौ
शृङ्गारीयति पुत्रकाम्यति बत क्षेत्रीयति स्त्रीयति ॥४०॥

—शान्तिशतकम् ।

## रोगानिव रसायनम् ।

एवं निरन्तरं कृत्वा ब्रह्मैवास्मीति वासना ।
हरत्यविद्याविक्षेपान्रोगानिव रसायनम् ॥४१॥

—शङ्कराचार्य—आत्मबोधः ।

## रोगी च देवताभक्तो ।

द्रश्यताम्—'अशक्तस्तस्करः साधुः' इति ।

## रोगोऽयं विषमस्तवैषः ।

स्फीतोऽयं (ख) जठरः स्तनौ गुरुतरौ श्यामे च मे चूचुके
को रोगो वद वैद्यराज ! विधवे किं भोः कुपथ्यं कृतम् ? ।
एकः कोऽपि युवा किमेव कृतवान्नाभेरधस्तान्नु मे (ग)
रोगोऽयं विषमस्तवैष दशमे मासि स्वयं यास्यति ॥४२॥

---

(क) सा कान्ता चन्द्रकान्तेन चन्द्रवत् रमणीयेन तदाख्यमणिना च, महानीलैः अति नीलवर्णैः नीलकान्तमणिभिश्च शिरोरुहैः केशैः तथा पद्मरागाभ्यां पद्मवत् रागः कान्तिर्ययोस्तादृशाभ्यां तदाख्यरत्नाभ्याञ्च पाणिभ्यां भुजाभ्यां रत्नमयीव चन्द्रकान्तनीलकान्तपद्मरागरत्न—स्वरूपेव रेजे शुशुभे। —जीवानन्द विद्यासागर।

(ख) 'उच्चोऽयं' इति पाठान्तरम्।

(ग) 'अधस्तात्पुरा' इति पाठान्तरम्।

# ल

## लक्ष्मीरिवाभाति नरेश ! ते सभा ।

पद्मानना पद्मपलाशलोचना पद्मच्छविः पद्मकरामलांशुका ।
पद्मीशनाथैः परिशीलनीया लक्ष्मीरिवाभाति नरेश ! ते सभा (क) ॥१॥

## लक्ष्मीर्वसति जिह्वाग्रे ।

दृश्यताम्—'जिह्वाग्रे—जिह्वाग्रे—जिह्वाग्रे' इति ।

## लक्ष्मीवन्तो न जानन्ति ।

लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभरक्लान्ते शेते नारायणः सुखम् ॥२॥

## लक्ष्मीः स्वयं वाञ्छति वासहेतोः ।

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढनिश्चयं च लक्ष्मीः स्वयं वाञ्छति वासहेतोः (ख) ॥३॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## लक्ष्यं तदेवाक्षरं सोम्य ! विद्धि ।

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धीयत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य ! विद्धि ॥४॥

—मुण्डकोपनिषद् ।

---

(क) राजसभावर्णनमित्यनेन श्लोकेन ध्वन्यते ।
पद्मीशनाथैः=हस्तिनाथैः ।

(ख) पाठान्तरम्—'शूरं कृतज्ञं दृढसौहृदञ्च लक्ष्मीः स्वयं याति निवासहेतोः' ।

—विष्णुशर्मा—हितोपदेशः ।

## लब्धव्यमर्थं लभते मनुष्यः ।

लब्धव्यमर्थं लभते मनुष्यो देवोऽपि तं वारयितुं न शक्तः ।
अतो न शोचामि न विस्मयो मे ललाटलेखो न पुनः प्रयाति (क) ॥५॥

---

(क) पाठान्तरम्—'प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम्' ॥

'लब्धव्यमर्थं लभते मनुष्यः' इति इस श्लोक के विषय में यह आख्यायिका है:—

महाराज विक्रमादित्य के राज्य में एक ब्राह्मण वास करता था। ब्राह्मण के सन्तान होते ही मर जाते थे। इस कारण ब्राह्मण ने अनेक प्रकार के पूजा पाठ किए। परन्तु अनुष्ठान निष्फल होने से उसने राजा को समस्त वृत्तान्त से विदित किया। विक्रमादित्य ने ब्राह्मण के दुःख की वार्त्ता सुन कर कहा "अतः पर यदि पुत्र उत्पन्न हो तो छठे दिन सूतिका षष्ठी के पहिले मुझे खबर देना"। यथासमय ब्राह्मण के एक पुत्र हुआ, तब उसने राजा को छठे दिन संवाद दिया। विक्रमादित्य ब्राह्मण के मकान जाकर सूतिकागृह के द्वारदेश पर लेट रहे। अर्धरात्र के समय विधाता पुरुष उस बालक की भाग्यलिपि लिखने के निमित्त वहाँ जाकर उपस्थित हुआ और गृहप्रवेशमार्ग न पाकर राजा को द्वार छोड़ने के लिए कहा। विक्रमादित्य ने कहा "आप इस बालक के अदृष्ट में जो कुछ लिखियेगा वह लौटते समय कहते जाइयेगा, इस प्रकार की आप जो प्रतिज्ञा करें तो मैं रास्ता दे सकता हूँ"। विधातापुरुष ने ऐसा ही स्वीकार कर गृहप्रवेश किया और बालक के अदृष्ट का फलाफल लिपिबद्ध कर लौटते समय कह गया कि बालक की आयु एक वर्ष मात्र है। यह सुन कर राजा ने विधाता-पुरुष की अनेक प्रकार स्तुति कर उस बालक के निमित्त दीर्घजीवन की प्रार्थना की। तब विधातापुरुष ने कहा 'मैं एक श्लोक के प्रथम पाद का कुछ अंश कहता हूँ। जब कोई इस श्लोक को पूर्ण कर देगा तब वह बालक पुनर्जीवित हो कर दीर्घायु होगा"। राजा ने भी प्रातः काल होते ही उठ कर ब्राह्मण को आश्वासन दे कर प्रस्थान किया। एक वर्ष व्यतीत होने पर ब्राह्मण के पुत्र की मृत्यु हो गई। राजा को यह संवाद मिलते ही वह ब्राह्मण के घर पहुँचे और ब्राह्मण के पुत्र के मृतदेह को अपने कंधे पर डाल कर देश भ्रमण को निकले और सब समय 'लब्धव्यमर्थम्' यही पद उच्चारण करने लगे। कुछ दिनों के अनन्तर किसी राज्य में पहुँच कर एक ब्राह्मण के घर में रहने लगे। उस ब्राह्मण के पास उसी देश के राजा, मन्त्री, सेठ और द्वारपाल इन चारों की कन्याएँ पढ़ती थीं। एक समय ब्राह्मण अपने युवा पुत्र को पढ़ाने के निमित्त नियुक्त करके किसी अन्य स्थान में चला गया। ब्राह्मण के पुत्र ने उसी दिन अपने शिष्याओं को पढ़ाकर उनसे कहा—"तुम्हारी शिक्षा समाप्त हुई, अब गुरुदक्षिणा दो"। जब उन्होंने गुरुदक्षिणा देने की प्रतिज्ञा की तब ब्राह्मणकुमार ने कहा "तुम चारों मुझे अपना पति बना लो"। कन्याएँ यह सुन कर अत्यन्त दुःखी हुईं, परन्तु पूर्वप्रतिज्ञापाश में बद्ध होने के कारण अगत्या बोलीं "आप आज रात्रि को अमुक मन्दिर में मिलियेगा, हम सब वहाँ जाकर आपके गले में वरमाला पहनावेंगी"। यह स्थिर कर कन्याएँ चली गईं। छद्मवेषधारी विक्रमादित्य समीप से यह सब बातें सुन रहे थे। उन्होंने ब्राह्मणपत्नी के निकट जाकर उनसे सब वृतान्त कहा। ब्राह्मणी ने अपने पुत्र का बहुत तिरस्कार कर उसे एक

## लभेमहि तदा वयं सकलतीर्थयात्राफलम् ।

श्रुतिर्नु मणिकर्णिका विमलचन्द्रभागं मुखं
करौ सुदति ! पुष्करौ सुमुखि ! ते प्रभासो रदाः ।
वचः किल सरस्वती भवसि चेत्त्वणं नर्मदा
लभेमहि तदा वयं सकलतीर्थयात्राफलम् ॥६॥

## लभ्यानि चत्वारि तदन्तकाले ।

पतिव्रतायाः कुचकुम्भयुग्ममत्युग्रशार्दूलनखावलिश्च ।
वीरस्य शस्त्रं कृपणस्य वित्तं लभ्यानि चत्वारि तदन्तकाले ॥७॥

## ललाटलिखिता रेखा न शक्या परिमार्जितुम् ।

हरिणापि हरेणापि ब्रह्मणापि सुरैरपि ।
ललाटलिखिता रेखा न शक्या परिमार्जितुम् ॥८॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## ललाटलेखो न पुनः प्रयाति ।

दृश्यताम्—'लब्धव्यमर्थं लभते मनुष्यः' इति ।

---

घर में बन्द कर दिया। इधर विक्रमादित्य निर्दिष्ट समय पर मन्दिर के भीतर जा बैठे। यथासमय जब राजकन्या ने उपस्थित हो कर राजा को सम्बोधन किया, तब राजा ने केवल "हूँ" कह कर उत्तर दिया। राजकन्या ने भी कुछ न विचार कर उन्हीं के गले में वरमाला पहना दी। तब विक्रमादित्य बोल उठे "लब्धव्यमर्थम्"। राजकन्या को अपना भ्रम समझ पड़ा, परन्तु अब क्या उपाय था। तब वह अपने माथे पर कराघात कर बोल उठी "लब्धव्यमर्थं लभते मनुष्यः"। अतः पर मन्त्रिकन्या ने आकर वरमाला अर्पण की तब राजा ने कहा 'लब्धव्यमर्थं लभते मनुष्यः'। मन्त्रिकन्या ने इसके उत्तर में कहा "देवोऽपि तं वारयितुं न शक्तः"। इसी प्रकार से वैश्यकन्या ने भी आकर माला पहनाई। तब राजा ने उक्त दो पदों की आवृत्ति की। तब वैश्यकन्या ने कहा "अतो न शोचामि न विस्मयो मे"। तदनन्तर द्वारपाल की कन्या ने आकर माला पहनाई। तब राजा ने कविता के तीन पदों की आवृत्ति की। यह कहते ही वह बोल उठी "ललाटलेखो न पुनः प्रयाति"। इस प्रकार से श्लोक का शेषपाद पूर्ण होते ही ब्राह्मणपुत्र जीवित हो गया। तब राजा अपना परिचय देकर चारों स्त्रियों सहित अपने राज्य को लौट गए। इस श्लोक का तात्पर्य यह है कि भाग्य में जो होता है वही होता है। देवता भी उसके विरुद्ध नहीं कर सकते हैं। अतएव शोक वा आश्चर्य का विषय कुछ नहीं है। ललाटलिपि किसी प्रकार से मिट नहीं सकती।

## लवणो रस उत्तमः ।

ख्यातः सर्वरसानां हि लवणो रस उत्तमः ।
गृहीतं च विना तेन व्यञ्जनं गोमायते ॥९॥

—विष्णुशर्मा—हितोपदेशः ।

## लाभः परं गोवधः ।

शुण्ठीगोक्षुरयोर्विचार्य मनसा कल्काशनं यन्मया
उक्तं तद्विपरीतकं कृतमहो गोःखूरमात्रं ददौ ।
नार्यो मूर्खजनालये न च सुखं नो वा यशो लभ्यते
सद्वैद्ये कविभूपतौ हरिहरे लाभः परं गोवधः (क) ॥१०॥

—हलायुध—धर्मविवेकः ।

## लालापानमिवाङ्गुष्ठे ।

दृश्यताम्—'असारे खलु संसारे' इति ।

## लिखितमपिललाटे प्रोज्झितुं कः समर्थः ।

स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी ।
विधुरपि विधियोगाद्ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः (ख) ॥११॥

—विष्णुशर्मा—हितोपदेशः ।

## लिप्यते न स पापेन ।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१२॥

—भगवद्गीता ।

---

(क) किसी वैद्य ने एक मूर्ख रोगी को सोंठ और गोक्षुर (गोखरू) का काढ़ा सेवन करने को कहा। मूर्ख रोगी ने गोहत्या कर उसका खुर सेवन किया। वैद्य ने जब इस बात को जाना तब उसने दुःखी होकर कहा "मैंने तो सोंठ और गोखरू के काढ़े की व्यवस्था दी थी, परन्तु तुमने इसके विपरीत अर्थात् गोहत्या कर उसका खुर सेवन किया। इस कारण मूर्ख के निकट अर्थ, सुख, वा यश, किसी वस्तु के भी लाभ की आशा नहीं है। मैं हरिहर नामक सद्वैद्य और श्रेष्ठ चिकित्सक हूँ। मुझे गोहत्या के पाप का भागी होना पड़ा। मूर्ख के संसर्ग से केवल यही लाभ हुआ"।

(ख) दृश्यताम्—'तत्प्रोज्झितुं कः क्षमः' इति।

## लुब्धानां याचकः शत्रुः ।

## लोकत्रयं जयति कृत्स्नमिदं स वीरः ।

कान्ताकटाक्षविशिखा न खनन्ति यस्य चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशा लोकत्रयं जयति कृत्स्नमिदं स वीरः ॥१३॥

—भर्तृहरि—नीतिशतकम् ।

## लोकत्रयं (भाति) भानुना ।

नागो भाति मदेन कं जलरुहैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मन्दिरम् ।
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं भानुना ॥१४॥

—पञ्चरत्नम् ।

## लोकस्तथाप्यहितमाचरतीति चित्रम् ।

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहे ।
आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥१५॥

—भर्तृहरि—वैराग्यशतकम् ।

## लोकस्तदनुवर्त्तते ।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥१६॥

—भगवद्गीता ।

## लोकस्य व्यसनापनोदकरणे दासस्य किं न क्षमः ।

मा भैः (क) मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातना
नैवामी प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदकरणे दासस्य किं न क्षमः ॥१७॥

—कुलशेखर—मुकुन्दमाला ।

---

(क) 'माभैषीः' शुद्धरूपमस्ति तथापि मूलग्रन्थमनुसृत्य यथा दृष्टं तथा लिखितम् ।

## लोके षड़ेतानि विडम्बितानि ।

मूर्खो द्विजातिः स्थविरो गृहस्थः कामी दरिद्रो धनवांस्तपस्वी ।
वेश्या कुरूपा नृपतिः कदर्यः लोके षडेतानि विडम्बितानि ॥१८॥
—षड्रत्नम् ।

## लोको नवं नवमीहते ।

मधुकरगणश्चूतं त्यक्त्वा गतो नवमल्लिकां
पुनरपि गतो रक्ताशोकं कदम्बवनं ततः ।
तदपि सुचिरं स्थित्वा तेभ्यः प्रयाति सरोरुहं
परिचितजनद्वेषी लोको नवं नवमीहते ॥१९॥

## लोकं शोकहतञ्च समस्तम् ।

द्दश्यताम्—'नलिनीदलगतसलिलं तरलम्' इति

## लोभमूलानि पापानि ।

लोभमूलानि पापानि लाभाल्लोभो विवर्धते ।
त्रिमाषघटितं कार्यं त्रिकोट्यापि न पूर्यते (क) ॥२०॥

## लोभात्क्रोधः प्रभवति ।

लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥२१॥
लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्त्तते ।
द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः (ख) ॥२२॥
—विष्णुशर्मा—हितोपदेशः ।

## लोभोऽप्यस्ति परेण किम् ।

द्दश्यताम्—'किं—किं—किम्' इति ।

---

(क) दृश्यताम्—'त्रीणि त्यक्त्वा सुखी भव' इति ।
(ख) दृश्यताम्—'ध्यायतो विषयान्पुंसः' इति ।

## लोलायमाना इति सप्तजिह्वाः ।

काली कराली च मनोजवा सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लोलायमाना इति सप्तजिह्वाः (क) ॥२३॥

—मुण्डकोपनिषद् ।

---

# व

## वक्तुं समर्थोऽपि न वक्ति कश्चित् ।

आनन्द गोविन्द मुकुन्द राम नारायणानन्त निरामयेति ।
वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥१॥

—कुलशेखर—मुकुन्दमाला ।

## वचने का दरिद्रता ।

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥२॥
हस्तादपि न दातव्यं गृहादपि न दीयते ।
परोपकारणार्थाय वचने का दरिद्रता ॥३॥

## वचो भूषा सत्यम् ।

दृश्यताम्—'भूषा—भूषा—भूषा' इति ।

## वज्रलेपो भविष्यति ।

अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ।
पुण्यक्षेत्रे कृतं पापं वज्रलेपो भविष्यति ॥४॥

---

(क) इति अग्नेः लोलायमानाः सप्तजिह्वा इत्यर्थः।

### वञ्चयन्ति नरं नार्यः ।

विनाञ्जनेन मन्त्रेण तन्त्रेण विनयेन च ।
वञ्चयन्ति नरं नार्यः प्रज्ञावनमपि क्षणात् ॥५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### वदन्ति कम्पङ्कजसम्भवं विदुः ।

वसन्तमासाद्य विकासि राजते वनेषु किं वल्लभ ! पुष्पमुच्यताम् ।
विहङ्गमं कश्च परिस्फुटाक्षरं वदन्ति कम्पङ्कजसम्भवं विदुः (क) ॥६॥

—धर्मदास—विदग्धमुखमण्डनम् ।

### वध्यः पूज्योऽथवा भवेत् ।

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥७॥

—विष्णुशर्मा—हितोपदेशः ।

### वने सीदन्ति पाण्डवाः ।

भाग्यवन्तं प्रसूयेथा मा शूरं मा च पण्डितम् ।
शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः ॥८॥

### वनेषु दोषाः प्रभवन्ति रागिणाम् ।

दृश्यताम्—'निवृत्तरागस्य गृहं तपोवनम्' इति ।

### वयमिव सखि ! कच्चिद्गाढनिर्भिन्नचेताः ।

कुररि ! विलपसि त्वं वीतनिद्रा न शेषे
स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि ! कच्चिद्गाढनिर्भिन्नचेता
नलिननयनहासोदारलीलेक्षितेन (ख) ॥९॥

—श्रीमद्भागवतम् ।

---

(क) अत्रोत्तरं किंशुकम् । किंशुकं पलाशपुष्पमिति प्रथमस्य, एकेन वर्णेन हीनं शुकमिति द्वितीयस्य, द्वाभ्यां वर्णाभ्यां हीनं कं ब्रह्माणमिति तृतीयस्य ।

(ख) कुररीनाम्नी विहङ्गिनीं प्रति श्रीकृष्णमहिष्या उक्तिरियम् ।

## वयसि गते कः कामविकारः ।

दृश्यताम्—'ज्ञाते तत्त्वे कः संसारः' इति ।

## वयोगते किं वनिताविलासः

दृश्यताम्—'किमु—किं—किमु' इति ।

## वयं काका वयं काकाः ।

तिमिरारिस्तमो हन्तीत्यातङ्कव्याकुलान्तराः (क) ।
वयं काका वयं काका इति जल्पन्ति वायसाः ॥१०॥

## वयांसि किन्न कुर्वन्ति ।

यस्मिञ्जीवति जीवन्ति वहवः स तु जीवति ।
वयांसि किन्न कुर्वन्ति चञ्च्वा सोदरपूरणम् ॥११॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## वरमसौ दिवसो न पुनर्निशा ।

दृश्यताम्—'उभयमेतदुपैत्वथवा त्वयम्' इति ।

## वरमेकस्य त्रस्तस्य प्रदातुर्जीवितं फलम् ।

वरमेकस्य त्रस्तस्य प्रदातुर्जीवितं फलम् ।
न च विप्रसहस्रेभ्यो गोसहस्रं फलं लभेत् ॥१२॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## वरविभवभूषा वितरणम् ।

दृश्यताम्—'भूषा—भूषा—भूषा' इति ।

---

(क) पाठान्तरम्—'तिमिरारिस्तमो हन्ति शङ्कातङ्कितमानसाः' इति ।

### वरं—वरं—वरम् ।

वरं मौनं कार्यं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।
वरं भैक्ष्याशित्वं न च परधनास्वादनसुखं
वरं प्राणत्यागो न च पिशुनवादेष्वभिरतिः ॥ १३॥

—कविभट्ट—पद्यसंग्रहः ।

### वरं काको न याचकः ।

काक आह्वायते काकान्याचको न तु याचकान् ।
काकयाचकयोर्मध्ये वरं काको न याचकः ॥ १४॥

### वरं रामान्न रावणात् ।

रामादपि च मर्त्तव्यं मर्त्तव्यं रावणादपि ।
एताभ्यां यदि मर्त्तव्यं वरं रामान्न रावणात् (क) ॥ १५॥

### वशीकर्त्तुं विश्वं दधति खलु बाह्योपकरणम् ।

ललाटे कस्तूरीतिलकमबलाः कज्जलरुचिं दृशोः कर्णद्वन्द्वे विमलमणिताटङ्कयुगलम् ।
गले मुक्तामालां शुचिवसनमङ्गे च सततं वशीकर्त्तुं विश्वं दधति खलु बाह्योपकरणम् ॥ १६॥

### वसन्ति नरके घोरे ।

विश्वासघातकाश्चैव शरणागतघातकाः ।
वसन्ति नरके घोरे यावदाहूतसम्प्लवम् (ख) ॥ १७॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) जब रावण ने मारीच को मायामृगरूप धारण कर पञ्चवटी वन जाने को कहा, तब मारीच ने असम्मति प्रकाश की। इस कारण रावण क्रोध कर मारीच को मारने के निमित्त उद्यत हुआ। तब मारीच ने मन में विचार किया—मृगरूप धारण कर जो रामचन्द्र के निकट जाता हूँ तो भी मरना है और जो नहीं जाता हूँ तो रावण के हाथ मरना है। अतएव जब दोनों ओर से मृत्यु की सम्भावना है तो राम के हाथ से ही मरना उचित है।

(ख) यावदाहूतसंप्लवं=प्रलयं यावत् ।

पाठान्तरम्—'मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
त्रयस्ते नरकं यान्ति यावदाहूतसंप्लवम्' ॥

## वसन्ते भ्रमणं पथ्यम् ।

वसन्ते भ्रमणं पथ्यमथवा निम्बभोजनम् ।
अथवा युवतिर्भार्या अथवा वह्निसेवनम् ॥१८॥

## वसुधैव कुटुम्बकम् ।

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥१९॥
—विष्णुशर्मा—हितोपदेशः।

## वाक्शल्यं मनसो जरा ।

दृश्यताम्—'जरा—जरा—जरा' इति ।

## वाग्भूषणं भूषणम् ।

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
वाण्येका समलङ्करोति कृतिनं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥२०॥
—भर्तृहरि—नीतिशतकम्।

## वाङ्मयं तप उच्यते ।

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥२१॥
—भगवद्गीता।

## वाच्यता न कुलस्यते ।

युधिष्ठिरोऽसि भीमोऽसि चरितैरर्जुनो भवान् ।
विद्यया (क) सहदेवोऽसि वाच्यता न कुलस्यते (ख) ॥२२॥

---

(क) 'प्रज्ञया' इति पाठान्तरम्।
(ख) अनेन श्लोकेन राजप्रशस्तिरिति ध्वन्यते।

**वाच्यः किमन्यो जनः ।**

दृश्यताम्—'चुल्ली चिरं रोदिति' इति ।

**वाणिज्ये वसते लक्ष्मीः ।**

दृश्यताम्—'भिक्षायां नैव नैव च' इति ।

**वादे वादे जायते तत्त्वबोधः ।**

दृश्यताम्—'बोधे बोधे भासते चन्द्रचूडः' इति ।

**वामे विधौ बत कथं विपदो विमुक्तिः ।**

कैवर्त्तकर्कशकरग्रहणाच्च्युतोऽपि जाले पुनर्निपतितः शफरो वराकः ।
दैवात्ततो विगलितो गिलितो बकेन वामे विधौ बत कथं विपदो विमुक्तिः (क) ॥२३॥

**वार्त्ता सुराणामियम् ।**

दृश्यताम्—'कस्मै किमाचक्ष्महे' इति ।

**वार्त्तां कोऽपि न पृच्छति गेहे ।**

यावद्वित्तोपार्जनशक्तस्तावन्निजपरिवारो रक्तः ।
तदनु च जरया जर्जरदेहे वार्त्तां कोऽपि न पृच्छति गेहे ॥२४॥

—शङ्कराचार्य—मोहमुद्गरः ।

**वासांसि जीर्णानि यथा विहाय ।**

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही (ख) ॥२५॥

—भगवद्गीता ।

---

(क) पाठान्तरम्—'वक्रे विधौ वद कथं व्यवसायसिद्धिः' इति ।

(ख) तथाहि श्रुतौः—

'अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्त्ति भुवनष्वन्तः' ॥३॥

—ऋग्वेद, म० १०, सू० १७७ ।

## वासुदेवं नमस्यन्ति वसुदेवं न मानवाः ।

दृश्यताम्—'गुणाः सर्वत्र पूज्यन्ते' इति ।

## वासुदेवपरा गतिः ।

वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपरा क्रियाः ।।२६।।
वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्मो वासुदेवपरा गतिः ।।२७।।

—श्रीमद्भागवतम् ।

## वासः प्रधानं खलु योग्यतायाः ।

किं वाससा तत्र विचारणीयं वासः प्रधानं खलु योग्यतायाः ।
पीताम्बरं वीक्ष्य ददौ स्वकन्यां चर्माम्बरं वीक्ष्य विषं समुद्रः ।।२८।।

---

'(मैंने) देखा एक गोपाल को जिसका कभी पतन नहीं होता, कभी निकट, कभी दूर, इस प्रकार नाना मार्गों में भ्रमण करता है। वह कभी अनेक वस्त्रों को एक साथ धारण करता है, कभी पृथक् पृथक् वस्त्र धारण करता है। इस प्रकार वह इस विश्वसंसार के बीच बारम्बार आता जाता रहता है।'

—रमेशचन्द्र दत्त।

सायणाचार्य ने उद्धृत ऋक् का जो टीका किया है, श्रद्धास्पद रमेश बाबू ने इस प्रकार से उसका अनुवाद किया है:—

'जीवात्मा का ध्वंस नहीं है, वह नाना योनि में भ्रमण करता है, किसी जन्म में नाना गुण धारण करता है और किसी में दो एक। निकृष्ट योनि में स्वल्प गुण रहते हैं और उत्कृष्ट योनि में अनेक गुण देखने में आते हैं।'

सायणाचार्य ने जो वस्त्र का अर्थ गुण किया है वह हमारे मत के अनुसार नहीं जान पड़ता है। वस्त्र के साथ उपमा द्वारा पुनर्जन्म का वर्णन करने का मुनि ऋषियों का जैसा अभिमत है वह गीता के पुनर्जन्मविषयक इस सुप्रसिद्ध श्लोक के तात्पर्य की आलोचना करने से निःसंशयरूप समझने में आता है। वस्त्र को पुनर्जन्म का रूपक मात्र मान लेने से एक साथ अनेक वस्त्रों को धारण करने का अर्थ एक योनि में अथवा एक जाति में बहु जन्म ग्रहण करना सूचित होता है ऐसी व्याख्या की जा सकती है।

—शीतलचन्द्र चक्रवर्ती—'नव्यभारत' में 'जन्मान्तर-वाद' का प्रबन्ध। श्रावण संख्या। पृ० २०१—२०५।

## विकारशून्यानि भवन्ति सद्यः ।

स्रोतांसि सिन्धुं समुपेत्य नद्यः प्रशान्तवेगानि यथा भवन्ति ।
अनन्तमासाद्य तथेन्द्रियाणि विकारशून्यानि भवन्ति सद्यः ॥२९॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः ।

दृश्यताम्—'चन्दनं न विषायते' इति ।

## विकृतिर्जीवितमुच्यते बुधैः ।

दृश्यताम्—'मरणं प्रकृतिः शरीरिणाम्' इति ।

## विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ।

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥३०॥

—विष्णुशर्मा—हितोपदेशः ।

## विक्रीडितं तोऽर्भकचेष्टितं यथा ।

दृश्यताम्—'अहो विधातस्तव न क्वचिद्दया' इति ।

## विक्रीते करिणि किमङ्कुशे विवादः ।

आरब्धं कुचयुगमर्दने न वाम्यं वैमुख्यं मुखपरिचुम्बनेऽपि नैव ।
किं नीवीगतमयि (क) मे रुणत्सि पाणिं विक्रीते करिणि किमङ्कुशे विवादः ॥३१॥
कान्तारे घनतिमिरे भुजङ्गमेभ्यो नो भीता न च गणिता महापगापि ।
किं बाले ! वहसि भयं मदङ्गसङ्गाद्विक्रीते करिणि किमङ्कुशे विवादः ॥३२॥
संपीतेऽधरमधुनि स्तने गृहीते संजाते गतवसने तथोरुयुग्मे ।
किं नीवीगतमबले ! रुणत्सि पाणिं विक्रीते करिणि किमङ्कुशे विवादः ॥३३॥
सौमित्रिर्वदति विभीषणाय लङ्कां देहि त्वं भुवनपते ! विनैव कोशम् ।
एतस्मिन् रघुपतिराह वाक्यमेतत् विक्रीते करिणि किमङ्कुशे विवादः ॥३४॥

---

(क) 'किं नीवीगतमबले' इति पाठान्तरम् ।

विज्ञेया त्रिविधा सुरा ।

प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा ।
दृष्ट्वैवोन्मादयत्येका पीता चान्यातिसञ्चयात् ॥३५॥

वित्ते नृपालाद्भयम् ।

वित्तेन किं ? वितरणं यदि नास्ति दीने ।

दृश्यताम्—'किं—किं—किम्' इति ।

विद्यया याति विप्रत्वम् ।

दृश्यताम्—'ब्रह्म जानाति ब्राह्मणः' इति ।

विद्याऽविद्यां निहन्त्येव ।

अविरोधितया कर्म नाविद्यां विनिवर्त्तयेत् ।
विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥३६॥

—शङ्कराचार्य—आत्मबोधः ।

विद्या कामदुघा धेनुः ।

दृश्यताम्—'आशा वैतरणी नदी' इति ।

विद्या ददाति विनयम् ।

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रताद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥३७॥

—नारायणपण्डित—हितोपदेशः ।

विद्या मित्रं प्रवासेषु ।

दृश्यताम्—'मित्रं—मित्रं—मित्रम्' इति ।

विद्या योगेन रक्ष्यते ।

दृश्यताम्—'रक्ष्यते—रक्ष्यते—रक्ष्यते' इति ।

## विद्या शस्त्रस्य शास्त्रस्य ।

विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥३८॥

—नारायणपण्डित—हितोपदेशः ।

## विद्या सर्वस्य भूषणम् ।

नक्षत्रभूषणं चन्द्रो (क) नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥३९॥

—चाणक्यशतकम् ।

## विद्यातीर्थे जगति विबुधाः ।

दृश्यताम्—'तीर्थे—तीर्थे—तीर्थे' इति ।

## विद्यादैक्यं महावाक्यैः ।

निषिध्य निखिलोपाधीन्नेति नेतीति वाक्यतः ।
विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः (ख) ॥४०॥

—शङ्कराचार्य—आत्मबोधः ।

## विद्याधनं सर्वधनप्रधानम् ।

न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥४१॥

## विद्याधिकारं कुरु ।

विद्यानाम नरस्य कीर्त्तिरतुला भाग्यक्षये चाश्रयो
धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा ।
सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं
तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु (ग) ॥४२॥

---

(क) 'शर्वरीभूषणं चन्द्रो' इति पाठान्तरम् ।

(ख) निषिध्येति । नेति नेति तन्न तन्न इति वाक्यतः निखिलान् सर्वान् उपाधीन् आवरणभूतान् विषयानिति भावः निषिध्य निरस्य महावाक्यैः तत्त्वमसीत्यादिदुरूहार्थप्रतिपादकैर्वाक्यैः जीवात्मपरमात्मनोरैक्यम् अभेदं य एव जीवात्मा स एव परमात्मा इत्येवंरूपं विद्यात् बुध्येत ।
—जीवानन्द विद्यासागर ।

(ग) दृश्यताम्—'किं किं न साधयति कल्पलतेव विद्या' इति ।

## विद्यामर्थञ्च चिन्तयेत् ।

दृश्यताम्—'अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत्' इति ।

## विद्यामर्थञ्च साधयेत् ।

क्षणशः कणशश्चैव विद्यामर्थञ्च साधयेत् ।
क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम् ॥ ४३ ॥

## विद्यारत्नं महाधनम् ।

ज्ञातिभिर्विवण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ४४ ॥

—भवभूति—गुणरत्नम् ।

## विद्यारम्भे गुरुः श्रेष्ठः ।

दृश्यताम्—'अविद्या बुधसोमयोः' इति ।

## विद्यारूपं कुरूपाणाम् ।

दृश्यताम्—'क्षमारूपं तपस्विनाम्' इति ।

## विद्यावतां भागवते परीक्षा ।

धनञ्जये हाटकसंपरीक्षा महारणे शस्त्रभृतां परीक्षा (क) ।
विपत्तिकाले गृहिणीपरीक्षा विद्यावतां भागवते परीक्षा ॥ ४५ ॥

## विद्याविहीनः पशुः ।

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशः शुभकरी (ख) विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसु पूज्यते (ग) न हि धनं विद्याविहीनःपशुः ॥ ४६ ॥

—भवभूति—गुणरत्नम् ।

---

(क) धनञ्जयः=अग्निः । हाटकः=सुवर्णः ।
(ख) 'यशः सुखकरी' इति नीतिशतके ।
(ग) 'राजसु पूजिता' इति नीतिशतके ।

## विद्यासमं नास्ति शरीरभूषणम् ।

## विद्याहीनञ्च जीवनम् ।

वस्त्रहीनस्त्वलङ्कारो घृतहीनञ्च भोजनम् ।
स्तनहीना च या नारी विद्याहीनञ्च जीवनम् ॥ ४७॥

—चाणक्यशतकम् ।

## विद्याहीना न शोभन्ते ।

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ४८॥

—चाणक्यशतकम् ।

## विद्युच्चलं जीवनम् ।

दृश्यताम्—'कालो जगद्भक्षकः' इति ।

## विद्येव तनुतां गता ।

सा प्रकृत्यैव तन्वङ्गी त्वद्वियोगाद्विशेषतः (क) ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता (ख) ॥ ४९॥

## विद्यैव द्रव्याणां द्रव्यमुत्तमम् ।

सर्वद्रव्येषु विद्यैव द्रव्याणां द्रव्यमुत्तमम् (ग) ।
अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ॥ ५०॥

—नारायणपण्डित—हितोपदेशः ।

## विद्वान्सर्वत्र पूज्यते ।

विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ५१॥

—चाणक्यशतकम् ।

---

(क) 'त्वद्वियोगाच्च कर्शिता' इति पाठान्तरम् ।
(ख) हनुमदुक्तिरियं यदा सोऽशोककानने सीतादर्शनानन्तरं रामस्य निकटे तस्या अवस्थां वर्णितवान् ।
(ग) 'द्रव्यमाहुरनुत्तमम्' इति पाठान्तरम् ।

## विद्वान्सर्वैरेव हि पूज्यते ।

किं कुलेन विशालेन गुणहीनस्य देहिनः ।
अकुलीनोऽपि यो विद्वान्सर्वैरेव हि पूज्यते (क) ॥५२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥५३॥

## विद्वांसमपि कर्षति ।

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् (ख) ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥५४॥

—श्रीमद्भागवतम् ।

## विधवा किं करिष्यति ।

गन्धैर्माल्यैस्तथा धूपैर्विविधैर्भूषणैरपि ।
वासोभिः शयनैश्चैव विधवा किं करिष्यति ॥५५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## विधिना दोः प्रसारितः ।

न दृष्टं न श्रुतं क्वापि सागरे सेतुबन्धनम् ।
नूनमस्मद्विनाशाय विधिना दोः प्रसारितः (ग) ॥५६॥

## विधिना वित्तहरौ विनिर्मितौ ।

दृश्यताम्—'गणिकागणकौ समानधर्मौ' इति ।

---

(क) दृश्यताम् पाठान्तरम्—'दैवतैरपि पूज्यते' इति ।
(ख) 'नैकशय्यासनो भवेत्' इति पाठान्तरम् ।
(ग) रावणस्योक्तिरियम् ।

### विधिरपि न येभ्यः प्रभवति ।

दृश्यताम्—'नमस्तत्कर्मभ्यः' इति ।

### विधिरहो बलवानिति मे मतिः ।

शशिदिवाकरयोर्ग्रहपीडनं गजभुजङ्गमयोरपि बन्धनम् ।
मतिमताञ्च निरीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥५७॥

—वेतालभट्ट—नीतिप्रदीपः ।

### विधिरुच्छृङ्खलो नृणाम् ।

अयाचितः सुखं दत्ते याचितश्च न यच्छति ।
सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥५८॥

### विधिलिखितमुन्मूलयति कः ।

दृश्यताम्—'अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः' इति ।

### विधेर्विचित्राणि विचेष्टितानि ।

यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना ।
यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि ॥५९॥

### विधौ विरुद्धे न पयः पयोनिधौ ।

विधौ विरुद्धे न पयः पयोनिधौ सुधौघसिन्धौ न सुधा सुधाकरे ।
न वाञ्छितं सिध्यति कल्पपादपे न हेम हैमप्रभवे गिरावपि ॥६०॥

### विना ज्ञानं विरागता ।

यन्मन्त्रिणा विना राज्यं गृहं धान्यादिकं विना ।
तारुण्येन विना भाग्यं विना ज्ञानं विरागता ॥६१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## विना परीक्षां नो तत्त्वम् ।

विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः ।
सुवर्णबन्धात्नो शुद्धिर्ज्ञायते कर्षणं विना ॥६२॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## विना युद्धेन केशव ।

सूच्यग्रेण सुतीक्ष्णेन भिद्यते या च मेदिनी ।
तदर्धं नैव दास्यामि विना युद्धेन केशव (क) ॥६३॥

## विनाग्निना पञ्च दहन्ति कायम् ।

भार्यावियोगः स्वजनापवादः ऋणस्य शेषं कृपणस्य सेवा ।
दारिद्र्यकाले प्रियदर्शनं च विनाग्निना पञ्च दहन्ति कायम् ॥६४॥

## विनाग्निना संदहते शरीरम् ।

कुग्रामवासः कुजनस्य सेवा कुभोजनं क्रोधमुखी च भार्या ।
मूर्खश्च पुत्रो विधवा च कन्या विनाग्निना संदहते शरीरम् ॥६५॥

—कविभट्ट—पद्यसंग्रहः ।

## बिनाशकाले विपरीतबुद्धिः ।

नीता न केनापि न दृष्टपूर्वा न श्रूयते हेममयी कुरङ्गी ।
तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः (ख) ॥६६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) पाण्डवों के पक्ष से जब श्रीकृष्ण ने दुर्योधन के निकट सन्धि का प्रस्ताव किया और कहा कि पाँचों पाण्डवों को पाँच ग्राम दे दो तब दुर्योधन ने कहा "हे कृष्ण ! अति तीक्ष्ण सूची के अग्रभाग के द्वारा जितनी मृत्तिका भेद होती है बिना युद्ध के उससे आधी भी भूमि में पाण्डवों को नहीं दूँगा"।

(ख) पाठान्तरम्—'असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले धियो हि पुंसा मलिना भवन्ति' ॥

—विष्णुशर्मा ।

तथाहि भाषायाम्—

'राम न जाते हिरन संग सिया न रावण साथ ।
जो रहीम भावी प्रबल होत आपने हाथ' ॥

## विनाशो नास्ति कर्मणाम् ।

दृश्यताम्—'नास्ति—नास्ति—नास्ति' इति ।

## विनाश्रया न शोभन्ते ।

अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते ।
विनाश्रया न शोभन्ते पण्डिता वनिता लताः ॥६७॥

## विपत्तिकाले गृहिणीपरीक्षा ।

दृश्यताम्—'विद्यावतां भागवते परीक्षा' इति ।

## विपत्तौ किं विषादेन ।

दृश्यताम्—'कर्मणामीदृशी गतिः' इति ।

## विपदथ प्राणप्रयाणावधिः ।

क्षारं वारि न चिन्तितं न गणिता नक्रादयो भीषणा—
श्चञ्चत्तुङ्गतरङ्गडम्बरपरित्रासोऽपि नालोचितः ।
मध्येऽम्भोनिधि मत्स्यरङ्क भवता झम्पः कृतोऽयं वृथा
सम्पच्चेच्छफरार्जनं विपदथ प्राणप्रयाणावधिः ॥६८॥

## विपदि हन्त ! सुधापि विषायते ।

मधुरयं मधुरैरपि कोकिलाकलकलैर्मलयस्य च वायुभिः ।
विरहिणः प्रणिहन्ति शरीरिणो विपदि हन्त ! सुधापि विषायते ॥६९॥
—भर्तृहरि—शृङ्गारशतकम् ।

## विफलस्तव कोपगोपनोपायः ।

यदभूतं तदभूतं यद्भूयात्तदपि वा भूयात् ।
यद्भवति तद्भवति वा विफलस्तव कोपगोपनोपायः ॥७०॥
—भानुदत्त मिश्र—रसमञ्जरी ।

## विभवाः सर्वतः पूज्या ।

विभवाः सर्वतः पूज्या न शरीराणि देहिनाम् ।
चाण्डालोऽपि नरश्रेष्ठो यस्यास्ति विपुलं धनम् ॥७१॥

## विभाति—विभाति—विभाति ।

मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः
कविना च विभुर्विभुना च कविः कविना विभुना च विभाति सभा ।
शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः
पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥७२॥

## विरक्तस्य तृणं भार्या ।

दृश्यताम्—'तृणं—तृणं—तृणम्' इति ।

## विरहलता पल्लवं सूते ।

गर्जति वारिदपटले वर्षति नयनारविन्दमबलायाः ।
भुजवल्लीमूलसेकं विरहलता पल्लवं सूते ॥७३॥

## विवेको नास्ति मूर्खाणाम् ।

दृश्यताम्—'नास्ति—नास्ति—नास्ति' इति ।

## विशति यमधानीयवनिकाम् ।

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुर्नरः संसारान्ते विशति यमधानीयवनिकाम् ॥७४॥
भर्तृहरि—वैराग्यशतकम् ।

## विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ।

प्रभाते स्नान्तीनां नृपतिरमणीनां कुचतटीगतो यावन्मातर्मिलति तव तोयैर्मृगमदः ।
मृगास्तावद्वैमानिकशतसहस्रैः परिवृता विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ॥७५॥
—श्रीजगन्नाथकवि—गङ्गालहरी ।

## विशिष्टैश्च विशिष्टताम् ।

हीयते हि मतिस्तात हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥७६॥

—नारायणपण्डित—हितोपदेशः ।

## विश्वासस्तत्र नोचितः ।

मार्जारो महिषो मेषः काकः कापुरुषस्तथा ।
विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नोचितः ॥७७॥

—विष्णुशर्मा—हितोपदेशः ।

## विश्वासो नैव कर्त्तव्यः ।

नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च (क) ॥७८॥

—चाणक्यशतकम् ।

## विश्वासं नैव कारयेत् ।

चरिते योषितां पूर्णे सरित्तोये नृपादरे ।
सर्वत्रैव वणिक्स्नेहे विश्वासं नैव कारयेत् ॥७९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## विश्वं विश्वजनीनकीर्त्तिरवतात्कृष्णो जगन्मोहनः ।

सौन्दर्यं ललनादिधैर्यदलनं लीला रमास्तम्भिनी
वीर्यं कन्दुकिताद्रिवर्यममलाः पारेपरार्धा गुणाः ।
शीलं सर्वजनानुरञ्जनमहो यस्यायमस्मत्प्रभु—
र्विश्वं विश्वजनीनकीर्त्तिरवतात्कृष्णो जगन्मोहनः (ख) ॥८०॥

—चैतन्यचरितामृते—श्रीगोविन्दलीलामृतम् ।

---

(क) दृश्यताम्—'जामाता कृष्णसर्पश्च' इति ।

(ख) शुकस्योक्तिरियं शारिकां प्रति । अनेन श्लोकेन श्रीकृष्णस्य गुणवर्णनं कथ्यते ।

## विषकुम्भं पयोमुखम् ।

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥८१॥

—चाणक्यशतकम् ।

## विषमप्यमृतायते ।

हरिभक्तिविहीनस्य सुधापि गरलायते ।
गोविन्दगतचित्तस्य विषमप्यमृतायते ॥८२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## विषमप्यमृतं क्वचिद्भवेत् ।

दृश्यताम्—'अमृतं वा विषमीश्वरेच्छया' इति ।

## विषममसिधाराव्रतमिदम् ।

असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ।
विपद्युच्चैः स्थेयं पदमनुविधेयञ्च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् (क) ॥८३॥

—भर्तृहरि—नीतिशतकम् ।

## विषयिणः कस्यापदोऽस्तंगताः ।

दृश्यताम्—'कः—कस्य—कः—कस्य' इति ।

## विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।

दृश्यताम्—'सुखं सात्त्विकं राजसं तामसं च' इति ।

---

(क) पाठान्तरम्—'प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं नाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्' ॥

## विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् (क) ॥८४॥
—कालिदास—कुमारसम्भवम् ।

## विषस्य विषमौषधम् ।

दृष्टिं देहि पुनर्बाले ! कमलायतलोचने ।
श्रूयते हि पुरा लोके विषस्य विषमौषधम् (ख) ॥८५॥
—कालिदास—शृङ्गारतिलकम् ।

## विषादप्यमृतं ग्राह्यम् ।

दृश्यताम्—'नीचादप्युत्तमां विद्याम्' इति ।

## विषं गोष्ठी दरिद्रस्य ।

दृश्यताम्—'अनभ्यासे विषं शास्त्रम्' इति ।

## विषं शङ्करभूषणम् ।

दृश्यताम्—'अयुक्तं स्वामिनो युक्तम्' इति ।

## विष्णुशक्तिः परा प्रोक्ता ।

विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कामसंज्ञान्या तृतीया शक्तिरिष्यते (ग) ॥८६॥
—विष्णुपुराणम् ।

---

(क) ब्रह्मा के वरदान से तारकासुर बड़ा दुर्जय हो गया था। उसके विनाश-साधन के निमित्त देवताओं ने जब ब्रह्मा से जाकर निवेदन किया तब उन्होंने कहा—"यह दैत्य मुझ से ही वर पा कर इतना उद्धत हुआ है, इस कारण मैं इसका विनाश करना उचित नहीं समझता। क्योंकि विषवृक्ष को भी स्वयं बढ़ा कर आप काटना उचित नहीं है।"

(ख) कस्याश्चित् नायिकायाः कटाक्षविक्षेपेण कामवाणजर्जरितहृदयः कोऽपि नायकः नायिका—माह।

(ग) पराशक्तिः=चिच्छक्तिः, अपरा=जीवशक्तिः, अविद्या=माया।
तथाहि श्रीमद्भगवद्गीतायाम्—
'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ! ययेदं धार्यते जगत्' ॥
अपरेयम्=पूर्वकथिता अष्टधा प्रकृतिः ।

## विहरति हरिरिह सरसवसन्ते ।

ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ।
विहरति हरिरिह सरसवसन्ते
नृत्यति युवतिजनेन समं सखि ! विरहिजनस्य दुरन्ते ॥८७॥

—जयदेव—गीतगोविन्दम् ।

## विहाय शीघ्रं वनिता व्रजन्ति ।

गुणाश्रयं कीर्त्तियुतं च कान्तं पतिं रतिज्ञं सधनं युवानम् ।
विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥८८॥

—विष्णुशर्मा—हितोपदेशः ।

## विंशतिर्गृहमागताः ।

स्नानं कर्त्तुं गता नद्यामेकोना विंशतिः स्त्रियः ।
खादितैका तु नक्रेण विंशतिर्गृहमागताः (क) ॥८९॥

## वृक्षाग्रवासी न च पक्षिजातिः ।

वृक्षाग्रवासी न च पक्षिजातिस्तृणं च शय्या न च राजयोगी ।
सुवर्णकायो न च हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः (ख) ॥९०॥

## वृक्षाग्रवासी न च पक्षिराजः ।

वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणिः ।
त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः (ग) ॥९१॥

---

(क) 'एकोना विंशतिः स्त्रियः' अर्थात् उन्नीस स्त्रियाँ। सब उन्नीस स्नान करने को गईं। उनमें से एक को ग्राह ने खा लिया। तब भी बीस घर लौट आईं, यह अत्यन्त असम्भव है। यथार्थ में यह है कि 'एकोना विंशतिः स्त्रियः' अर्थात् एक पुरुष और बीस स्त्रियाँ मिल कर गईं। अर्थात् सब एक्कीस गये थे, उनमें से एक को मगर खा गया तो बीस घर लौट आए।
पाठान्तरम्—'एकोना विंशतिः स्त्रीणां स्नानार्थं सरयूं गता।
विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः'॥
एकोना इति विंशतिर्विशेषणेन विरोधः, एको ना नरः इति परिच्छेदेन परिहारः।

(ख) अत्रोत्तरम्—'आम्रः'।

(ग) अत्रोत्तरम्—'नारिकेलफलम्'।

वृक्षं क्षीणफलं त्यजन्ति विहगाः ।

दृश्यताम्—'कस्यास्ति को वल्लभः' इति ।

वृत्यर्थं नातिचेष्टेत ।

वृत्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता ।
गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥६२॥

—विष्णुशर्मा—हितोपदेशः ।

वृथा दीपो दिवापि च ।

वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् ।
वृथा दानं समर्थस्य वृथा दीपो दिवापि च ॥६३॥

वृद्धस्य तरुणी भार्या ।

धनाशा जीविताशा च गुर्वी प्राणभृतां सदा ।
वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ॥६४॥

—विष्णुशर्मा—हितोपदेशः ।

वृद्धस्य तरुणी विषम् ।

दृश्यताम्—'अनभ्यासे विषं शास्त्रम्' इति ।

वृद्धस्य वचनं ग्राह्यम् ।

वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवं विचारे तु भोजनेऽप्यप्रवर्त्तनम् ॥६५॥

—विष्णुशर्मा—हितोपदेशः ।

वृद्धा न ते ये न वदन्ति धर्मम् ।

दृश्यताम्—'धर्मः स नो यत्र न सत्यमस्ति' इति ।

## वृद्धा नारी पतिव्रता ।

आदौ वेश्या पुनर्दासी पश्चाद्भवति कुट्टिनी ।
सर्वोपायपरिक्षीणा वृद्धा नारी पतिव्रता (क) ॥९६॥
अशक्तस्तु भवेत्साधुर्ब्रह्मचारी च निर्धनः ।
व्याधितो देवभक्तश्च वृद्धा नारी पतिव्रता (ख) ॥९७॥
आर्त्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः ।
निर्धना दानमिच्छन्ति वृद्धा नारी पतिव्रता ॥९८॥

## वृद्धा वेश्या तपस्विनी ।

दृश्यताम्—'अशक्तस्तस्करः साधुः' इति ।

## वृद्धादपि न दुर्वचः ।

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
विदुषापि सदा ग्राह्यं वृद्धादपि न दुर्वचः (ग) ॥९९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## वृद्धः षोडशवर्षवत् ।

आकर्णपलितः श्यामो वयसाशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् (घ) ॥१००॥

—व्यासस्य ।

## वेदाञ्जानन्ति पण्डिताः ।

दृश्यताम्—'पश्यति—पश्यन्ति—पश्यति—पश्यन्ति' इति ।

---

(क) हास्यरसात्मकः श्लोकोऽयम् ।
(ख) दृश्यताम्—'अशक्तस्तस्करः साधुः' इति ।
(ग) दृश्यताम्—'युक्तियुक्तमुपादेयं वचनं बालकादपि' इति ।
(घ) वीररसात्मकः श्लोकोऽयम् ।

## वेदान्तिन आशीर्वचनम् ।

यस्मिंस्त्रैलोक्यमेतन्महसि दिनपतेर्वारिवद्भासमानं
त्वञ्चाहञ्चायमित्थं व्यवहरति यदज्ञानतः सर्व एव ।
विज्ञानान्दरूपं विमलमविदितं सर्वगाम्यद्वितीयं
नित्यं चापेत्य मायां कलयतु सहसा तद्भवान् स्वस्वरूपम् (क) ॥१०१॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

## वेश्यानाञ्च कुतः स्नेहः ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

## वेश्यासौ मदनज्वाला ।

वेश्यासौ मदनज्वाला रूपेन्धनसमेधिता ।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च (ख) ॥१०२॥

भर्तृहरि—शृङ्गारशतकम् ।

## वेश्याः श्मशानघटिका इव वर्जनीयाः ।

दृश्यताम्—'नार्यः श्मशानकुसुमा इव वर्जनीयाः' इति ।

## वेषं न विश्वसेत्प्राज्ञः ।

वेषं न विश्वसेत्प्राज्ञो वेषो दोषाय जायते ।
रावणो भिक्षुरूपेण जहार जनकात्मजाम् ॥१०३॥

---

(क) जिसकी सत्ता के कारण यह सारा त्रैलोक्यमण्डल सूर्य किरणों में जल भ्रान्ति के न्याय प्रतीयमान होता है, जिसकी माया के कारण अज्ञानवश होकर समस्त जीवगण 'तुम', 'मैं', ऐसे शब्द व्यवहार करते हैं, उसी चिदानन्दस्वरूप, निर्मल, सर्वव्यापी, अद्वितीय, नित्य, अवेद्य, आत्मस्वरूप परब्रह्म को आप मायातीत होकर कोई विचार न कर शीघ्र अवलम्बन करें।

(ख) पाठान्तरम्—'अयं च सुरतज्वाला कामाग्निः प्रणयेन्धनः ।
नराणां यत्र हूयन्ते यौवनानि धनानि च' ॥

## वैद्यराज ! नमस्तुभ्यम् ।

वैद्यराज ! नमस्तुभ्यं यमराजसहोदर ! ।
यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १०४॥
वैद्यराज ! नमस्तुभ्यं क्षपिताशेषमानव ।
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ १०५॥

## वैद्यो नारायणो हरिः ।

दृश्यताम्—'औषधं जाह्नवीतोयम्' इति ।

## वैराग्यमस्ति किमतःपरमर्थनीयम् ।

भक्तिर्भवे मरणजन्मभयं हृदिस्थं स्नेहो न बन्धुषु च मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता वैराग्यमस्ति किमतःपरमर्थनीयम् ॥ १०६॥
—भर्तृहरि—वैराग्यशतकम् ।

## वैराग्यमेवाभयम् ।

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ १०७॥
—भर्तृहरि—वैराग्यशतकम् ।

## वैशाखे नरवानरौ ।

अशीतास्तरवो माघे फाल्गुने पशुपक्षिणौ ।
चैत्रे जलचराः सर्वे वैशाखे नरवानरौ ॥ १०८॥

## वैष्णवं तं विजानीयात् ।

अहौ हारे मणौ लोष्टे विष्ठायां चन्दने तथा ।
वैष्णवं तं विजानीयात्सर्वत्र समदर्शनम् ॥ १०९॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## वैष्णवस्याशीर्वचनम् ।

ईषन्मीलितलोचनो दृढ़तरप्राबद्धयोगासनो
यद्ब्रह्मादिसुरेन्द्रवन्दितपदः शम्भुः स्वयं ध्यायति ।
वैकुण्ठैकनिकेतनं जगदभिव्याप्य स्थितं लीलया
तद्ब्रह्माख्यवपुः सदैव मुदितं चेतः समालम्बताम् (क) ॥११०॥

—चिरञ्जीव शर्मा—विद्वन्मोदतरङ्गिणी ।

## वंशस्याग्रे ध्वजो यथा ।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।
नारोहति कुलं यस्य वंशस्याग्रे ध्वजो यथा ॥१११॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## व्यसनानि महीभुजाम् ।

पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥११२॥

—विष्णुशर्मा—हितोपदेशः ।

## व्याधितस्यौषधं पथ्यम् ।

दृश्यताम्—'दरिद्रान्भर कौन्तेय' इति ।

## व्याधितस्यौषधं मित्रम्

दृश्यताम्—मित्रं—मित्रं—मित्रम्' इति ।

## व्याधितो देवभक्तश्च ।

दृश्यताम्—वृद्धा नारी पतिव्रता' इति ।

---

(क) ब्रह्मादिक देवगण जिनके पद को वन्दना किया करते हैं, देवादिदेव महादेव दृढ़तररूप से योगासन में बैठ ईषन्निमीलितनयन होकर जिनका ध्यान किया करते हैं, जो अपने लीला-विलास के द्वारा सारे जगत् में व्यापक हो रहे हैं, एक मात्र वैकुण्ठनिवासी ब्रह्म नामक चैतन्यस्वरूप उसी भगवान् विष्णु को आप आनन्द के साथ अवलम्बन कीजिये ।

### व्याप्तं यतो विश्वमिदं पदेन ।

येनैव नाम्ना ननु यत्र तत्र भक्त्या तमुद्दिश्य बलिं प्रयच्छ ।
स तत्पदं यास्यति विश्वमूर्तेर्व्याप्तं यतो विश्वमिदं पदेन ॥११३॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

### व्रीडा चेत्किमु भूषणैः ।

दृश्यताम्—'किं—किमु—किम्' इति ।

---

## श

### शक्तानां भूषणं क्षमा ।

दृश्यताम्—'क्षमाहि परमं बलम्' इति ।

### शक्रस्यापि श्रियं हरेत् ।

परान्नं परवस्त्रं च परशय्या परस्त्रियः ।
परवेश्मनि वासश्च शक्रस्यापि श्रियं हरेत् ॥१॥

### शङ्खो भिक्षाटनं कुर्यात् ।

दृश्यताम्—'नादत्तमुपतिष्ठते' इति ।

### शङ्खो रोदिति भिक्षार्थी ।

दृश्यताम्—'फलं भाग्यानुसारतः' इति ।

### शठे शाठ्यं समाचरेत् ।

स्वर्णमुद्रा भवेत्ताम्रं बणिक्पुत्रश्च मर्कटः ।
सारल्ये सरलं कुर्याच्छठे शाठ्यं समाचरेत् (क) ॥२॥

---

(क) किसी ब्राह्मण के साथ एक वणिक की मित्रता थी। ब्राह्मण ने एक समय तीर्थयात्रा की अभिलाषा की। उसके पास कुछ संचित धन था जिसको उसने वणिक के पास रख कर तीर्थ-

शतं विहाय भोक्तव्यम् ।

दृश्यताम्——'कोटिं त्यक्त्वा हरिं भजेत्' इति ।

शत्रुणा शत्रुमुद्धरेत् ।

दृश्यताम्——'कण्टकेनेव कण्टकम्' इति ।

शत्रुः—शत्रुः—शत्रुः ।

दृश्यताम्——'ऋणकर्ता पिता शत्रुः' इति ।

---

यात्रा करने का विचार किया। वणिक ने कहा "आप पेटिका में अपना ताला लगा कर अपना द्रव्य रख जाइये। आप लौट कर उसे ले लीजियेगा। मैं उसे स्पर्श तक नहीं करूँगा"। ब्राह्मण ने वैसा ही किया। कुछ दिनों के अनन्तर वणिक ने जो पेटिका खोली तो उसे स्वर्ण मुद्राओं से भरा पाया। वणिक अपने लोभ को रोक न सका और उन स्वर्ण मुद्राओं को निकाल कर पेटिका में ताम्रमुद्राएँ भर दीं। कुछ दिन पीछे तीर्थ यात्रा से लौट कर अपने मित्र से पेटिका लेकर जब ब्राह्मण ने उसे खोल कर देखा तो उसे बड़ा आश्चर्य हुआ। उसने जब यह वणिक को विदित किया, तो वणिक बोला "मैं इस विषय में कुछ नहीं जानता। आप जैसा रख गये थे वैसा ही है"। ब्राह्मण उसे कुछ नहीं कह कर उत्तरोत्तर मित्रता बढ़ाने लगा।

इस प्रकार से कुछ दिन बीतने पर ब्राह्मण एक दिन वणिक के पाँच वर्ष के पुत्र को अपने घर लाया। ब्राह्मण ने एक वानर को पाल कर उसे शिक्षा दी थी। अब उसने वणिक पुत्र को छिपा कर उसके अलंकार उतार लिये और वानर को पहना कर उसे बाँध दिया। सन्ध्याकाल होने पर वणिक अपने पुत्र के खोज में ब्राह्मण के घर गया। तब ब्राह्मण अपने शिर में कराघात कर बोला, "भाई! क्या कहूँ तुम्हारे पुत्र ने मेरे घर आकर वानर का रूप धारण कर लिया। यह देखो तुम्हारे पुत्र को मैंने शृंखला से बाँध रक्खा है"। यह सुन कर वणिक ने बड़ा क्रोध किया और ब्राह्मण का यथोचित तिरस्कार कर के अन्त में विचारालय में उसके विरुद्ध अभियोग लाया।

न्यायाधीश ने जब ब्राह्मण को बुलाया, तब वह बानर सहित विचारालय में उपस्थित हुआ, और विचारक के प्रश्न के उत्तर में पूर्वोक्त श्लोक पढ़ा। इसका अर्थ यह है कि जिस प्रकार से पेटिकाबद्ध स्वर्णमुद्रा ताम्रमुद्रा हो गईं, उसी प्रकार वणिक पुत्र भी बानर हो गया। जो सरल व्यवहार करता है उसके साथ सरलता करना उचित है और जो शठता करता है उसके साथ शठता ही करना उचित है।

इसपर न्यायाधीश ने ब्राह्मण के मुख से आद्योपान्त वृत्तान्त सुन कर वणिक को उसकी शठता के कारण दण्ड दिया, ब्राह्मण का धन ब्राह्मण को दिलवाया और वणिक को उसका पुत्र लौटा दिया।

श्लोक का पाठान्तर——'कृते प्रतिकृतिं कुर्याद्धिंसने प्रतिहिंसितम्।
तत्र दोषं न पश्यामि शठे शाठ्यं समाचरेत्'॥

## शत्रुः—रिपुः—शत्रुः—रिपुः ।

लुब्धानां याचकः शत्रुर्मूर्खाणां बोधको रिपुः ।
जारिणीनां पतिःशत्रुश्चोराणां चन्द्रमा रिपुः ॥३॥

## शत्रोरपि गुणा वाच्याः ।

दृश्यताम्—'दोषा वाच्या गुरोरपि' इति ।

## शनैः कन्था शनैः पन्थाः ।

## शनैः कर्म च धर्मश्च ।

## शनैः पर्वतलङ्घनम् ।

## शनैर्विद्या शनैरर्थाः ।

## शनैः शनैश्च भोक्तव्यम् ।

शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् ।
रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥४॥

## शफरी फुर्फुरायते ।

दृश्यताम्—'अगाधजलसञ्चारी न गर्वं याति रोहितः' इति ।

## शमयति परितापं छायया संश्रितानाम् ।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥५॥
—कालिदास—अभिज्ञानशकुन्तलम् ।

## शम्बूकाःकिमु सन्ति नेति ।

कस्त्वं लोहितलोचनास्यचरणो हंसः कुतो मानसा—
त्किं तत्रास्ति सुवर्णपङ्कजवनं पीयूषतुल्यं पयः ।
नानारत्ननिबद्धवेदिवलयास्तीरेषु भूमीरुहाः
शम्बूकाः किमु सन्ति नेति हि बकैराकर्ण्य हीहीकृतः ॥६॥

### शम्भुः शिवायास्तु वः ।

दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहो दिव्यं स चाङ्गे तव (क) ।
तस्माद् द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता—
मित्थं शैलजया विहस्य लपितः शम्भुः शिवायास्तु वः ॥७॥

—भानुदत्त मिश्र—रसमञ्जरी ।

### शयनसुखरत्नं शशिमुखी ।

द्रश्यताम्—'रत्नं—रत्नं—रत्नम्' इति ।

### शरणं कं व्रजेत्तदा ।

माता यदि विषं दद्यात्पित्रा विक्रीयते सुतः ।
राजा हरति सर्वस्वं शरणं कं व्रजेत्तदा ॥८॥

### शरवत्तन्मयो भवेत्

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥९॥

—मुण्डकोपनिषद् ।

### शरीर ! किं प्रार्थयसे सुखानि ।

दानं न दत्तं न तपश्च तप्तं नाराधितौ शङ्करवासुदेवौ ।
अग्नौ रणे वा न हुतश्च कायः शरीर ! किं प्रार्थयसे सुखानि ॥१०॥

### शरीरपोषणं—शरीरशोषणं—शरीरतोषणं—शरीरभूषणम् ।

मातासमं नास्ति शरीरपोषणं चिन्तासमं नास्ति शरीरशोषणम् ।
भार्यासमं नास्ति शरीरतोषणं विद्यासमं नास्ति शरीरभूषणम् ॥११॥

---

(क) कथमहो आश्चर्यं दिव्यं विलोचनमिति शेषः नैव तदिति भावः स च पावकः येन सुरते मम विघ्नः कृत इति भावः तव अङ्गे तिष्ठतीति शेषः मम शत्रुरयं त्वया धृत इति भावः ।

—जीवानन्द विद्यासागर ।

## शरीरमाद्यं खलु धर्मसाधनम् ।

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्त्तसे शरीरमाद्यं खलु धर्मसाधनम् (क)॥ १२॥
—कालिदास—कुमारसम्भवम् ।

## शरीरे तत्र का कथा ।

पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते ।
सुशोषं सागरजलं शरीरे तत्र का कथा ॥ १३॥

## शरीरं च स्थिरं कस्य ।

दृश्यताम्—'अचला कमला कस्य' इति ।

## शरीरं न पुनः पुनः ।

पुनर्दारा पुनर्वित्तं पुनः क्षेत्रं तथैव च ।
पुनः शुभाशुभं कर्म शरीरं न पुनः पुनः(ख)॥ १४॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## शरीरं व्याधिमन्दिरम् ।

परोपकारसच्चर्या ज्ञानं यत्र न भास्वरम् ।
वृथा वहति तज्जीवः शरीरं व्याधिमन्दिरम् (ग) ॥ १५॥

---

(क) शिव जी की पतिकामना कर जब पार्वती हिमाद्रि शिखर में तपस्या कर रही थी, तब शिव जी ने जटिल ब्रह्मचारी का रूप धारण कर उस स्थान पर जा कर पार्वती से ये प्रश्न किए—"तुम्हारे क्रियासाधन के निमित्त समिध और कुश दुष्प्राप्य तो नहीं हैं ? तुम्हारे स्नान के निमित्त जल तो यथेष्ट मिलता है ? तुम अपनी शक्ति अनुसार तो तपस्या कर रही हो ? कारण शरीर ही धर्मसाधन का मूल है, अर्थात् देह सुस्थ रहने से धर्माचरण हो सकता है"।

(ख) पाठान्तरम्—'पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही ।
एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः'॥

(ग) हनूमान जब सीता देवी की खोज में समुद्र लंघन कर लङ्का को जा रहे थे, तब समुद्र के बीच मैनाकपर्वत ने उनको संबोधन कर के कहा, "हे पवननन्दन ! तुम बहुत क्लान्त जान पड़ते हो, इस निमित्त कुछ काल मेरे पृष्ठदेश पर विश्राम कर मुझे कृतार्थ करो, क्योंकि जिस देह में परोपकार और सदाचार के ज्ञान का विकास नहीं होता है उस देह को धारण करना निष्फल है और यह शरीर अनेक व्याधियों का मन्दिर है।"

## शरीरं सुखदुःखानां भोगायतनमुच्यते ।

पञ्चीकृतमहाभूतसम्भवं कर्मसञ्चितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते (क) ॥१६॥
—शङ्कराचार्य—आत्मबोधः ।

## शर्वरीदीपकश्चन्द्रः ।

## शशिना निशया च विभाति नभः ।

दृश्यताम्—'विभाति—विभाति—विभाति' इति ।

## शशिमुखि ! तदत्र चित्रम् ।

अयि तव यौवनजलधौ खेलति कलधौतभूधरद्वन्द्वम् ।
शशिमुखि ! तदत्र चित्रं मज्जति चित्तं चिरं यूनाम् ॥१७॥

## शाक्तस्याशीर्वचनम् ।

यामासाद्यविधीयते हरिहरब्रह्मादिभिर्दैवतैः
स्वीयं स्वीयमतीवदुष्करतरं कर्म क्षणाल्लीलया ।
सा दुर्गा भवभीतिरीतिशमनी लोकत्रयत्रायिणी
भूयाद्वः प्रतिपक्षपक्षदलनी वाञ्छाफलोल्लासिनी (ख) ॥१८॥
—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

---

(क) पञ्चीति। शरीरं पञ्चीकृतेभ्यः महाभूतेभ्यः क्षित्यादिभ्यः सम्भवतीति तथोक्तं, पञ्चीकरणं यथा प्रथमं सूक्ष्माः पञ्चतन्मात्राः सृष्टाः ततः तन्मात्रायाः क्षितेरर्धम् अपां तेजसो मरुतो व्योम्नश्च सूक्ष्माणां अष्टममष्टममंशं समादाय क्षितिः पञ्चीकृता, एवम् अपामर्धम् अन्येषां चतुर्णामष्टममष्टममंशं समादाय आपः पञ्चीकृताः, तेजसोऽर्धम् अन्येषाञ्चाष्टममष्टमंशं समादाय तेजः पञ्चीकृतम्। मरुतोऽर्धम् अन्येषां चतुर्णामिष्टममष्टममंशमादाय मरुत् पञ्चीकृतः। व्योम्नश्चार्धमन्येषां चतुर्णामष्टममष्टमंशं समादाय व्योम पञ्चीकृतम्। एतान्येव स्थूलानि महाभूतानि उच्यन्ते, एभिश्च सृष्टिरिति पौराणिकाः। कर्मणा शुभाशुभकर्मजनिता पूर्वेणेति यावत् सञ्चितं प्रारब्धम् सुखदुःखानां भोगस्य आयतनम् आधारभूतम् उच्यते। —जीवानन्द विद्यासागर।

(ख) हरिहर ब्रह्मादि देवगण जिनकी सहायता से अपने अपने अतिशय दुष्कर कर्मसमूहों को क्षणमात्र में अनायास से संपादन किया करते हैं, जो भवभयरूपरीति की प्रशमनकारिणी, त्रैलोक्यतारिणी और वाञ्छाफलप्रदायिनी है, वही दुर्गा देवी आपके विपक्षपक्ष को दलन करे।

## शान्तिमिच्छन्ति साधवः ।

दृश्यताम्—'मक्षिका व्रणमिच्छन्ति' इति ।

## शान्तिरेव हि कामधुक् ।

दृश्यताम्—'तृष्णा वैतरणी नदी' इति ।

## शान्तिः कुटीरेषु हि वैष्णवानाम् ।

न शान्तिरैश्वर्यविलासदीप्ते हर्म्ये सुरम्ये धरणीश्वरस्य ।
स्थूणावशेषेषु जरत्तृणेषु शान्तिः कुटीरेषु हि वैष्णवानाम् ॥१९॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## शापादपि शरादपि ।

अग्रतः सकला वेदाः पृष्ठतः सशरं धनुः ।
इदं ब्राह्ममिदं क्षात्रं शापादपि शरादपि ॥ २०॥

## शालिर्न सुरभौ क्वचित् ।

शुभं वाप्यशुभं कर्म फलकालमपेक्षते ।
शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥२१॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## शास्ता वैवस्वतो यमः ।

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥२२॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## शास्त्राय च सुखाय च ।

प्रातःस्नानं गवां सेवा आरामः पुष्पवाटिका ।
मातापित्रोश्च शुश्रूषा शास्त्राय च सुखाय च ॥२३॥

## शास्त्रे नृपे च युवतौ कुतो वशित्वम् ।

## शास्त्रं सुचिन्तितमथो परिचिन्तनीयम् ।

दृश्यताम्—'अङ्के स्थितापि युवतिः परिरक्षणीया' इति ।

## शास्त्रे वादिभयम् ।

दृश्याताम्—'वैराग्यमेवाभयम्' इति ।

## शिखेव जरतो मतिः ।

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥२४॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## शिरो मदीयं यदि याति यातु ।

युष्मत्कृते खञ्जनमञ्जनाक्षि ! शिरो मदीयं यदि याति यातु ।
लूनानि नूनं जनकात्मजार्थे शिरांसि लङ्काधिपतेर्दशैव (क) ॥२५॥

## शीतं—शीतं—शीतम् ।

कन्यायां जायते शीतं तुले शीतं प्रवर्त्तते ।
वृश्चिके द्विगुणं शीतं धने शीतं चतुर्गुणम् ॥
मकरे दारुणं शीतं कुम्भे शीतं सवातकम् ।
मीने शीतमशीतं वा मेषे शीतं निवर्त्तते (ख)॥२६॥

## शुक एव परं वक्ति ।

दृश्यताम्—'काकाः किं किं न कुर्वन्ति' इति ।

## शुकोऽप्यशनमाप्नोति ।

सद्विद्या यदि का चिन्ता वराकोदरपूरणे ।
शुकोप्यशनमाप्नोति राम रामेति च ब्रुवन् ॥२७॥

---

(क) 'दशाशनेनापि दशाननानि' इति पाठान्तरम् ।
(ख) दृश्यताम्—'मीने शीतनिवारणम्' इति ।

## शुक्तिका रजतं तथा ।

तावत्सत्यं जगद्भाति शुक्तिका रजतं तथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥२८॥

—शङ्कराचार्य—आत्मबोधः ।

## शुक्लकृष्णे गती ह्येते ।

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्त्तते पुनः (क) ॥२९॥

—भगवद्गीता ।

## शुक्लपक्ष इवो डुराट् ।

योजितः पञ्चवर्गेण (ख) सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवो डुराट् ॥३०॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) वेद में सदसत् कर्म मार्गों के बदले 'ज्ञानमार्ग' और 'कर्ममार्ग' के विभाग द्वारा उपनिषद् में जीवात्मा का 'देवयान' और 'पितृयान' नामक दो मार्ग कल्पित हुए हैं। 'देवयान' के मार्ग में आत्मा की गति होने से उसका और पुनर्जन्म नहीं होता है। 'पितृयान' के मार्ग में गति होने से उसका पुनर्जन्म होता है। इस विषय में छान्दोग्योपनिषद् का सिद्धान्त इस प्रकार से प्रकटित किया गया है:—

'एतेन प्रतिपाद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते'।

अर्थात्, इस मार्ग (देवयान मार्ग) से ब्रह्मलोक पर्यन्त जाकर यह मानव (जीवात्मा) आवर्त्त में पुनरावर्त्तित नहीं होता है अर्थात् नहीं लौटता है।

'तस्मिन् यावत् सम्पातमुषित्वा अथैतमध्वानं पुनर्निवर्त्तन्ते'।

अर्थात्, चन्द्रलोक को प्राप्त हो कर जीवात्मा कर्मक्षय पर्यन्त उसी स्थान में रह कर अनन्तर पुनः उसी मार्ग (पितृयानमार्ग) से प्रतिनिवृत्त होता है अर्थात् लौटता है।

उपनिषद् में पूर्वोक्त 'देवयान' और 'पितृयान' मार्गों के वर्णन को यथाक्रम 'अर्चिरादिमार्ग' (आलोकमार्ग) और 'धूमादिमार्ग' (अन्धकारमार्ग) के नामों से भी कथित हुआ है। ऐसा जान पड़ता है कि गीताकार ने उपनिषद् के तात्पर्य का अनुसरण कर इन दोनों मार्गों को शुक्ल और कृष्णरूप में वर्णन किया है।

—शीतलचन्द्र चक्रवर्ती—'नव्यभारत' में 'जन्मान्तरवाद का प्रबन्ध। श्रावण-संख्या, पृ० २०१—२०५।

(ख) पञ्चवर्गः अर्थात् पञ्चकर्मेन्द्रियाणि पञ्चज्ञानेन्द्रियाणि, पञ्चमहाभूतानि, पञ्चवायवः, चत्वारः अन्तःकरणानि प्रकृतिश्च।

## शुचिमनो यद्यस्ति तीर्थेन किम् ।

दृश्यताम्—'किं—किं—किम्' इति ।

## शुचिर्नारी पतिव्रता ।

शुचि भूमिगतं तोयं शुचिर्नारी पतिव्रता ।
शुचिः क्षेमकरो राजा सन्तोषी ब्राह्मणः शुचिः ॥३१॥

## शुभं ब्रूयाच्छुभं ध्यायेत् ।

शुभं ब्रुयाच्छुभं ध्यायेच्छुभमिच्छेच्च शाश्वतम् ।
जन्तूनामुपकाराय कुर्याद्देहादिचालनम् ॥३२॥

## शुभं ब्रूयात्प्रियं ब्रूयात् ।

शुभं ब्रूयात्प्रियं ब्रूयाद्भद्रमित्येव वा वदेत् ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥३३॥

## शुष्केणार्द्रं दह्यते मिश्रभावात् ।

असंत्यागात्पापकृतामपापांस्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह सन्धिं न कुर्यात् ॥३४॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## शूद्रस्तु द्विजसेवया ।

वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि ।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥३५॥
—विष्णुशर्मा—हितोपदेशः ।

## शून्यवृत्त्या हि शून्यता ।

दृश्यताम्—'तथा पूर्णत्वमभ्यसेत्' इति ।

## शून्यालये दीपवत् ।

दृश्यताम्—'तारुण्यं गतमेव निष्फलमहो' इति ।

## शून्यमेवगृहं मतम् ।

पुत्रपौत्रवधूभृत्यैः संपूर्णमपि सर्वदा ।
भार्याहीनगृहस्थस्य शून्यमेव गृहं मतम् ॥३६॥

## शून्यं—शून्या—शून्यं—शून्या ।

अविद्याजीवनं शून्यं दिक्शून्या चेदबान्धवा ।
पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता(क)॥३७॥

—चाणक्यशतकम् ।

## शूरस्य मरणं तृणम् ।

दृश्यताम्—'तृणं—तृणं—तृणम्' इति ।

## शेषा वणिग्वृत्तयः ।

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ? ।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रकाशकलनं शेषा वणिग्वृत्तयः ॥३८॥

—भर्तृहरि—वैराग्यशतकम् ।

## शैवस्याशीर्वचनम् ।

यं गायन्ति सदा समस्तनिगमा ध्यायन्ति यं योगिनो
यस्याज्ञामधिगत्य दैवतगणाः कुर्वन्ति सृष्ट्यादिकम् ।
सोऽयन्त्वामवतान्निराकृतिरपि त्रातुं जगत्साकृति—
ध्यायन्स्वं स्वयमेव सर्वजगतीशिक्षाकरःशङ्करः (ख) ॥३९॥

—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

---

(क) पाठान्तरम्—'अपुत्रस्य गृहं शून्यं शून्यो देशो ह्यबान्धवः
मूर्खस्य हृदयं शून्यं सर्वशून्या दरिद्रता' ॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

(ख) चारों वेद जिसे ईश्वर मानकर जिसका निरन्तर गान किया करते हैं, योगीगण जिसका निरन्तर ध्यान किया करते हैं, ब्रह्मादि देवगण जिसकी आज्ञा से सृष्ट्यादिक्रिया संपन्न किया करते हैं, जो निराकार होने पर भी जगत् के त्राण के हेतु आपही रूप धारण करता है, जो अपने ही ब्रह्मस्वरूप को आपही ध्यान किया करता है, वही सारे जगत् का गुरु देवाधिदेव शंकर आपकी सब आपदा से रक्षा करे।

## शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ।

हंसी वेत्ति परागपिञ्जरवपुः कुत्रापि पद्माकरे
प्रेयान्मे बिसकन्दलीकिसलयं भुङ्क्ते स्वयं निर्वृतः ।
नो जानाति मनस्विनी यदनिशं जम्बालमालोड्य—
च्छैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥४०॥

## शोकाग्निना दह्यते ।

अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनम्
आयुष्यं जलबिन्दुचञ्चलतरं फेनोपमं जीवितम् ।
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिगतः शोकाग्निना दह्यते ॥४१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## शोच्या भवति सा नारी

अपि बन्धुशता नारी बहुपुत्रैश्च संयुता ।
शोच्या भवति सा नारी पतिहीना तपस्विनी ॥४२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## श्मशानशूलस्य न यूपसत्क्रिया ।

निवर्त्तयास्मादसदीप्सितात्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥४३॥

—कालिदास—कुमारसम्भवम् ।

## श्याममेव परं रूपम् ।

दृश्यताम्—'आद्य एव परो रसः' इति ।

## श्यालको गृहनाशाय ।

श्यालको गृहनाशाय वित्तनाशाय कुञ्जरः ।
महिषी तोयनाशाय सर्वनाशाय मूषकः (क) ॥४४॥

---

(क) दृश्यताम्—'नाशाय-नाशाय-नाशाय' इति ।

## श्रद्धया दीयते यस्मात् ।

श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥४५॥

## श्रवणपुटरत्नं हरिकथा ।

दृश्यताम्—'रत्नं—रत्नं—रत्नम्' इति ।

## श्रवणसुखसीमा हरिकथा ।

## श्रिया दुरापः कथमीप्सितो भवेत् ।

अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत् ॥४६॥

—कालिदास—अभिज्ञानशकुन्तलम् ।

## श्रियो न किञ्चिद्विपदो न किञ्चित् ।

नन्दन्ति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्गृहीताः ।
विवेकदृष्ट्या चरतां नराणां श्रियो न किञ्चिद्विपदो न किञ्चत् ॥४७॥

—श्रीगणदेवानाम् ।

## श्रीखण्डखण्डैर्मलयाचलः किम् ।

दृश्यताम्—'परोपकाराय सतां विभूतिः' इति ।

## श्रीमतामापदः कुतः ।

दृश्यताम्—'आपदर्थे धनं रक्षेत्' इति ।

## श्रुतिस्मृती उभे नेत्रे ।

श्रुतिस्मृती उभे नेत्रे द्विजस्य परिकीर्त्तिते ।
एकेन हीनः काणः स्याद्द्वाभ्यामन्धः प्रजायते ॥४८॥

## श्रुतेन किं यो न च धर्ममाचरेत् ।

दृश्यताम्—'किमात्मना यो न जितेन्द्रियो भवेत्' इति ।

श्रुतं किं तद्वा स्यादुपशमफलं यन्न भवति ।

दृश्यताम्—'किं—किं—किम्' इति ।

श्रोतव्यः श्रुतिवाक्येभ्यः ।

दृश्यताम्—'ऐते दर्शनहेतवः' इति ।

श्रोत्रस्य भूषणं शास्त्रम् ।

दृश्यताम्—'भूषणे किं प्रयोजनम्' इति ।

श्रोत्रेण किं हरिकथाश्रवणालसेन

दृश्यताम्—'किं—किं—किम्' इति ।

श्रोत्रं श्रुतेनैव न कुण्डलेन ।

दृश्यताम्—'दानेन पाणिर्न च कङ्कणेन' इति ।

श्लाघ्यः स एको भुवि मानवानाम् ।

श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गाद्विमुखः प्रयान्ति ॥४९॥

—विष्णुशर्मा—हितोपदेशः ।

श्लोकस्तु श्लोकतां याति ।

श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः ।
लकारो लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः (क) ॥५०॥

श्वशुरगृहनिवासः स्वर्गतुल्यो नराणाम् ।

श्वशुरगृहनिवासः स्वर्गतुल्यो नराणां यदि भवति विवेकी पञ्च वा षड्दिनानि ।
दधिमधुघृतलोभान्मासमेकं वसेच्चेद्भवति विगतलज्जो मानवो मानहीनः (ख) ॥५१॥

---

(क) लकारलोपाच्छोक एवावतिष्ठते।

(ख) दृश्यताम्—'प्रहारेण धनञ्जयः' इति।

## श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ।

कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र ।
प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥५२॥

## श्वानवद्घुर्घुरायते ।

दृष्ट्वा यतिर्यतिं सद्यो वैद्यो वैद्यं नटं नटः ।
याचको याचकं दृष्ट्वा श्वानवद्घुर्घुरायते ॥५३॥

---

# ष

## षट्कर्णो भिद्यते मन्त्रः ।

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्त्तया ।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता (क) ॥१॥
—विष्णुशर्मा—हितोपदेशः ।

## षड्गुणं प्रीतिलक्षणम् ।

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्गुणं प्रीतिलक्षणम् ॥२॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## षड्जीवलोकस्य सुखानि राजन् ।

आरोग्यमानृण्यमविप्रवासः स्वप्रत्यया (ख) वृत्तिरभीतिवासः ।
सद्भिर्मनुष्यैः सह संप्रयोगः षड्जीवलोकस्य सुखानि राजन् ! ॥३॥
अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि राजन् ! ॥४॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

---

(क) पाठान्तरम्—'षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स्थिरो भवेत् ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति' ॥

(ख) 'सम्प्रत्यया वृत्तिः' इति वानर्यष्टके। सम्यक्प्रत्ययः विश्वासः स्थैर्य्यं इति भावः यस्या तादृशी वृत्तिर्जीविका।

### षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।

षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥५॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

### षड्भिः प्रकारैः प्रभवन्ति रोगाः ।

अत्यम्बुपानाद्विषमाशनाच्च संरोधनान्मूत्रपुरीषयोश्च ।
दिवाशयाज्जागरणाच्च रात्रौ षड्भिः प्रकारैः प्रभवन्ति रोगाः ॥६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### षडर्घान्नृपं तथा

आचार्यमृत्विजं चैव संयुजं चैव युधिष्ठिर ! ।
स्नातकं च प्रियं प्राहुः षडर्घान्नृपं तथा ॥७॥

—विदुरोक्तिः—महाभारते सभापर्वणि ।

### षड्व्याघाता महत्त्वस्य ।

आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् ।
संतोषो भीरुत्वं षड्व्याघाता महत्त्वस्य ॥८॥

—विष्णुशर्मा—हितोपदेशः ।

### षडिमे षट्सु जीवन्ति ।

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवन्ति व्यथितेषु चिकित्सकाः ॥९॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डितः ॥१०॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

### षडेते आततायिनः ।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारापहारी च षडेते आततायिनः ॥११॥

## षडेते नित्यदुःखिताः ।

ईर्षी घृणीनसुन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः (क) ॥ १२॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## षडेते ब्राह्मणाधमाः ।

असिजीवी मसीजीवी देवलो ग्रामयाचकः ।
धावकः पाचकश्चैव षडेते ब्राह्मणाधमः ॥ १३॥

## षडेते यस्य तिष्ठन्ति ।

दृश्यताम्—'तस्य देवोऽपिशङ्कते' इति ।

## षडेते ह्यवमन्यन्ते ।

षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदारश्च मातरम् ॥ १४॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तरा आतुराश्च चिकित्सकम् ॥ १५॥
—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## षण्णां भग इति स्मृतः ।

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतः ॥ १६॥

## षष्ठांशवृत्तेरपि धर्म एषः ।

भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ १७॥
—कालिदास—अभिज्ञानशकुन्तलम् ।

## षष्ठीतत्पुरुषो भवान् ।

दृश्यताम्—'बहुव्रीहिरहं राजन्' इति ।

---

(क) 'षडेते दुःखभागिनः' इति हितोपदेशे ।

# स

## स एव धैर्यमाप्नोति ।

हृषीकेशे हृषीकाणि यस्य स्थैर्यगतानि हि ।
स एव धैर्यमाप्नोति संसारे जीवचञ्चले ॥१॥
—गोस्वामिपादोक्तश्लोकः ।

## स एव भजति प्रायो जगद्वन्द्यताम् ।

तिर्यक्त्वं भजतु प्रतारयतु वा धर्मक्रियाकोविदं
हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां बधूमुज्झतु ।
वेदान्निन्दतु वा हिनस्तु जनतां किं वानया चिन्तया
लक्ष्मीर्यस्य गृहे स एव भजति प्रायो जगद्वन्द्यताम् ॥२॥

## स एवाद्य स उ श्वः ।

दृश्यताम्—'अङ्गुष्ठमात्रः पुरुषः' इति

## स कथं न बध्यो यः सेवते पञ्चभिरेव पञ्च ।

कुरङ्ग—मातङ्ग—पतङ्ग—भृङ्ग—मीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न बध्यो यः सेवते पञ्चभिरेव पञ्च (क) ॥३॥

## स खलु रचितवान्पापिनो दीर्घमायुः ।

पञ्चत्वं यान्तु बाणाः समयपरिणतस्ते विदीर्णोऽस्तु चापः
क्रूरः क्रूराहिवक्त्रं विशतु तव रथो मा भव त्वं शरीरी ।
किं ते शापेन मादृग्युवतिवधमहापातकिन्मीनकेतो !
शप्यः पाथोजयोनिः स खलु रचितवान्पापिनो दीर्घमायुः (ख) ॥४॥

---

(क) दृश्यताम्—'नरः पञ्चभिः रञ्जितः किम्' इति ।
(ख) वियोगिन्याः मदनं प्रति प्रलापोक्तिरियम् ।

### स जयति लोकत्रये पुरुषः ।

मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः ।
पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥५॥

### स जातः कुलदीपकः ।

लग्ने शुक्रो बुधो यस्य यस्य केन्द्रे बृहस्पतिः ।
दशमोऽङ्गारको यस्य स जातः कुलदीपकः ॥६॥

### स तु भवति दरिद्रो यस्य तृष्णा विशाला ।

दृश्यताम्—'मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः' इति ।

### स ते वृत्तिं विधास्यति ।

येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥७॥

—विष्णुशर्मा—हितोपदेशः ।

### स धर्मो धर्मवित्तम ! ।

धर्मं यो बाधते धर्मो न स धर्मः कुवर्त्म तत् ।
अविरोधात्तु यो धर्मः स धर्मो धर्मवित्तम ! ॥८॥

### स धर्मं वेद नैष्ठिकम् ।

यो दुःखितानि भूतानि दृष्ट्वा भवति दुःखितः ।
सुखितानि सुखी वापि स धर्मं वेद नैष्ठिकम् ॥९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### स नरः शत्रुनन्दनः ।

सुहृदां हितकामानां यः शृणोति न भाषितम् ।
विपत्सन्निहिता तस्य स नरः शत्रुनन्दनः ॥१०॥

—विष्णुशर्मा—हितोपदेशः ।

## स नित्योपलब्धिस्वरूपोऽहमात्मा ।

निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथायं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ११॥
मुखाभासको दर्पणे दृश्यमानो मुखत्वात्पृथक्त्वेन नैवास्ति जातु ।
चिदाभासको धीषु जीवोऽपि तद्वत्स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १२॥
यथा दर्पणाभाव आभासहानौ मुखं विद्यते कल्पनाहीनमेकम् ।
तथा धीवियोगे निराभासको यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १३॥
मनश्चक्षुरादेर्वियुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यस्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १४॥
य एको विभाति स्वतः शुद्धचेताः प्रकाशस्वरूपोऽपि नानेव धीषु ।
शरावोदकस्थो यथा भानुरेकः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ १५॥
—शङ्कराचार्य—हस्तामलकम् ।

## स पक्षपातोऽप्यधमो गरीयान् ।

सद्वंशजातं गुणकोटिनम्रं धनुः कथं पार्थिववामहस्ते ।
शरः परप्राणविहारदक्षः स पक्षपातोऽप्यधमो गरीयान् ॥ १६॥

## स पातु दामोदरो भवतः ।

कठिनतरदामवेष्टनरेखासन्देहदायिनो यस्य ।
विलसन्ति वलिविभागाः स पातु दामोदरो भवतः ॥ १७॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स पापिष्ठस्ततोऽधिकः ।

आशां दत्त्वा न दद्याद्यो दातारं प्रतिषेधयेत् ।
स्वयं दत्त्वा हरेद्यस्तु स पापिष्ठस्ततोऽधिकः (क) ॥ १८॥

---

(क) एक राक्षस खेवटिया का वेष धारण कर गङ्गा में नाव खेया करता था और कोई पार जाने वाला ब्राह्मण आने पर उसे अपनी नाव पर सवार कर बीच नदी में ले जाकर उससे प्रश्न करता था। जो ब्राह्मण प्रश्न का उत्तर नहीं दे सकता था उसे मार कर खा जाता था। उसका प्रश्न यह था—"मैंने नाव में सवार करा गङ्गा और यमुना के बीच लाकर अनेक ब्राह्मणों की हत्या किया है। अतएव मेरी अपेक्षा अधिकतर पापिष्ठ और कौन है"? किसी दिन एक ब्राह्मण ने इस प्रश्न के उत्तर में कहा—"जो मनुष्य आशा देकर नहीं पूरण करता है, जो दान करने में किसी को रोकता है और जो अपने दान किये हुए को फेर लेता है, वही तुम्हारी अपेक्षा अधिकतर पापी है"।

## स पुमानेकः सतामग्रणीः ।

क्षुद्राः सन्तु सहस्रशः स्वभरणव्यापारपूर्णोदराः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं वाडवा
जीमूतस्तु निदाघसंहृतजगत्सन्तापविच्छित्तये ॥१९॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स पुरुषो यः खिद्यते नेन्द्रियैः

## स भवेद्वशगस्तस्याः ।

यो मोहान्मन्यते मूढो रक्तेऽयं मयि कामिनी ।
स भवेद्वशगस्तस्या नृत्यक्रीडाशकुन्तवत् ॥२०॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स मे वित्तं हरेदिति ।

कृपणः स्ववधूसङ्गं न करोति भयादिह ।
भविता यदि मे पुत्रः स मे वित्त हरेदिति ॥२१॥

## स मोह इति कीर्त्तितः ।

मम माता मम पिता ममेयं गृहिणी गृहम् ।
एवंविधं ममत्वं यत्स मोह इति कीर्त्तितः ॥२२॥

—पद्मपुराणम् ।

## स याति परमां गतिम् ।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥२३॥

—भगवद्गीता ।

## स युक्तः कृत्स्नकर्मकृत् ।

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् (क) ॥२४॥

—भगवद्गीता ।

---

(क) 'He who in good actions sees that there is something evil in it, and in the midst of evil sees that there is something good in it somewhere has known the secret of work'. —Vivekananda.

## स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति ।

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याऽब्रह्मवित्कुले भवति ।
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥२५॥
—मुण्डकोपनिषद् ।

## स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ।

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव च ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२६॥
—भगवद्गीता ।

## स रामरामेति सकृद्बभाषे ।

गोविन्दभक्तस्य निशाचरस्य रामास्त्रविच्छिन्नशिरोधरस्य ।
कृत्तोऽपि मूर्धा विलुठन्धरण्यां स रामरामेति सकृद्बभाषे ॥२७॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## स रामः किं करिष्यति ।

लङ्का दग्धा वनं भग्नं लङ्घितश्च महोदधिः ।
यत्कृतं रामदूतेन स रामः किं करिष्यति ॥२८॥

## स वारिचर ! मोदते ।

पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ।
अनृणी चाप्रवासी च स वारिचर ! मोदते ॥२९॥
—महाभारते बनपर्वणि ।

## स विद्वान्नात्र संशयः ।

अपूर्वोऽयं मया दृष्टः कान्तः कमललोचने ! ।
शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः (क) ॥३०॥

## स शान्त इति मे मतिः ।

नवे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥३१॥

---

(क) अत्रोत्तरम्—'अशोकः'। 'अ' पूर्वः, 'क' अन्तः, 'श' अन्तरं मध्यमाक्षरम् ।

### स शान्तिमाप्नोति न कामकामी ।

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥३२॥

—भगवद्गीता ।

### स शूरः स च पण्डितः ।

युध्यन्ति पक्षिपशवः पठन्ति शुकसारिकाः ।
दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥३३॥

### स शोच्यो मूढचेतनः ।

अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
ध्रुवं यो नार्जयेद्धर्मं स शोच्यो मूढचेतनः ॥३४॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### स साधुः सद्भिरुच्यते ।

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥३५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

### स—से—मि—रा ।

**स**—द्भावप्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्यसुप्तानां हन्तुः किं नाम पौरुषम् ॥३६॥
**से**—तुं गत्वा समुद्रस्य गङ्गासागरसङ्गमम् ।
ब्रह्महत्या प्रमुच्येत मित्रद्रोही न मुच्यते ॥३७॥
**मि**—त्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
त्रयस्ते नरकं यान्ति यावदाभूतसंप्लवम् (क) ॥३८॥
**रा**—जन् ! भो तव पुत्रस्य यदि कल्याणमिच्छसि ।
देहि दानं द्विजातिभ्यो देवताराधनं कुरु ॥३९॥

---

(क) पाठान्तरम्—'पतन्ति नरके घोरे यावच्चन्द्रदिवाकरौ' ।

ग्रामे वससि कौमारि ! अटव्यां नैव गच्छसि ।
ऋक्षभल्लूकव्याघ्राणां कथं जानासि भाषितम् ॥४०॥
देवद्विजप्रसादेन जिह्वायां मम शारदा ।
तेनाहमवगच्छामि भानुमत्यास्तिलं यथा (क) ॥४१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स हेतुः सर्वविद्यानाम् ।

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥४२॥

—विष्णुशर्मा—हितोपदेशः ।

## स ह्यात्महा ।

लब्ध्वा किञ्चिन्नरजन्मदुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यस्त्वात्ममुक्तौ न यतते मूढधीः सह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥४३॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## सः—सा—सः—सा—सः—सा ।

स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
सा स्त्री यानुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते
तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥४४॥

—विष्णुशर्मा—हितोपदेशः ।

## सकलकृतिसीमाश्रितभृतिः ।

## सकलगुणभूषा च विनयः ।

दृश्यताम्—'भूषा—भूषा—भूषा' इति ।

---

(क) भोजराजभानुमत्योरुपाख्याने उपर्य्युक्तश्लोकानां विस्तीर्णवर्णनमस्ति । तद्दृश्यताम् । 'जिह्वाग्रे मे सरस्वती' इति पाठान्तरमपि दृश्यते । 'तेनाहं नृप ! जानामि' इति पाठो वा ।

### सकलसुखरत्नं हरिकथा ।

दृश्यताम्—'रत्नं–रत्नं–रत्नम्' इति ।

### सकलसुखसीमा सुवदना ।

### सकाराः सप्त दुर्लभाः ।

संपत्सरस्वती सत्यं सन्तानः सदनुग्रहः ।
सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः ॥४५॥

### सखि ! सीदति तव विरहे वनमाली ।

वहति मलयसमीरे मदनमुपनिधाय ।
स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ॥
सखि ! सीदति तव विरहे वनमाली ॥४६॥

—जयदेव—गीतगोविन्दम् ।

### सखि हे ! केशिमथनमुदारम् ।

निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तं
चकितविलोकितसकलदिशा रतिरभसरसेन हसन्तम् ।
सखि हे ! केशिमथनमुदारं
रमय मया सह मदनमनोरथभावितया सविकारम् ॥४७॥

—जयदेव—गीतगोविन्दम् ।

### सङ्गतिः कस्य केन वा ।

गतेनापि न सम्बन्धो न सुखेन भविष्यता ।
वर्त्तमानं क्षणातीतं सङ्गतिः कस्य केन वा ॥४८॥

—श्रीदेवगणदेवानाम् ।

### सङ्गात्सञ्जायते कामः ।

दृश्यताम्—'ध्यायतो विषयान्पुंसः' इति ।

### सङ्गीतमपि साहित्यम् ।

सङ्गीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् ।
एकमापातमधुरमन्यदालोचनामृतम् ॥४९॥

## सतां सङ्गे शङ्का यदि भवति सा दैवघटिता ।

विहाय श्रीशैलं भुजगगणसंसर्गमशिवं
ललम्बे सद्वृत्तं नवयुवतिपीनस्तनतटम् ।
क एवं जानीते यदिह करपीडाभयमहो !
सतां सङ्गे शङ्का यदि भवति सा दैवघटिता (क) ॥५०॥

## सत्पुत्रः कुलदीपकः ।

दृश्यताम्—'त्रैलोक्यदीपको धर्मः' इति ।

## सत्यपूतां वदेद्वाणीम् ।

दृश्यताम्—'मनःपूतं समाचरेत्' इति ।

## सत्यमेते महाद्रुमाः

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे ।
फलन्ति हि परार्थे च सत्यमेते महाद्रुमाः ॥५१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सत्यमेव जयते नानृतम् ।

सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥५२॥

—मुण्डकोपनिषद् ।

## सत्यमेव विशिष्यते ।

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥५३॥

## सत्येन तपते रविः ।

## सत्येन धार्यते पृथ्वी ।

---

(क) चन्दनस्योक्तिरियम् ।

## सत्येन रक्ष्यते धर्मः ।

दृश्यताम्—'रक्ष्यते—रक्ष्यते—रक्ष्यते' इति ।

## सत्येन लभ्यस्तपसा ह्येष आत्मा ।

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥५४॥
—मुण्डकोपनिषद् ।

## सत्येन वायवो वान्ति ।

## सत्यं कण्ठस्य भूषणम् ।

दृश्यताम्—भूषणे किं प्रयोजनम्' इति ।

## सत्यं चेत्तपसा च किम् ।

दृश्यताम्—'किं—किं—किम्' इति ।

## सत्यं जनविरोधाय ।

दृश्यताम्—'असत्यं जनरञ्जनम्' इति ।

## सत्यं न तद्यच्छलमभ्युपैति ।

दृश्यताम्—'धर्मः स नो यत्र न सत्यमस्ति' इति ।

## सत्यं ब्रूयात्प्रियं ब्रूयात् ।

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
नासत्यं च प्रियं ब्रूयात् एष धर्मः सनातनः (क) ॥५५॥

## सत्यं सत्यं हि मानवः ।

कृते विनिश्चये पुंसा विष्णुः पूरयतीप्सितम् ।
यस्य स्याद्दार्ढ्यसम्पत्तिः सत्यं सत्यं हि मानवः ॥५६॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) पाठान्तरम्—'सत्यं ब्रूयात् प्रियं ब्रूयान्माब्रूयात्सत्यमप्रियम् ।
अप्रियञ्चाहितञ्चापि प्रियायापि हितं वदेत्' ॥

## सत्त्वं रजस्तम इति गुणाः ।

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् ॥५७॥
सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ! ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥५८॥
सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥५९॥

—भगवद्गीता ।

## सत्सङ्गतिः कथय किं न करोति पुंसाम् ।

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्त्ति
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥६०॥

—भर्त्तृहरि—नीतिशतकम् ।

## सदो भूषा सूक्तिः ।

दृश्यताम्—'भूषा—भूषा—भूषा' इति ।

## सद्भावो नास्ति वेश्यानाम् ।

दृश्यताम्—'नास्ति—नास्ति—नास्ति' इति ।

## सद्यस्तु फलमिष्यते ।

स्वप्नेषु प्रथमे यामे संवत्सरविपाकभाक् ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्यामैस्त्रिमासकैः ।
गोविसर्जनवेलायां सद्यस्तु फलमिष्यते ॥६१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सद्यो मृत्युञ्जयो भव ।

जीव जीव चिरञ्जीव हरिभक्तिसुधां पिब ।
हरिभक्तिसुधां पीत्वा सद्यो मृत्युञ्जयो भव ॥६२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## सद्विद्या यदि का चिन्ता ।

दृश्यताम्—'शुकोऽप्यशनमाप्नोति' इति ।

## सद्विद्या यदि किं धनैः ।

दृश्यताम्—'किं—किं—किम्' इति ।

## सन्ताप एषोऽन्तरदाहहेतुः ।

हन्तालि सन्तापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि ।
सन्ताप एषोऽन्तरदाहहेतुर्नतभ्रुवो न व्यजनापनेयः (क) ॥६३॥

## सन्तोष एव पुरुषस्य परं निधानम् ।

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥६४॥

## सन्तोषतुल्यं धनमस्ति नान्यत्

दानेन तुल्यो विधिरस्ति नान्यो लोभाच्च नान्योऽस्ति परः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्सन्तोषतुल्यं धनमस्ति नान्यत् ॥६५॥

## सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।

दृश्यताम्—'इतश्चेतश्च धावताम्' इति ।

## सन्तोषी ब्राह्मणः शुचिः ।

दृश्यताम्—'शुचिर्नारी पतिव्रता' इति ।

---

(क) न व्यजनापनेयः व्यजनेन तालवृन्तेन न अपनेयः निवर्त्तयितुं शक्यः। पक्षान्तरे, नव्यजनापनेयः नव्येन यूना जनेन पुरुषेण अपनेयः निवर्त्तयितुं शक्यः। कान्तेन समागमं विना एषोऽस्याः सन्तापो न निवर्त्तिष्यते इत्यर्थः।

## सन्तोषेण विना पराभवपदम् ।

गन्ध्याढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां
दैवात्तांश्च विहाय चम्पकवनं पश्चात्सरोजं गतः ।
बद्धस्तत्र निशाकरेण विधिना क्रन्दत्यसौ मूढधीः
सन्तोषेण विना पराभवपदं प्राप्नोति मूढो जनः ॥६६॥

—कालिदास—शृङ्गाररसाष्टकम् ।
—भ्रमराष्टकम् ।

## सन्तोषो नन्दनवनम् ।

दृश्यताम्—'तृष्णा वैतरणी नदी' इति ।
'आशा वैतरणी नदी' इति ।

## सन्तः सदा सुरसरित्तटमाश्रयन्ति ।

यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न कृतं तदिहाभ्युपैति ।
इत्थं विधेर्विधिविपर्ययमाकलय्य सन्तः सदा सुरसरित्तटमाश्रयन्ति (क) ॥६७॥

## सन्धत्ते सम्पदोऽपि सत्सङ्गः ।

कन्दलयत्यानन्दं निन्दति मन्दानिलेन्दुचन्दनम् ।
दमयति मन्दभावं सन्धत्ते सम्पदोऽपि सत्सङ्गः ॥६८॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सन्निमित्तो वरं त्यागः ।

धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्तो वरं त्यागो विनाशे नियते सति ॥६९॥

—विष्णुशर्मा—हितोपदेशः ।

## सपत्नीव प्राची दिगियमभवत्तावदरुणा ।

समायाते कान्ते कथमपि च कालेन बहुना कथाभिर्देशानां सखि ! रजनिरर्धं गतवती ।
ततो यावल्लीलाकलहकुपितास्मि प्रियतमे सपत्नीव प्राची दिगियमभवत्तावदरुणा ॥७०॥

—कालिदास—शृङ्गारतिलकम् ।

---

(क) दृश्यताम्—'यच्चिन्तितं तदिह दूरतरं प्रयाति' इति ।

## सप्तदोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।

सप्तदोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूलाऽपीश्वराः ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमं ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥७१॥
—विदुरोक्तयः—महाभारते उद्योगपर्वणि ।

## सप्तसुप्तान्प्रबोधयेत् ।

क्षुधितस्तृषितः कामी विद्यार्थी बहुपोषकः ।
भाण्डारी रक्षकश्चैव सप्तसुप्तान्प्रबोधयेत् ॥७२॥

## सप्तैता मातरः स्मृता

आदौ माता गुरोः पत्नी ब्राह्मणी राजपत्निका ।
धेनुर्धात्री तथा पृथ्वी सप्तैता मातरः स्मृताः ॥७३॥

## सप्तैता मोक्षदायिकाः ।

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥७४॥

## सप्तैता समिधः श्रियः ।

धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैता समिधः श्रियः ॥७५॥
—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## सप्तैते चिरजीविनः ।

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥७६॥

## सप्तैते परभक्षकाः ।

मक्षिका मशको वेश्या मूषको याचकस्तथा ।
ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥७७॥

## सफलं ज्योतिषं शास्त्रम् ।

विफलान्यन्यशास्त्राणि विवादस्तेषु केवलम् ।
सफलं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ ॥७८॥

## सफलं तस्य जीवितम् ।

यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् (क) ॥७९॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

वाणी रसवती यस्य भार्या पुत्रवती सती ।
लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥८०॥

## सभारत्नं विद्या ।

दृश्यताम्—'रत्नं–रत्नं–रत्नम्' इति ।

## समत्वं योग उच्यते ।

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥८१॥

—भगवद्गीता ।

## समस्तभावैः खलु बन्धनं स्त्रियः ।

स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः ।
वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः ॥८२॥

—भर्तृहरि—शृङ्गारशतकम् ।

## समागतोऽहं तव दर्शनाय ।

दूरेऽपि श्रुत्वा भवदीयकीर्त्तिं कर्णौ हि तृप्तौ न च चक्षुषी मे ।
तयोर्विवादं परिहर्त्तुकामः समागतोऽहं तव दर्शनाय ॥८३॥

---

(क) दृश्यताम्—'आत्मार्थे को न जीवति' इति ।

## समानशीलव्यसनेषु सख्यम् ।

स राघवेन्द्रो हृतराजदारः स वानरेन्द्रो हृतराजदारः ।
एवं तयोरध्वनि दैवयोगात्समानशीलव्यसनेषु सख्यम् ॥८४॥
मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरङ्गास्तुरङ्गैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥८५॥

## समायाति यदा लक्ष्मीः ।

समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत् ।
विनिर्याति यदा लक्ष्मीर्गजभुक्तकपित्थवत् (क) ॥८६॥

—वेतालभट्ट—नीतिप्रदीपः ।

## समूलस्तु विनश्यति ।

मर्मज्ञस्य विरोधेन दरोदरनिवासिनः ।
शिंशपामूलपत्राभ्यां समूलस्तु विनश्यति (ख) ॥८७॥

---

(क) दृश्यताम्—'गजभुक्तकपित्थवत्' इति। कपित्थान्तर्गतः कीटो गजइत्यभिधीयते।

(ख) किसी समय एक राजपुत्र सो रहा था कि इतने में एक सूक्ष्मतम सर्प उसकी नासिका होकर उसके पेट में घुस गया। इस कारण राजपुत्र का उदर धीरे धीरे बढ़ने लगा और शरीर कृश होता गया। चिकित्सकों ने उदररोग जान कर अनेक प्रकार की ओषधियों का प्रयोग किया, परन्तु कोई फल नहीं हुआ। तब राजपुत्र जीवन की आशा त्याग कर तीर्थयात्रा को निकला। एक दिन चलते चलते क्लान्त होकर वह एक शिंशपा वृक्ष के नीचे सो गया। उस वृक्ष के मूलदेश में एक विवर था जिसमें एक सर्प वास करता था। उसने राजपुत्र को सोता हुआ जान उदरस्थ सर्प को कठोर शब्दों में संबोधन कर कहा—"रे मन्दमति! तू निर्दोष राजपुत्र के उदर में प्रवेश कर उसके जीवननाश करने को उद्यत हुआ है, परन्तु यदि राजकुमार इस शिंशपा वृक्ष के पत्र का रस पान करे तो उसी क्षण तेरा नाश हो जायगा।" विवरस्थ सर्प की कथा सुन उदरस्थ सर्प क्रुद्ध हो कर बोला—"रे दुर्बुद्धि! यदि राजपुत्र इस शिंशपा मूल का रस तेरे विवर में छोड़ दे तो तू सवंश विनष्ट हो जायगा।" राजपुत्र ने तब इन दोनों सर्पों का वाद-विवाद सुन हृष्टचित्त से उठ कर शिंशपा वृक्ष के पत्र का रस पान किया और उसके मूल का रस विवर में छोड़ दिया, जिससे राजपुत्र को आरोग्य लाभ हुआ और वृक्ष के मूल में खोदकर विवरस्थ धन रत्न लेकर अपने राज्य में लौट आया। अतएव देखा जाता है कि मर्मज्ञों के विवाद में आत्मकलह से शिंशपा पत्र के रस के प्रयोग से उदरस्थ सर्प और उसके मूल के रस से विवरस्थ सर्प दोनों समूल नष्ट हो गये।

## समूलं च विनश्यति ।

पिपीलिकार्जितं धान्यं मक्षिकासञ्चितं मधु ।
लुब्धेन सञ्चितं द्रव्यं समूलं च विनश्यति ।। ८८।।
अन्यायोपार्जितं द्रव्यं दशवर्षाणि तिष्ठति ।
प्राप्ते चैकादशे वर्षे समूलं च विनश्यति ।।८९।।

## समैश्च समतामेति ।

दृश्यताम्—'विशिष्टैश्च विशिष्टताम्' इति ।

## सम्पत्तौ कर्कशं चित्तम् ।

सम्पत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् ।
शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ।।९०।।
—कुसुमदेव—दृष्टान्तशतकम् ।

## सम्पत्तौ कोमलं चित्तम् ।

सम्पत्तौ कोमलं चित्तं साधोरापदि कर्कशम् ।
सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ ।।९१।।
—कुसुमदेव—दृष्टान्तशतकम् ।

## सम्पत्तौ हर्षणेन किम् ।

दृश्यताम्—'कर्मणामीदृशी गतिः' इति ।

## सम्पत्सु महतां चित्तम् ।

सम्पत्सु महतां चित्तं भवेत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ।।९२।।
—भर्तृहरि—नीतिशतकम् ।

## सम्पदं स समाप्नोति ।

परोपकारव्यापारो पुरुषो यः प्रजायते ।
सम्पदं स समाप्नोति परत्रापि परम्पदम् ।।९३।।
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सम्पद्रोगोऽयमद्भुतो राजन् ! ।

वधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति ।
विकृतयति गात्रयष्टिं सम्पद्रोगोऽयमद्भुतो राजन् ! ॥९४॥

## सम्पूर्णकुम्भो न करोति शब्दम् ।

दृश्यताम्—'गुणैर्विहीना बहु जल्पयन्ति' इति ।

## सम्भवन्तु मम जन्मजन्मनि ।

कालिदासकविता नवं वयः माहिषं दधि सशर्करं पयः ।
एणमांसमबला च कोमला सम्भवन्तु मम जन्मजन्मनि ॥९५॥

—कविभट्ट—पद्यसंग्रहः ।

## सम्भवामि युगे युगे ।

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥९६॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥९७॥
परित्राणाय साधूनां विनाशाय च दुष्कृतां ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥९८॥

—भगवद्गीता ।

## सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ।

अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥९९॥

—भगवद्गीता ।

## सम्मोहात्स्मृतिविभ्रमः ।

दृश्यताम्—'ध्यायतो विषयान्पुंसः' इति ।

## सरसमिदमूचे सहचरी ।

वसन्ते वासन्तीकुसुमसुकुमारैरवयवै—
र्भ्रमन्तीं कान्तारे बहुविहितकृष्णानुसरणाम् ।
अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
बलद्बाधां राधां सरसमिदमूचे सहचरी ॥१००॥

—जयदेव—गीतगोविन्दम् ।

## सरसा विरसायते ।

कविता वनिता चैव सुखदा स्वयमागता ।
बलादाकृष्यमाणा चेत्सरसा विरसायते ॥१०१॥

## सर्व एते शनैः शनैः ।

शनैर्विद्या शनैरर्थानारोहेत्पर्वतं शनैः ।
शनैरध्वसु वर्त्तेत योजनान्न परं व्रजेत् ॥१०२॥
शनैः कन्था शनैः पन्थाः शनैः पर्वतलङ्घनम् ।
शनैः कर्म च धर्मश्च सर्व एते शनैः शनैः (क) ॥१०३॥

## सर्वकष्टा दरिद्रता ।

कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः ।
निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥१०४॥

—चाणक्यशतकम् ।

## सर्वकार्येषु माधवम् ।

माधवो माधवो वाचि माधवो माधवो हृदि ।
स्मरन्ति साधवः सर्वे सर्वकार्येषु माधवम् ॥१०५॥

---

(क) पाठान्तरम्—'शनैः पन्थाः शनैः कन्था शनैः पर्वतमस्तके ।
शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः' ॥
पञ्चसु वाक्येषु अतिवाह्यते सिध्यति आरोहति प्राप्यते वर्धते इति पञ्चक्रियाध्याहारः ।

## सर्वञ्चैतद्भवति विफलम् ।

शीतेऽतीते वसनमशनं वासरान्ते निशान्ते
क्रीडारम्भः कुवलयदृशां यौवनान्ते विवाहः ।
सेतोर्बन्धः पयसि गलिते प्रस्थिते लग्नचिन्ता
सर्वञ्चैतद्भवति विफलं स्वस्वकाले व्यतीते ॥१०६॥

—वेतालभट्ट—नीतिप्रदीपः।

## सर्वत्र गुणवानेव चकास्ति प्रथिते नरे ।

सर्वत्र गुणवानेव चकास्ति प्रथिते नरे ।
मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपिशोभते ॥१०७॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## सर्वत्र जयमन्विच्छेत् ।

सर्वत्र जयमन्विच्छेत्पुत्रादिच्छेत्पराजयम् ।
वासुदेवं नमस्यन्ति वसुदेवं न ते जनाः ॥१०८॥

## सर्वत्र नूतनं शस्तम् ।

दृश्यताम्—'नवं नवा पुरातने च' इति ।

## सर्वत्र समदर्शनः ।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥१०९॥

—भगवद्गीता।

## सर्वथा विषमाः स्त्रियः ।

न दानेन न मानेन नार्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥११०॥

—विष्णुशर्मा—हितोपदेशः।

## सर्वदा पतनप्रायम् ।

सर्वदैव रुजाक्रान्तं सर्वदैव शुचो गृहम् ।
सर्वदा पतनप्रायं देहिनां देहपञ्जरम् ॥१११॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सर्वदेवमयोऽतिथिः ।

उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः ॥११२॥
—विष्णुशर्मा—हितोपदेशः ।

## सर्वनाशाय मातुलः ।

दृश्यताम्—'नाशाय—नाशाय—नाशाय' इति ।

## सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ।

दृश्यताम्—'अर्धं त्यजति पण्डितः' इति ।

## सर्वभावमयो हरिः ।

यो भक्तो येन भावेन भगवन्तमभीप्सति ।
उदेति तत्र तेनैव सर्वभावमयो हरिः ॥११३॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## सर्वमत्यन्तगर्हितम् ।

अतिदर्पे हता लङ्का अतिमाने च कौरवाः ।
अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् (क) ॥११४॥
—चाणक्यशतकम् ।

## सर्वमन्धाकृतं जगत् ।

प्रस्वेदमलदिग्धेन वहता मूत्रशोणितम् ।
व्रणेन विकृतेनेदं सर्वमन्धीकृतं जगत् (ख) ॥११५॥

---

(क) तथाहि भाषायाम्—'रहिमन न फूलिये चित्त आपनो जानि ।
अति फूले से सहिजनि डार पात की हानि' ॥

(ख) बीभत्सरसात्मकः श्लोकोऽयम् ।

## सर्वमावृत्य तिष्ठति ।

खलः सुजनपैशुन्ये सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति (क) ॥११६॥

## सर्वमेव तमोमयम् ।

अन्तर्यस्य हरिस्तस्य सर्वं ज्योतिर्मयं जगत् ।
नान्तर्यस्य हरिस्तस्य सर्वमेव तमोमयम् ॥११७॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## सर्वमुत्पादि भङ्गुरम् ।

कायः सन्निहितापायः सम्पदः परमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥११८॥
—विष्णुशर्मा—हितोपदेशः ।

## सर्वमेव हरेरिच्छा ।

सर्वमेव हरेरिच्छा भावाभावौ सुखासुखे ।
सर्वचिन्ताविषघ्नोऽयमगदः पीयतां मनः ॥११९॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## सर्वस्याभ्यागतो गुरुः ।

बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः (ख) ॥१२०॥
—विष्णुशर्मा—हितोपदेशः ।

## सर्वशून्या दरिद्रता ।

दृश्यताम्—'शून्यं—शून्या—शून्यं—शून्या' इति ।

---

(क) बीभत्सरसात्मकः श्लोकोऽयम् ।
दृश्यताम्—गीता अ० १३, श्लोक १३ अथवा 'ज्ञानं-ज्ञेयं-ज्ञानगम्यम्' इत्यस्मिन्ग्रन्थे ।

(ख) दृश्यताम्—'गुरुः-गुरुः-गुरुः' इति ।

### सर्वाङ्गे दुर्जनो विषम् ।

तक्षकस्य विषं दन्ते मक्षिकायाः विषं शिरः ।
वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥१२१॥

### सर्वारम्भास्तन्दुलप्रस्थमूलाः ।

शय्या वस्त्रं चन्दनं चारुहास्यं वीणा वाणी दृश्यते या च नारी ।
न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तन्दुलप्रस्थमूलाः ॥१२२॥

### सर्वे गुणाः काञ्चनमाश्रयन्ति

यस्यास्ति वित्तं स नरः कुलीनः स एव वक्ता स च दर्शनीयः ।
स पण्डितः स श्रुतवान्गुणज्ञः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥१२३॥
—भर्तृहरि—नीतिशतकम् ।

यथा विहङ्गास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति ।
यथा तरुण्यः पतिमाश्रयन्ति (क) सर्वे गुणाः काञ्चनमाश्रयन्ति ॥१२४॥

### सर्वे त्वद्विरहे नु मे परिचिताः ।

दाक्षिण्यं मलयानिलस्य विदितं शैत्यं सुधादीधिते-
र्वाचामेव न गोचरे मलयजस्यातिस्फुटं सौरभम् (ख) ।
सर्वे त्वद्विरहे नु मे परिचिताः (ग) प्राणेश ! तत्तत्कथा-
विष्कारे पुनरप्रमाणयति मामव्याहतेयं तनुः ॥१२५॥

### सर्वे त्वद्विरहेण हन्त ! दैन्यं गताः ।

शीर्णा गोकुलमण्डली पशुकुलं शष्पाय न स्पन्दते
मूकाः कोकिलपङ्क्तयः शिखिकुलं न व्याकुलं नृत्यति ।
सर्वे त्वद्विरहेण हन्त ! नितरां गोविन्द ! दैन्य गताः
किन्त्वेका यमुना कुरङ्गनयनानेत्राम्बुभिर्वर्धते ॥१२६॥

---

(क) 'श्रियमाश्रयन्ति' इति पाठान्तरम् ।
(ख) 'सौष्ठवम्' इति पाठान्तरम् ।
(ग) 'विश्लेषे तव के न मे परिचिताः' इति पाठान्तरम् ।

## सर्वेश्वरः श्रीहरिरेव सेव्यः ।

सर्वेन्द्रियैः सर्वविधैरुपायैः सर्वप्रयत्नेन च सर्वशक्त्या ।
सर्वोपचारैः खलु सर्वदैव सर्वेश्वरः श्रीहरिरेव सेव्यः ॥१२७॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## सर्वेषु गात्रेषु शिरः प्रधानम् ।

सर्वौषधीनाममृतं प्रधानं सर्वेषु सौख्येष्वशनं प्रधानम् ।
सर्वेन्द्रियाणां नयनं प्रधानं सर्वेषु गात्रेषु शिरः प्रधानम् ॥१२८॥

## सर्वेषु दानेष्वभयप्रदानम् ।

न भूप्रदानं न सुवर्णदानं न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं सर्वेषु दानेष्वभयप्रदानम् ॥१२९॥
—विष्णुशर्मा—हितोपदेशः ।

## सर्वैरुपायैः फलमेव साध्यम् ।

त्रिविक्रमोऽभूदपि वामनोऽसौ स शूकरश्चेति स वै नृसिंहः ।
नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव साध्यम् ॥१३०॥
—घटकर्पर—नीतिसारम् ।

## सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ।

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ! ।
सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते (क) ॥१३१॥
—भगवद्गीता ।

## सर्वं खलस्य चरितं मशकः करोति ।

प्राकपादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥१३२॥
—विष्णुशर्मा—हितोपदेशः ।

---

(क) दृश्यताम्—'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति ।

### सर्वं खल्विदं ब्रह्म ।

सर्वं खल्विदं ब्रह्म सर्वमात्मेति भावयेत् ।
अहमन्यदिदं चान्यदित्येषा खण्डखण्डधीः ॥१३३॥

### सर्वं त्यक्त्वा हरिं भजेत्

यद्भावि न तद्भावि भाविचेन्न तदन्यथा ।
इति निश्चित्य सततं सर्वं त्यक्त्वा हरिं भजेत् (क) ॥१३४॥

### सर्वं परवशे दुःखम् ।

सर्वं परवशे दुःखं सर्वमात्मवशे सुखम् ।
इति मत्वा तु राजेन्द्र ! स्वयं दासास्तपस्विनः ॥१३५॥

### सर्वं प्रिये ! चारुतरं वसन्ते ।

द्रुमाः सपुष्पाः सलिलं सपद्मं स्त्रियः सकामः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्या सर्वं प्रिये ! चारुतरं वसन्ते ॥१३६॥
—कालिदास—ऋतुसंहारम् ।

### सर्वं विष्णुमयं जगत् ।

जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥१३७॥

### सर्वं शौचमयं जगत् ।

कुर्वन्ति भक्तिरहिताः शौचाशौचविचारणाम् ।
केशवे दृढभक्तीनां सर्वं शौचमयं जगत् ॥१३८॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

### सर्वं सत्ये प्रतिष्ठितम् ।

सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥१३९॥

---

(क) दृश्यताम्—'कोटिं त्यक्त्वा हरिं भजेत्' इति।

## सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं लक्ष्यते ।

सञ्चारो रतिमन्दिरावधि पदन्यासावधि प्रेक्षितं
हास्यञ्चाधरपल्लवावधि महामानोऽथ मौनावधिः ।
चेतः कान्तसमीहितावधि सखीकर्णावधि व्याहृतं
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं लक्ष्यते ॥१४०॥

## सर्वः कार्यवशाज्जनोऽभिरमते ।

दृश्यताम्—'कस्यास्ति को वल्लभः' इति

## सलज्जा गणिका नष्टा ।

दृश्यताम्—'नष्टाः—नष्टाः—नष्टाः' इति ।

## ससर्पे च गृहे वासः ।

दृश्यताम्—'मृत्युरेव न संशयः' इति ।

## सहजोऽपि गुणः पुंसां साधुवादेन वर्धते ।

सहजोऽपि गुणः पुंसां साधुवादेन वर्धते ।
कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥१४१॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ।

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥१४२॥

—कालिदास—रघुवंशम् ।

## सहस्रशीर्षा पुरुषः ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
दलितश्चकितश्छन्नस्तव सैन्ये विसर्पति (क) ॥१४३॥

---

(क) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् इति समस्या ।

## सहायास्तादृशा एव यादृशी भवितव्यता ।

सा सा सम्पद्यते बुद्धिः सा मतिः सा च भावना ।
सहायास्तादृशा एव यादृशी भवितव्यता (क) ॥१४४॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सहायो बलवत्तरः ।

सगुणो निर्गुणो वापि सहायो बलवत्तरः ।
तुषेणापि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥१४५॥

## सा काशिकाहं निजबोधरूपा ।

मनोनिवृत्तिः परमोपशान्तिः सा तीर्थवर्या मणिकर्णिका च ।
ज्ञानप्रवाहा विमलादिगङ्गा सा काशिकाहं निजबोधरूपा ॥१४६॥
यस्यामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासम् ।
सच्चित्सुखैका परमात्मरूपा सा काशिकाहं निजबोधरूपा ॥१४७॥
—शङ्कराचार्य—काशीपञ्चकम् ।

## सा काष्ठा सा परा गतिः ।

दृश्यताम्—'इन्द्रियेभ्यः परा ह्यर्थाः' इति ।

## सा कृपा किमधुना न जायते ।

रामचन्द्र ! तव यादृशी कृपा वानरेषु न नरेषु तादृशी ।
वार्धकेन मयि वानरीकृते सा कृपा किमधुना न जायते ॥१४८॥

## सा जरा न जरा जरा ।

यस्य भार्या विरूपा च कश्मला कलहप्रिया ।
अधिकाधिकभद्दा च सा जरा न जरा जरा ॥१४९॥

---

(क) पाठान्तरम्—'मतिरुत्पद्यते तादृग्यादृशी भवितव्यता ।
सहायास्तादृशा एव व्यवसायोऽपि तादृशः' ॥
पाठान्तरम्—'तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः ।
सहायास्तादृशाश्चैव यादृशी भवितव्यता' ॥

## सा नाम दयिता कथम् ।

श्रुता भवति तापाय दृष्टा चोन्मादवर्धिनी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥१५०॥

—भर्तृहरि—शृङ्गारशतकम् ।

## सा नारी सुखभागिनी ।

न कार्येषु न भोगेषु नैश्वर्य्ये न सुखे तथा ।
स्पृहा स्याच्च यथा भर्तुः सा नारी सुखभागिनी ॥१५१॥

## सा भार्या—सा भार्या—सा भार्या ।

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥१५२॥

—महाभारते आदिपर्वणि ।

## सा भार्या सर्वदुर्लभा ।

कार्ये दासी रतौ वेश्या भोजने जननी समा ।
विपत्तौ बुद्धिदात्री च सा भार्या सर्वदुर्लभा ॥१५३॥

## सा रमा न रमा रमा ।

यस्य भार्या शुचिर्दक्षा भर्त्तारमनुगामिनी ।
नित्यं मधुरवक्त्री च सा रमा न रमा रमा ॥१५४॥

## सा विरहे तव दीना ।

निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरं
व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ।
सा विरहे तव दीना
माधव ! मनसिजविशिखभयादिव भावनया त्वयि लीना ॥१५५॥

—जयदेव—गीतगोविन्दम् ।

## सा सा सा सा जगति सकले ।

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य ।
हंहो चेतः ! प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥१५६॥

## सा हि धात्रैव निर्मिता ।

दृश्यताम्—'वृत्त्यर्थं नातिचेष्टेत' इति ।

## सागरोऽपि मरुभूमिसोदरः ।

आश्रयामि यदि कल्पपादपं सोऽपि याति सहसावकेशिताम् ।
मादृशां नयनकोणगोचरः सागरोऽपि मरुभूमिसोदरः ॥१५७॥

## साधनेषु प्रशस्तानि ।

पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥१५८॥
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥१५९॥
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ।
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥१६०॥

—कुलार्णवतन्त्रम् ।

## साधवोऽत्यन्तदुःखिनः ।

त्यक्त्वात्मसुखदुःखेच्छां सर्वसत्त्वगुणैषिणः ।
भवन्ति परदुःखेन साधवोऽत्यन्तदुःखिनः ॥१६१॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## साधवो न हि सर्वत्र ।

दृश्यताम्—'चन्दनं न वने वने' इति ।

## साधुः सीदति दुर्जनः प्रभवति ।

धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरे गतं
पृथ्वी मन्दफला नराः कपटिनश्चित्तं च शाठ्योर्जितम् ।
राजानोऽर्थपराः न रक्षणपराः पुत्राः पितुर्द्वेषिणः
साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ॥१६२॥

## साधूनामेकरूपता ।

यथा चित्तं तथा वाक्यं यथा वाक्यं तथा क्रिया ।
चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ॥१६३॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## साधूनां दर्शनं पुण्यम् ।

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥१६४॥

## साधूनां दुर्जनाद्भयम् ।

दृश्यताम्—'भयं—भयं—भयम्' इति ।

## साध्वीस्त्रीणां दयितविरहे ।

दृश्यताम्—'भवति मरणं किन्तु सम्भावितानाम्' इति ।

## सायको हि गरलैर्न लिप्यते ।

लोचने हरिणगर्वमोचने मा विभूषय कृशाङ्गि ! कज्जलैः ।
शुद्ध एव यदि जीवहारकः सायको हि गरलैर्न लिप्यते ॥१६५॥

## सारल्ये सारल्यं कुर्यात् ।

दृश्यताम्—'शठे शाठ्यं समाचरेत्' इति ।

## सारात्सारं विदुर्बुधाः ।

काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनम् ।
ध्यानं नारायणस्यैतत्सारात्सारं विदुर्बुधाः ॥१६६॥
—सत्यज्ञानानन्दतीर्थ—काशीस्तोत्रम् ।

## सिन्दूरविन्दुर्विधवाललाटे ।

को भाति भाले वरवर्णिनीनां का रौति दीना मधुयामिनीषु ।
कस्मिन्नु धत्ते शशिनं महेशः सिन्दूरविन्दुर्विधवाललाटे (क) ॥ १६७॥
करोति शोभामलके स्त्रियाः को दृश्या न कान्ता विधिना च कोक्ता ।
अङ्के तु कस्मिन्दहनः पुरारेः सिन्दूरविन्दुर्विधवाललाटे (ख) ॥ १६८॥
किम्भूषणं सुन्दरसुन्दरीणां किं दूषणं पान्थजनस्य नित्यम् ।
कस्मिन्विधात्रा लिखितं जनानां सिन्दूरबिन्दुर्विधवाललाटे (ग) ॥ १६९॥

## सीदत्यहो तरुतले खलु पक्षहीनः ।

उत्तुङ्गशैलशिखरस्थितपादपानां काकः कृशोऽपि फलमालभते सपक्षः ।
सिंहो बली द्विरदयूथविदारणोऽपि सीदत्यहो तरुतले खलु पक्षहीनः ॥ १७०॥

## सीदन्ति मम गात्राणि ।

अर्जुनस्य इमे वाणा नेमे वाणाः शिखण्डिनः ।
सीदन्ति मम गात्राणि माघमासेगवा इव (घ) ॥ १७१॥

## सीमा—सीमा—सीमा ।

कलासीमा काव्यं सकलगुणसीमा वितरणं
भये सीमा मृत्युः सकलसुखसीमा सुवदना ।
तपःसीमा मुक्तिः सकलकृतिसीमाश्रितभृतिः
प्रिये सीमाह्लादः श्रवणसुखसीमा हरिकथा ॥ १७२॥

## सुकविता यद्यस्ति राज्येन किम् ।

दृश्यताम्—'किं—किं—किम्' इति ।

---

(क) (ख) (ग) चतुर्थपादस्थपदैः प्रश्नानामुत्तरम् ।
(घ) माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवाः इत्युक्तेः कर्कट्याः अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य वहिर्यान्ति तद्वदिमे वाणा ममाङ्गानि विदारयन्तीत्यर्थः । भीष्मपितामहस्योक्तिरियम्

## सुखकणमणिहेतोः साहसं मास्म कार्षीः ।

विषयविषधराणां दोषदंष्ट्रोत्कटानां विषमविषविमर्दव्यक्तदुश्चेष्टितानाम् ।
विरम विरम चेतः ! सन्निधानादमीषां सुखकणमणिहेतोः साहसं मास्म कार्षीः ॥१७३॥

—शान्तिशतकम् ।

## सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके ।

सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके ।
मूर्ध्नि स्थितानां केशानां भवेतां स्नेहच्छेदने ॥१७४॥

—कुसुमदेव दृष्टान्तशतकम् ।

## सुखमध्ये स्थितं दुःखम् ।

सुखमध्ये स्थितं दुःखं दुःखमध्ये स्थितं सुखम् ।
द्वयमन्योन्यसंयुक्तं प्रोच्यते जलपङ्कवत् ॥१७५॥

## सुखस्य दुःखस्य न कोऽपि दाता ।

## सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
द्वयमेतद्धि जन्तूनामलङ्घ्यं दिनरात्रिवत् ॥१७६॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखावृते लोके नेहास्त्येकमनन्तरम् ॥१७७॥

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥१७८॥

## सुखार्थिनः कुतो विद्या ।

दृश्यताम्—'कुतो विद्यार्थिनः सुखम्' इति ।

## सुखं शान्तः शेते ।

महीशय्या शय्या विपुलमुपधानं भुजलता
वितानञ्चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरन्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव (क) ॥१७६॥

—भर्तृहरि—वैराग्यशतकम् ।

## सुखं सात्त्विकं राजसं तामसं च ।

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥१८०॥
विषयेन्द्रियसंयोगात्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् (ख) ॥१८१॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥१८२॥

—भगवद्गीता ।

## सुजनो न याति वैरम् ।

सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥१८३॥

—रविगुप्तस्य ।

## सुतनु ! जहिहि कोपम् ।

सुतनु! जहिहि कोपं पश्य पादानतं मां न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥१८४॥

—अमरुशतकम् ।

---

(क) पाठान्तरम्—'महाशय्या भूमिर्मसृणमुपधानं भुजलता
वितानञ्चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरच्चन्द्रो दीपः स्वधृतिवनितासङ्गमुदितः
सुखं शान्तः शेते विगतभवभीतिर्नृप इव' ॥

—शान्तिशतकम् ।

(ख) तथा च योगसूत्रम्—'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति ।२।१५॥

## सुतनु जहिहि मौनम् ।

सुतनु ! जहिहि मौनं मुञ्च वाचो जडत्वं
प्रणयिणि ! मयि कोपं किङ्करे किङ्करोषि ।
अथ यदि तव चित्ते सापराधोऽस्मि बाले !
निज भुजयुगवल्लीबन्धनं मां विधेहि ॥१८५॥

## सुतनु ! वितनु वाचम् ।

सुतनु ! वितनु वाचं मुञ्च वाचंयमत्वं प्रणयिनि ! मयि कोपं किङ्करे किङ्करोषि ।
यदि पुनरहमन्यां चेतसा चिन्तयामि तदिह कुचमहेशं तावकीनं स्पृशामि ॥ १८६॥

## सुदुर्लभा भागवता हि लोके ।

अक्ष्णोः फलं त्वादृशदर्शनं हि तन्वः फलं त्वादृशगात्रसङ्गः ।
जिह्वाफलं त्वादृशकीर्तनं हि सुदुर्लभा भागवता हि लोके ॥१८७॥
—हरिभक्तिसुधोदयम् ।

## सुदीर्घकालेऽपि न याति विक्रियाम् ।

सुजीर्णमन्नं सुविचक्षणः सुतः सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य यत्कृतं सुदीर्घकालेऽपि न याति विक्रियाम् ॥१८८॥
—विष्णुशर्मा—हितोपदेशः ।

## सुदृढं चैव कर्त्तव्यम् ।

कृषिर्विद्या वणिग्भार्या स्वधनं राज्यसम्पदः ।
सुदृढं चैव कर्त्तव्यं कृष्णसर्पमुखं यथा ॥१८९॥
—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सुपुत्रेण कुलं यथा ।

एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥१९०॥
—चाणक्यशतकम् ।

## सुपुत्रः सप्तमो रसः ।

## सुलभं नामसाधनम् ।

दृश्यताम्—'दुर्लभं भारते जन्म' इति

## सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ।

सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ।
स्वदारपरिहारेण परदारार्थिनो जनाः ॥१६१॥

—कुसुमदेव—दृष्टान्तशतकम् ।

## सुवर्णस्य च मुद्रिका ।

सुवर्णस्य[1] सुवर्णस्य[2] सुवर्णस्य[3] च जानकि ! ।
प्रेषिता तव रामेण सुवर्णस्य[4] च मुद्रिका (क) ॥१६२॥

## सूत्रे मणिगणा इव ।

दृश्यताम्—'मयि सर्वमिदं प्रोतम्' इति ।

## सूर्यालोके यथा जनाः ।

आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्त्तन्ते सूर्यालोके यथा जनाः ॥१६३॥

—शङ्कराचार्य—आत्मबोधः ।

## सेवकान्ने पुरातने ।

दृश्यताम्—'नवं नवा नूतनं पुरातनञ्च' इति ।

## सेवनात्तु विवर्धते ।

उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः ।
आहारो मैथुनं निद्रा सेवनात्तु विवर्धते ॥१६४॥

---

(क) [1] सुवर्णस्य=उज्ज्वलवर्णस्य; [2] सुवर्णस्य=शोभना वर्णानामाक्षराणि यत्र तस्य; [3] सुवर्णस्य=अशीतिरक्तिकापरिमितस्य, [4] सुवर्णस्य=काञ्चनस्य। हनुमदुक्तिरियम् ।

## सेवाधर्मः परमगहनः ।

मौनान्मूर्खः प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः ।
धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥१६५॥

—विष्णुशर्मा—हितोपदेशः ।

## सेवितव्यो महावृक्षः ।

दृश्यताम्—'छाया केन निवार्यते' इति ।

## सोऽक्षयं नरकं व्रजेत् ।

आज्ञासम्पादिनीं दक्षां सुरूपां शीलमण्डनाम् ।
योऽदृष्टदोषां त्यजति सोऽक्षयं नरकं व्रजेत् ॥१६६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## सोऽपि शब्दविवर्जितः ।

वाचो यस्मान्निवर्त्तन्ते तद्वक्तुं केन शक्यते ।
प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥१६७॥

—शङ्कराचार्य—अपरोक्षानुभूतिः ।

## सोऽपि सम्प्रति हंसको विधिवशात्काष्ठं तृणं याचते

वातान्दोलितपङ्कजच्युतरजःपीठाङ्गरागोज्ज्वलो
यः श्रुत्वोत्कलकूजितं मधुलिहां सञ्जातहर्षोत्सवः ।
कान्ताचञ्चुपुटाञ्चलस्थितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं सम्प्रति हंसको विधिवशात्काष्ठं तृणं याचते (क) ॥१६८॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

---

(क) पाठान्तरम्—'वातान्दोलितपङ्कजस्थितरजःपुञ्जाङ्गरागोज्ज्वलो
यः शृण्वन्कलकूजितं मधुलिहां सञ्जातहर्षः पुरा ।
कान्ताचञ्चुपुटापवर्जितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं सम्प्रति हंसको मरुगतः कौपं पयो याचते' ॥

—सुभाषितरत्नभाण्डागारम् ।

## सोऽयं हंसः समाशंसति ।

पीतं येन पुरा पुरन्दरपुरीरम्भोरुकेलिस्खल-
न्मन्दाराङ्कुरकर्णपूरसुरभि स्वर्गापगायाः पयः ।
सोऽयं मारववारि पामरवधूपादार्पणप्रोच्छल-
त्पङ्कातङ्कितभेकझम्पकलुषं हंसः समाशंसति ॥१९९॥

## सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्त्तके केशवे ।

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्त्तिनी
सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्त्तके केशवे ॥२००॥

—गीताध्यानम् ।

## सोमे शनौ दक्षिणमर्थलाभम् ।

दृश्यताम्—'अङ्गारपूर्वं गमने च लाभः' इति ।

## सौख्यं कुतः प्राणिनाम् ।

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे (क) सौख्यं कुतः प्राणिनाम् ॥२०१॥

—भर्तृहरि—वैराग्यशतकम् ।

## (चकार) संक्षोभमक्षरजुषामपि चित्ततन्वोः ।

तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥२०२॥

—श्रीमद्भागवतम् ।

---

(क) 'वारितरङ्गबुद्बुदसमे' इति पाठान्तरम् ।

## संरक्षतां प्रियतमो हृदि वर्त्तते यः ।

अङ्गानि मे दहतु कान्तवियोगवह्निः संरक्षतां प्रियतमो हृदि वर्त्तते यः ।
इत्याशया शशिमुखी गलदश्रुबिन्दुधाराभिरुष्णमभिसिञ्चति हृत्प्रदेशम् ॥२०३॥

## संवीतस्त्वं कलय वदनोल्लासवेणुर्विहारम् ।

या ते लीला रसपरिमलोद्गारिवन्यापरीता
धन्या क्षौणी विलसति वृता माथुरी माधुरीभिः ।
तत्रास्माभिश्चटुल ! पशुपीभावमुग्धान्तराभिः
संवीतस्त्वं कलय वदनोल्लासवेणुर्विहारम् (क) ॥२०४॥

—चैतन्यचरितामृते—ललितमाधवम् ।

## संशयात्मा विनश्यति ।

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥२०५

—भगवद्गीता ।

## संसार एतस्य न वस्तुतोऽस्ति ।

सुषुप्तिकाले मनसि प्रलीने नैवास्ति किञ्चित्सकलप्रसिद्धेः ।
अतो मनःकल्पित एव पुंसः संसार एतस्य न वस्तुतोऽस्ति ॥२०६॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## संसारोऽयमतीवविचित्रः ।

का तव कान्ता कस्ते पुत्रः संसारोऽयमतीवविचित्रः ।
कस्य त्वं वा कुत आयातस्तत्त्वं चिन्तय तदिदं भ्रातः ॥२०७॥

—शङ्कराचार्य—मोहमुद्गरः ।

## संसारः स्वप्नतुल्यो हि ।

दृश्यताम्—'प्रबोधेऽसत्यवद्भवेत्' इति ।

---

(क) श्रीमतीराधिकाया उक्तिरियं श्रीकृष्णं प्रति ।

## संहतिः कार्यसाधिका ।

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥२०८॥
—विष्णुशर्मा—हितोपदेशः ।

## सांख्यपातञ्जलवेत्तोराशीर्वचनम् ।

पद्मपत्राम्बुनिर्लेपपुरुषस्यानुकारिणी ।
प्रकृतिस्ते महतत्त्वं संवर्धयतु सर्वदा (क) ॥२०९॥
—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

## सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ।

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेच्छूकरः
कः कः कं कमलाकरं विमलकं कर्त्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्त्तते ॥२१०॥

## स्त्रियाश्चरित्रं पुरुषस्य भाग्यम् ।

गुरोश्च पुत्रे वरमाल्यदाने दिष्ट्या प्रदत्तं खलु कार्त्तिकाय ।
स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्याः (ख) ॥२११॥

---

(क) पद्मपत्रस्थित जल के समान निर्लिप्तभाव से अवस्थित पुरुष की अनुकारिणी जो प्रकृति है वह सर्वदा आपके महतत्त्व को संवर्धित करे।

(ख) एक राजकुमारी किसी ब्राह्मण से पढ़ती थी। एक दिन जब ब्राह्मण निमन्त्रण के कारण स्थानान्तर गया था तब ब्राह्मण का पुत्र राजकुमारी को पढ़ाने गया। पढ़ाते पढ़ाते दैवयोग से राजकुमारी के हाथ से लेखनी गिर गई तो ब्राह्मणपुत्र ने उसे उठा दिया। राजपुत्री के कृतज्ञता प्रकाश करने पर गुरुपुत्र ने कहा—"यदि मुझ से तुम्हारा कोई उपकार हुआ हो तो तुम भी मेरे लिये कुछ प्रत्युपकार करो"। राजकुमारी ने जब प्रत्युपकार करने की प्रतिज्ञा की तब गुरुपुत्र ने कहा—"तुम मुझे अपना पति बना लो।" अगत्या राजकुमारी को यही स्वीकार करना पड़ा और उसने कहा—"आज रात्रि को शिवमन्दिर में जाकर मेरे लिये अपेक्षा करना। वहाँ जाकर मैं आपको वरमाला पहना दूँगी"। कार्त्तिक नामक अध्यापक का नौकर समीप से यह सब वृत्तान्त सुन रहा था, और जब अध्यापक सायंकाल में घर लौटा तब नौकर ने उस से सब हाल कह सुनाया। तब अध्यापक ने कौशल से अपने पुत्र को घर के भीतर बन्द कर दिया। इधर कार्त्तिक शिवालय में जाकर राजकुमारी

## स्त्रीणां कुतः सतीत्वञ्च ।

दृश्यताम्—'कुतः—कुतः—कुतः' इति ।

## स्त्रीणामशिक्षितपटुत्वममानुषीणाम् ।

स्त्रीणामशिक्षितपटुत्वममानुषीणां संदृश्यते किमुत याः परिबोधवत्यः ।
प्रागन्तरीक्षगमनात्स्वमपत्यजातमन्यद्विजैः परभृताः किल पोषयन्ति ॥२१२॥
—कालिदास—अभिज्ञानशकुन्तलम् ।

## स्त्रीणामेतद्भूषणञ्चायुधञ्च ।

भ्रूचातुर्यात्कुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जिताश्चैव हासाः ।
लीलामन्दं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणञ्चायुधञ्च ॥२१३॥
—भर्तृहरि—शृङ्गारशतकम् ।

## स्त्रीपुंसोर्जातिलक्षणम् ।

पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् ॥२१४॥
—श्रीजयदेव—रतिमञ्जरी ।

## स्त्रीबुद्धिः प्रलयङ्करी ।

दृश्यताम्—'आत्मबुद्धिः शुभकरी' इति ।

## स्त्रीभिः कस्य न खण्डितं भुवि मनः ।

दृश्यताम्—'कः—कस्य—कः—कस्य' इति ।

---

का आगमन प्रतीक्षा करने लगा और जब राजकुमारी ने आकर गुरुपुत्र को आवाहन किया तब कार्त्तिक ने 'हूँ' से उत्तर दिया। राजकुमारी ने तब उसके गले में वरमाला पहना दी और अन्त में जब परिचय पाया तब अत्यन्त दुखी होकर कहने लगी—"मैं तो गुरु-पुत्र को माला देने को आई थी, परन्तु अन्त में भृत्य कार्त्तिक के गले में वरमाला गिर गई। अब मैं समझी स्त्रियों का चरित्र और पुरुषों के भाग्य को मनुष्य की क्या बात देवता भी नहीं जान सकते हैं"।
दृश्यताम्—'देवो न जानाति कुतो मनुष्यः' इति।

## स्त्रियो रुद्याः कुचेलतः ।

दृश्यताम्—'रुदयते—रुदयते—रुदयते' इति ।

## स्त्रियः श्रियो गृहस्योक्ताः ।

पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥२१५॥

—विदुरोक्तिः—महाभारते उद्योगपर्वणि ।

## स्त्रीयः परीक्षा तु निर्धने पुंसि ।

दृश्यताम्—'परीक्षा—परीक्षा—परीक्षा' इति ।

## स्त्रीरत्नं दुष्कुलादपि ।

श्रद्दधानः शुभां विद्यामाददीतावरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि (क) ॥२१६॥

## स्त्रीवित्तमधमाधमम् ।

दृश्यताम्—'उत्तमं—मध्यमं—अधमम्' इति ।

## स्थातुं गन्तुं द्वयमपि सखे ! नैव शक्तो द्विरेफः ।

गन्धाढ्यासौ भुवनविदिता केतकी स्वर्णवर्णा
पद्मभ्रान्त्या क्षुधितमधुपः (ख) पुष्पमध्ये पपात ।
अन्धीभूतः कुसुमरजसा कण्टकैश्छिन्नपक्षः (ग)
स्थातुं गन्तुं द्वयमपि सखे ! नैव शक्तो द्विरेफः (घ) ॥२१७॥

—कालिदास—भ्रमराष्टकम् ।

---

(क) दृश्यताम्—'नीचादप्युत्तमां विद्याम्' इति ।
(ख) 'चपलमधुपः' इति पाठान्तरम् ।
(ग) 'कण्टकैर्लूनपक्षः' इति पाठान्तरम् ।
(घ) यथा कोऽपि कस्मिंश्चिद्गृहे कस्यामपि नायिकायां तदन्निच्छया समासक्तः तद्गृहवासिभिः सन्ताडितः तत्र गतिस्थितिविधाने असमर्थो भवति तद्वदिति ध्वनिः ।

## स्थानभ्रष्टा न शोभन्ते ।

राजाकुलबधूर्विप्रा मन्त्रिणश्च पयोधराः ।
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः (क) ॥२१८॥
—विष्णुशर्मा—हितोपदेशः ।

## स्थानमुत्सृज्य गच्छन्ति ।

दृश्यताम्—'तत्रैव निधनं यान्ति' इति ।

## स्थानवृद्धिकरः शनिः ।

स्थानहानिकरो जीवः (ख) स्थानवृद्धिकरः शनिः ।
दृष्टिवृद्धिकरो जीवो दृष्टिहानिकरः शनिः ॥२१९॥

## स्थानहानिकरो जीवः ।

धनुर्मीनगते जीवः शनिर्मकरकुम्भयोः ।
स्थानहानिकरो जीवः स्थानवृद्धिकरः शनिः ॥२२०॥

## स्थानं प्रधानं न बलं प्रधानम् ।

स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि सिंहः ।
जानामि भो नाग ! तव प्रभावं कण्ठे स्थितो गर्जसि शङ्करस्य ॥२२१॥

## स्थिरता नास्ति सम्पदाम् ।

दृश्यताम्—'नास्ति—नास्ति—नास्ति' इति ।

## स्थिरधीस्तु तदेव मन्यते ।

अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम् ।
स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥२२२॥
—कालिदास—रघुवंशम् ।

---

(क) पाठान्तरम्—'स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः ।
इति विज्ञाय मतिमान् स्वस्थानं न परित्यजेत्' ॥
'स्थानभ्रष्टा न शोभन्ते दन्ताःकेशा नखा नराः ।
स्थानभ्रष्टास्तु शोभन्ते सिंहाः सत्पुरुषा गजाः' ॥
(ख) जीवः=बृहस्पतिः ।

## स्थूलस्य सम्भवजरामरणानि धर्माः ।

स्थूलस्य सम्भवजरामरणानि धर्माः
स्थौल्यादयो बहुविधः शिशुताद्यवस्थाः ।
वर्णाश्रमादिनियमा बहुधामयाः स्युः
पूजावमानबहुमानमुखा विशेषाः ॥२२३॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## स्थूलं निन्द्यमिदं वपुः ।

त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसङ्कुलम् ।
पूर्णं मूत्रपुरीषाभ्यां स्थूलं निन्द्यमिदं वपुः ॥२२४॥

—शङ्कराचार्य—विवेकचूडामणिः ।

## स्नाने दशैते गुणाः ।

स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं
शौचस्यायतनं मलापहरणं संवर्धनं तेजसः ।
रूपोद्द्योतकरं गदप्रशमनं कामाग्निसन्दीपनं
नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणाः (क) ॥२२५॥

## स्नानं मनोमलत्यागः ।

स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागः दानं वै भूतरक्षणम् ॥२२६॥

—विदुरोक्तिः—महाभारते उद्यगपर्वणि ।

## स्नेहस्तु कारणमनर्थपरम्परायाः ।

दुग्धं पयस्तदपि च क्वथितं तदेव माधुर्यमप्यपहृतं मथितं च वेगात् ।
दग्धः पुनर्घृतकृते नवनीतपिण्डः स्नेहस्तु कारणमनर्थपरम्परायाः ॥२२७॥

## स्नेहोऽनर्थस्य कारणम् ।

दृश्यताम्—'निःस्नेहो याति निर्वाणम्' इति ।

---

(क) दृश्यताम्—'गुणा दश स्नानशीलं भजन्ते' इति ।

## स्पर्शदोषो न विद्यते ।

कुण्डे काष्ठे रथे मञ्चे नौकायां पशुवृक्षयोः ।
तृणौघजनसंघाते स्पर्शदोषो न विद्यते ॥२२८॥

## स्पृष्टास्पृष्टिर्न विद्यते ।

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न विद्यते ॥२२९॥

## स्मरणं चेतसो धर्मः ।

दृश्यताम्—'चेतस्तु तव सन्निधौ' इति ।

## स्मितमुखी लज्जावती पातु वः ।

मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः
किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ ।
कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते
श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥२३०॥

## स्मृतिभ्रंशाद्बुद्धिनाशः ।

दृश्यताम्—'ध्यायतो विषयान्पुंसः' इति ।

## स्वकर्मसूत्रग्रथितो हि लोकः ।

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥२३१॥

## स्वकार्यमुद्धरेत्प्राज्ञः ।

दृश्यताम्—'कार्यध्वंसो हि मूर्खता' इति ।

## स्वगुणान्परदोषान्वा वक्तुं शक्नोति दुर्जनो लोके ।

स्वगुणान्परदोषान्वा वक्तुं शक्नोति दुर्जनो लोके ।
परदोषान्स्वगुणान्वा वक्तुं शक्तो न सज्जनो लोके ॥२३२॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स्वच्छेषु प्रतिविम्बवत् ।

सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते ।
बुद्धावेवावभासेत स्वच्छेषु प्रतिविम्बवत् ॥२३३॥

—शङ्कराचार्य—आत्मबोधः ।

## स्वजनसुतशरीरादीनि विद्युच्चलानि ।

दृश्यताम्—'क्षणिकमिति समस्तम्' इति ।

## स्वदेशे पूज्यते राजा ।

दृश्यताम्—'विद्वान्सर्वत्र पूज्यते' इति ।

## स्वधर्मे निधनं श्रेयः ।

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥२३४॥

—भगवद्गीता ।

## स्वधर्मे स्थिरता स्थैर्यम् ।

दृश्यताम्—'स्नानं मनोमलत्यागः' इति ।

## स्वपन्ति ते मूढधियः क्षितीन्द्राः ।

नियोगिहस्तार्पितराज्यभारास्तिष्ठन्ति ये शैलविहारसाराः ।
बिडालवृन्दाहितदुग्धकुम्भाः स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥२३५॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स्वप्ने ह्यगम्यागमनञ्च धन्यम् ।

आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् ।
विष्ठानुलेपो रुदितं मृतञ्च स्वप्ने ह्यगम्यागमनञ्च धन्यम् ॥२३६॥

—कालिदास—द्वात्रिंशत्पुत्तलिका ।

## स्वबोधे नान्यबोधेच्छा ।

स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः ।
न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥२३७॥

—शङ्कराचार्य—आत्मबोधः ।

## स्वभाव एवात्र तथातिरिच्यते ।

न धर्मशास्त्रं पठतीति कारणं न चापि विद्याध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥२३८॥
—विष्णुशर्मा—हितोपदेशः ।

## स्वभाव एवैष परोपकारिणाम् ।

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥२३९॥
—भर्तृहरि—नीतिशतकम् ।

## स्वभावरम्यं लावण्यं तारुण्येन मनोहरम् ।

दृश्यताम्—'गुणा गुणान्तरापेक्षी' इति ।

## स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।

स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।
मुक्तारत्नस्य शाणाग्रघर्षणं नोपयुज्यते ॥२४०॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## स्वभावोऽयं महात्मनाम् ।

वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता ।
निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥२४१॥

## स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।

स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥२४२॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।

स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसम्पर्कतः पिकाः ॥२४३॥
—कुसुमदेव—दृष्टान्तशतकम् ।

## स्वयम्—स्वयम्—स्वयम् ।

स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किञ्चन ॥२४४॥
अन्तः स्वयं चापि वहिः स्वयञ्च स्वयं पुरस्तात् स्वयमेव पश्चात् ।
स्वयं ह्यवाच्यां स्वयमप्युदीच्यां तथोपरिष्टात्स्वयमप्यधस्तात् ॥२४५॥
—शङ्कराचार्य—विवेकचूडामणिः ।

## स्वयमपि लिखितं स्वयं न वाचयति ।

वाचयति नान्यलिखितं लिखितमनेनापि वाचयति नान्यः ।
अयमपरोऽस्य विशेषः स्वयमपि लिखितं स्वयं न वाचयति ॥२४६॥

## स्वयं वा तत्र गच्छति ।

भवितव्यं यथा येन नासौ भवति नान्यथा ।
नीयते तेन मार्गेण स्वयं वा तत्र गच्छति (क) ॥२४७॥

## स्वयं दासास्तपस्विनः ।

दृश्यताम्—'सर्वं परवशे दुःखम्' इति ।

## स्वर्गस्थोऽसौ महीतले ।

अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च ।
अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥२४८॥
—चाणक्यशतकम् ।

## स्वर्गस्य मूलं हरिभक्तिरेका ।

दृश्यताम्—'तथाभिमानो नरकस्य मूलम्' इति ।

## स्वर्गः किं यदि वल्लभा निजवधूः ।

दृश्यताम्—'किं—किं—किम्' इति ।

---

(क) दृश्यताम्—'यत्रस्थं तत्र नीयते' इति । 'बलाद्दैवेन नीयते' इति ।
तथाहि—'तुलसी जैसी भवितव्यता तैसी मिलै सहाय ।
आपु न आवे ताहि पै ताहि तहाँ लै जाय' ॥
—तुलसीदास ।

## स्वल्पा विद्या भयङ्करी ।

विद्यया पूज्यते लोके विद्यया सुखमश्नुते ।
विद्या शुभकरी किन्तु स्वल्पा विद्या भयङ्करी (क) ॥२४९॥

## स्वस्मादन्यन्न किञ्चन ।

दृश्यताम्—'स्वयम्—स्वयम्—स्वयम्' इति ।

## स्वात्मावबोधादधिकं न किञ्चित् ।

दृश्यताम्—'इतो न किञ्चित्परतो न किञ्चित्' इति ।

## स्वार्थो यस्य परार्थ एव ।

दृश्यताम्—'स पुमानेकः सतामग्रणीः' इति ।

---

(क) (१) किसी ग्राम में एक अनाड़ी वैद्य रहता था। वह कुछ भी नहीं पढ़ा था। केवल दूसरे के रचित ग्रन्थों को देख कर चिकित्सा किया करता था। किसी ग्रन्थ में एक स्थान पर यह लिखा हुआ था—'नेत्ररोगे समुत्पन्ने कर्णौ छित्वा कटिं दहेत्'। अर्थात् नेत्र रोग होने से कानों में छेद कर कटिदेश जला दिया जाय। यह अश्वचिकित्सा की व्यवस्था है, परन्तु वैद्य को इसका ज्ञान नहीं था। एक समय उसके पास कोई नेत्ररोगी आया। उसने उस रोगी की इसी प्रकार से चिकित्सा की जिस से उसका विपरीत फल हुआ। (२) किसी ग्राम में एक विद्याहीन भट्टाचार्य वास करता था। उसने कभी किसी अध्यापक की चतुष्पाठी में पदार्पण नहीं किया था, केवल नाना स्थानों से कुछ वचन संग्रह कर अपनी विद्या का परिचय दिया करता था। ग्राम में सब निरक्षर कृषक बसते थे। इस कारण भट्टाचार्य महाशय ग्राम के बीच में एक महापण्डित और व्यवस्थादाता गिना जाने लगा। एक समय भट्टाचार्य महाशय ने एक वचन में यह लिखा देखा—

'कन्दुपक्वानि तैलेन पायसं दधिसक्तवः।
द्विजैरेतानि भोज्यानि शूद्रगृहकृतान्यपि'॥

अर्थात् तैलभर्जित द्रव्य, पायस, दधि और सक्तु ये सब द्रव्य शूद्र के घर में बनने पर भी ब्राह्मण भोजन कर सकता है। यहाँ पर क्लीवलिङ्गवाचक पायस् शब्द का अर्थ घनीभूत दुग्ध अर्थात् क्षीर है; पायस् शब्द पुंलिङ्ग होने से उसका अर्थ परमान्न होता है। परन्तु ब्राह्मण को इसका ज्ञान नहीं था। इस कारण उसने व्यवस्था दी कि ब्राह्मण लोग शूद्र के घर परमान्न भोजन कर सकते हैं। इसी व्यवस्था के अनुसार कार्य भी हुआ। पार्श्ववर्त्ती ग्राम के ब्राह्मणों ने जब इस बात को जाना तो उन्होंने भट्टाचार्य महाशय को जातिवहिष्कृत कर दिया। अन्त में उस शूद्रान्न भोजन करने से जो पाप हुआ उसका प्रायश्चित्त करने पर वह जाति में फिर ले लिया गया।

# ह

## हतमपि निहन्त्येव मदनः ।

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः (क) ।
क्षुधाक्षामो जीर्णः पिठरककपालार्दितगलः (ख)
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ १॥

—भर्त्तृहरि—शृङ्गारशतकम् ।

## हन्ति श्रेयांसि सर्वाणि ।

आयुः श्रियं यशो धर्मं लोकानाशिष एव च ।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥२॥

—श्रीमद्भागवतम् ।

## हर ! हर ! वामो विधिर्भवतः ।

उदितवति द्विजराजे कस्य न हृदये मुदः पदं दधति ।
संकुचसि कमल यदयं हर ! हर ! वामो विधिर्भवतः ॥३॥

## हरति धनपतेः केशवस्यापि लक्ष्मीम् ।

नित्यं छेदस्तृणानां क्षितिनखलिखनं पादयोरल्पपूजा
दन्तानामल्पशौचं वदनमलिनता रूक्षता मूर्धजानाम् ।
द्वे सन्ध्ये चापि निद्रा विवसनशयनं ग्रासहासातिरेकः
स्वाङ्गे पीठे च वाद्यं हरति धनपतेः केशवस्यापि लक्ष्मीम् ॥ ४॥

—अष्टरत्नम् ।

## हरति सकलदोषं चन्द्रमाः संमुखस्थः ।

करणभगणदोषं वारसंक्रान्तिदोषं कुतिथिकुलिकदोषं यामयामार्धदोषम् ।
कुजशनिरविदोषं राहुकेत्वादिदोषं हरति सकलदोषं चन्द्रमाः संमुखस्थः ॥ ५॥

---

(क) पाठान्तरम्—'कृमिकुलशतैराचिततनुः' इति।
(ख) 'बहुलनृकपालार्दितगलः' इति वैराग्यशतके।

### हरावभक्तस्य कुतो महद्‌गुणाः ।

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्‌गुणाः मनोरथेनासति धावतो बहिः ॥६॥
—श्रीमद्‌भागवतम् ।

### हरि ! हरि ! तालितनगरे केवलमाम्रातकं शरणम् ।

मीनाः श्रुतिपथलीना गव्यं भव्यैर्न लभ्यते क्वापि ।
हरि ! हरि ! (क) तालितनगरे केवलमाम्रातकं शरणम् ॥७॥

### हरिणशिशुरेवं विलपति ।

दृश्यताम्—'क्व यामः किं कुर्मः' इति ।

### हरिभक्तिं विना नास्ति शस्त्रं छेत्तुं महाद्रुमम् ।

मोहमूलमहङ्कारशाखं शोकफलप्रदम् ।
हरिभक्तिं विना नास्ति शस्त्रं छेत्तुं महाद्रुमम् ॥८॥
—ताराकुमार—कृष्णभक्तिरसामृतम् ।

### हरिरिह मुग्धबधूनिकरे ।

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली ।
केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली ।
हरिरिह मुग्धबधूनिकरे विलासिनि विलसति केलिपरे ॥९॥
—जयदेव—गीतगोविन्दम् ।

### हरिहराद्वैतवादिन आशीर्वचनम् ।

ब्रह्माविष्टमनाः सदैव कमलासक्तो विषादो विभुः
कावासोऽथ विभूतिमान्गिरिवराधारोऽभयावल्लभः ।
सर्पाधीशधरो विपुङ्गवचरो लोकत्रयानन्दको
भूयाद्वो हृदयंगतः प्रतिलवं कृष्णोऽथवा शङ्करः (ख) ॥१०॥
—चिरञ्जीवशर्मा—विद्वन्मोदतरङ्गिणी ।

---

(क) हरि हरि इति खेदे ।
(ख) यह द्व्यर्थबोधक श्लोक है जिसका अर्थ दोनों प्रकार से हो सकता है । कृष्ण पक्ष में इसका

## हरे ! त्वमेकोऽसि हि कर्णधारः ।

अनन्तभूतेषु सदा ममत्वं भवे वियोगस्य न विद्यतेऽन्तः ।
अतो ह्यपारः खलु शोकसिन्धुर्हरे ! त्वमेकोऽसि हि कर्णधारः ॥११॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हरे मुरारेऽखिलशक्तिधारक ! ।

सोढुं न भूयः प्रभवन्ति दुर्बलाः प्राणा भवक्षोभमहोवतेदृशम् ।
हरे मुरारेऽखिलशक्तिधारक ! प्रयच्छ शक्तिं सकलं यथा सहे ॥१२॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हरे मुरारे मधुकैटभारे ।

पदे पदे मोहमदेन मत्तो हा त्वामनिच्छन्नपि विस्मरामि ।
मोहं जहीमं मधुकैटभं मे 'हरे मुरारे मधुकैटभारे' (क) ॥१३॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

---

अर्थ यह है—ब्रह्मा निरन्तर समाहित चित्त हो कर जिनका ध्यान किया करते हैं, जो कमलावल्लभ और नियत कमला में आसक्त अथवा पद्मप्रिय हैं और जिन्होंने पूतना के स्तनस्रक्षित विष को भक्षण किया है, जो अखिल जगत् के नियन्ता, जिनका महार्णव के जल में वास है, जो द्वारकादि के ऐश्वर्यवान् हैं, जिन्होंने गोवर्धन धारण किया था, भुजङ्गराज अनन्त जिनका आश्रय है, खगराज गरुड़ जिनका वाहन है जो त्रिलोकी के आनन्ददाता हैं वही कृष्ण । शिवपक्ष में यह अर्थ होगा—ब्रह्मा जिनका निरन्तर एकाग्रचित्त से ध्यान करते हैं, जो दुर्गा के वल्लभ हैं, जिन्होंने देवताओं के धन और ऐश्वर्य में आसक्त न हो कर कुबेर को समर्पण कर दिया है, जिन्होंने समुद्रमन्थनोत्थित विष को पान किया है, जो त्रैलोक्य के अधीश्वर हैं, जो श्मशानादि कुत्सित स्थान में वास करते हैं, जो स्वयं अपने देह में सदा भस्म लेपन किया करते हैं, कैलास पर्वत जिनका वासस्थान है, जिन्होंने विषधरों को अपने अङ्ग में धारण किया है, जिनका वाहन असाधारण बलवीर्यशाली वृषभ है, जो त्रिलोकी के आनन्दप्रद हैं, वही शङ्कर—अर्थात् एकात्मक हरि अथवा हर प्रतिक्षण आप लोगों के हृदयगत हों।

(क) अस्य श्लोकस्य चतुर्थपदः निम्नोक्ततारकब्रह्मनामश्लोकात्कविना उद्धृतः—
'हरे मुरारे मधुकैटभारे गोपाल गोविन्द मुकुन्द शौरे।
यज्ञेश नारायण कृष्ण विष्णो निराश्रयं मां जगदीश रक्ष' ॥

## हरेरद्य द्वारे शिव ! शिव ! शिवानां कलकलः ।

न यत्र स्थेमानं (क) दधुरतिभयभ्रान्तनयना (ख)
गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः (ग) ।
लुठन्मुक्ताभारे (घ) भवति परलोकं गतवतो
हरेरद्य (ङ) द्वारे शिव ! शिव ! शिवानां (च) कलकलः ॥१४॥

## हरे पदाहतिः श्लाघ्या ।

हरेः पदाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् ।
स्पर्धापि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥१५॥

## हलाहलो नैव विषम् ।

हलाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्त्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥१६॥

## हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।

यथाकामं यथोत्साहं यथाकालमरिन्दम ! ।
सेविता विषयाः पुत्र ! यौवनेन मया सह ॥१७॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते (छ) ॥१८॥

—महाभारते—ययात्युपाख्यानम् ।

---

(क) स्थितिम् ।
(ख) अत्यन्त भय से चकित नेत्रवाले ।
(ग) झरते हुए मद की अधिकता से जिनपर भौंरे घूमते थे ऐसे हाथी ।
(घ) लुठन्मुक्ताभारे अर्थात् जहाँ मोतियों का समूह बिखरा रहता था ऐसे सिंह के द्वार पर सियारों का कोलाहलध्वनि हो रहा है ।
(ङ) हरेः सिंहस्य इत्यर्थः ।
(च) क्रोष्टीणामित्यर्थः ।
(छ) दृश्यताम्—'तथा तृष्णां परित्यजेत्' इति ।

## हसति लसति हर्षात्तीव्रदुःखे परेषाम् ।

हसति लसति हर्षात्तीव्रदुःखे परेषां स्खलति गलति मोहादात्मनः क्लेशलेशे ।
नदति वदति निन्द्यं मानिनां किं च नीचः परुषवचनमल्पं श्रावितो हन्तुमेति ॥१९॥

## हसति वदति किञ्चित्तत्तु दुःखं न सह्यम्

दृश्यताम्—'तत्तु दुःखं न सह्यम्' इति ।

## हस्तस्य भूषणं दानम् ।

दृश्यताम्—'भूषणे किं प्रयोजनम्' इति ।

## हा कष्टं ! खलु वर्त्तते कलियुगे ।

निर्वीर्या पृथिवी निरोषधिरसा नीचा महत्वं गता
भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः ।
भार्या भर्त्तृविरोधिनी पररता पुत्राः पितुर्द्वेषिणो
हा कष्टं ! खलु वर्त्तते कलियुगे धन्या नरा ये मृताः ॥२०॥

## हा कष्टं ! पुरुषस्य जीर्णवयसः ।

गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावली
दृष्टिर्नश्यति वर्धते बधिरता वक्त्रञ्च लालायते ।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं ! पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥२१॥

—भर्त्तृहरि—वैराग्यशतकम् ।

## हा केशव कथं गतः ।

केशवं पतितं दृष्ट्वा द्रोणो हर्षमुपागतः ।
रुदन्ति कौरवाः सर्वे हा केशव कथं गतः (क) ॥२२॥

---

(क) के=जले, शवं=मृतकं, द्रोणः=कृष्णकाकः, कौरवाः=शृगालाः ।

## हा दिनमणे ! कुत्र त्वया प्रस्थितम् ।

ध्वान्तौघः कवलीकरोति जगतीं नो भान्ति सूर्योपलाः
खद्योताः परितः स्फुरन्ति नितरां सीदन्ति पद्मोत्कराः ।
ये तु ध्वाङ्क्ष(क)भयेन पेचकगणा निर्यान्ति नो कोटरा-
त्तेऽप्युच्चैर्विहरन्ति हा दिनमणे ! कुत्र त्वया प्रस्थितम् ॥२३॥

## हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः ।

नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया
मालत्याः कुसुमेषु येन सततं केली कृता हेलया ।
तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते
हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः ॥२४॥

—भ्रमराष्टकम् ।

## हा वित्त हा वित्त सदा ब्रुवन्तः ।

हा वित्त हा वित्त सदा ब्रुवन्तः सर्वां धरामर्थकृते भ्रमन्तः ।
पश्यन्ति नो कृष्णनिधिं पुरस्ताच्चिन्तामणिं वाञ्छितकल्पवृक्षम् ॥२५॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हा हन्त ! नास्ति गतिरेव विभीषणस्य ।

यास्यामि कालसदनं सह लक्ष्मणेन सीतापि यास्यति भयाद्दशकन्धगेहम् ।
यास्यन्ति वानरचमूपतयः स्वदेशान्हा हन्त ! नास्ति गतिरेव विभीषणस्य (ख) ॥२६॥

## हा हन्त ! हन्त ! नलिनीं गज उज्जहार ।

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोषगते द्विरेफे हा हन्त ! हन्त ! नलिनीं गज उज्जहार (ग) ॥२७॥

—भ्रमराष्टकम् ।

---

(क) ध्वाङ्क्षः—काकः ।

(ख) लक्ष्मणजी इन्द्रजित् के शल्यप्रहार से हतचेतन हो कर गिरने पर उनका प्राणत्याग होगा यह निश्चय ज्ञान श्रीरामचन्द्र का यह वाक्य है ।

(ग) विपदि पतितस्य कस्यचित् भविष्यच्छुभागमनसमये महत्या अन्यया विपदा आश्रय—सहितस्वविनाशः प्रतीयते ।

## हा हाऽद्यापि निपीय मोहमदिरां मत्तोऽसि नो चेतसे ।

पश्चात्केशशिखां विधृत्य शमनो गर्जत्यहो व्याघ्रव—
त्प्रोन्मुक्तं पुरतश्च घोरनरकद्वारं त्वदर्थे स्थितम् ।
हा हाऽद्यापि निपीय मोहमदिरां मत्तोऽसि नो चेतसे
जीव ! त्वं नरकान्तकारिचरणं तूर्णं दृढं धारय ॥२८॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हा हा ! तथापि विषयान्न जहाति चेतः ।

दन्ताः क्रमाद्विगलिताः पलिताश्च केशाः
धूमावृता इव दृशः किल दृष्टिदोषात् ।
वाताहतेव कदली विकलाङ्गयष्टि—
र्हा हा तथापि विषयान्न जहाति चेतः ॥२९॥
यातो दिवं जनयिता जननी च याता
याताश्च बाल्यसुहृदोऽपि सहोदरास्ते ।
याताश्च हा सुतसुताश्च सुताश्च तेषां
हा हा ! तथापि विषयान्न जहाति चेतः ॥३०॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हा हा ! तथापि विषयान्न परित्यजन्ति ।

दृश्यताम्—'तथापि विषयान्न परित्यजन्ति' इति ।

## हा हा ! पापी हतो हतः ।

किं करोमि क्व गच्छामि कं वा शरणमाश्रये ।
विमुखे त्वयि गोविन्द ! हा हा ! पापी हतो हतः ॥३१॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हा हा ! मनो दहति नास्ति स कर्णधारः ।

सेयं नदी सखि ! तदेव कदम्बमूलं सैषा पुरातनतरिर्मिलिता वयश्च ।
किन्त्वत्र केलिचतुरः परिहासभाषी हा हा ! मनो दहति नास्ति स कर्णधारः ॥३२॥

## हा हा ! राम हतो हतः ।

हतो हनुमतारामः सीता हर्षमुपागता ।
रुदन्ति राक्षसाः सर्वे हा हा राम हतो हतः (क) ॥३३॥

## हा हा शङ्कर शङ्कर ! ।

शङ्करं पतितं दृष्ट्वा पार्वती हर्षनिर्भरा ।
रुरुदुः पन्नगाः सर्वे हा हा शङ्कर शङ्कर ! (ख) ॥३४॥

## हाटके कटकादिवत् ।

सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥३५॥
—शङ्कराचार्य—आत्मबोधः ।

## हितं न वाच्यम् अहितं न वाच्यम् ।

हितं न वाच्यम् अहितं न वाच्यं हिताहितं नैव तु वाचनीयम् ।
भेरण्डको नाम ऋषिर्महात्मा हितोपदेशेन बलिं प्रविष्टः ॥३६॥

## हितमारण्यमौषधम् ।

परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥३७॥
—विष्णुशर्मा—हितोपदेशः ।

## हितं मनोहारि च दुर्लभं वचः ।

क्रियासु युक्तैर्नृप! चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः (ग) ॥३८॥

---

(क) हतो हनुमतारामः=हतो हनुमता आरामः उपवमनः। हा हा राम हतो हतः= हा हा आरामः उपवनम् अशोककाननं हतः नष्टः इत्यर्थः॥

(ख) शंकरं=श्रेष्ठचन्दनं, पार्वती=पर्वतवासिनी स्त्री भिल्ली।

(ग) धर्मराज युधिष्ठिर ने अपने वनवास के समय दुर्योधन की राज्यशासन-प्रणाली जानने के निमित्त जिस दूत को भेजा था उसने लौट कर युधिष्ठिर से कहा "राजन्! दौत्यकार्य में नियुक्त अनुचरगण को चाहिये कि चारचक्षु प्रभु को प्रतारणा न करे अतएव मेरा वाक्य प्रिय हो वा अप्रिय हो मुझे क्षमा करना, कारण हितकर और मनोहर अर्थात् प्रियवाक्य इस संसार में दुर्लभ है"।

**हिमकरकररसरसने रसनाचतुराश्चकोरका एव ।**

दृश्यताम्--'गुणवेत्तारः सुदुर्लभा जगति' इति ।

**हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ।**

काप्यभिख्या तयोरासीत् व्रजतोः शुद्धवेशयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥३९॥

—कालिदास—रघुवंशम् ।

**हिरण्यमेवार्जय निष्फला गुणाः ।**

दृश्यताम्--'बुभुक्षितैर्व्याकरणं न भुज्यते' इति ।

**हीनसेवा न कर्त्तव्या ।**

दृश्यताम्--'कर्त्तव्यो महदाश्रयः' इति ।

**हुतञ्च दत्तञ्च तथैव तिष्ठति ।**

शिक्षा क्षयं गच्छति कालपर्ययात्सुबद्धमूला निपतन्ति पादपाः ।
जलं जलस्थानगतञ्च शुष्यति हुतञ्च दत्तञ्च तथैव तिष्ठति ॥४०॥

—नीतिमुक्ताहारः ।

**हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान्**

कीर्त्तिस्वर्गतरङ्गिणीभिरभितो वैकुण्ठमाप्लावितं
क्षौणीनाथ ! तव प्रतापतपनैः सन्तापितः क्षीरधिः ।
इत्येवं दयितायुगेन हरिणा त्वं याचितः स्वाश्रयं
हृत्पद्मं हरये श्रिये स्वभवनं कण्ठं गिरे दत्तवान् ॥४१॥

—कविभट्ट—पद्यसंग्रहः ।

**हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ।**

हस्तमाक्षिप्य यातोऽसि बलात्कृष्ण ! किमद्भुतम् ।
हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥४२॥

## हृदि हालाहलं विषम् ।

दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् (क) ॥४३॥

—विष्णुशर्मा—हितोपदेशः ।

## हृदेव भक्तस्य गृहं तदीयम् ।

विनिर्मिते हेमसुमेरुशृङ्गैस्त्रैलोक्यसारैः खचितेऽपि रत्नैः ।
न मन्दिरेऽसौ समुदेति देवो हृदेव भक्तस्य गृहं तदीयम् ॥४४॥

—ताराकुमार—कृष्णभक्तिरसामृतम् ।

## हृषीकाणां वृन्दं प्रमुदयति वृन्दावनमिदम् ।

क्वचिद्भृङ्गीगीतं क्वचिदनिलभङ्गी शिशिरता
क्वचिद्वल्लीलास्यं क्वचिदमलमल्लीपरिमलः ।
क्वचिद्धाराशाली करकफलपालीरसभरो
हृषीकाणां वृन्दं प्रमुदयति वृन्दावनमिदम् (ख) ॥४५॥

—श्रीरूपगोस्वामी—विदग्धमाधवम् ।

## हे बाबा ! नास्ति तैलं न च लवणम् ।

तावद्विद्यानवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं
स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव ।
यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्रा-
द्धे बाबा ! नास्ति तैलं न च लवणमपीत्यादिवाचां प्रचारः ॥४६॥

## हंसो हंसो बको बकः ।

हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः ।
नीरक्षीरविभागे तु हंसो हंसो बको बकः ॥४७॥

---

(क) 'हृदये तु हलाहलम्' इति पाठान्तरम् ।
(ख) श्रीकृष्णस्योक्तिरियं मधुमङ्गलं प्रति ।

## हंसः क्षीरमिवाम्भसः ।

दुर्जनो दोषमादत्ते दुर्गन्धिमिव सूकरः ।
सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥४८॥

## हंसमध्ये बको यथा ।

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा (क) ॥४९॥

—चाणक्यशतकम् ।

## हंहो सिंह ! विना त्वयाद्य विपिने कीदृग्दशा वर्त्तते ।

एणः क्रीडति सूकरश्च खनति द्वीपी च गर्वायते
क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्रुरुर्धावति ।
निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया
हंहो सिंह ! विना त्वयाद्य विपिने कीदृग्दशा वर्त्तते ॥५०॥

---

(क) पाठान्तरम्—'पुस्तकेषु च नाधीतं नाधीतं गुरुसन्निधौ ।
न शोभते सभामध्ये हंसमध्ये वको यथा' ॥

## गानम् ।

जय जगदीश्वर देव परात्पर
सर्वगुणाकर विश्वविधे ।
प्रेमसुधाकर सुमधुर सुन्दर
कलुषगरलहर शान्तिनिधे ॥१॥

जय भयभञ्जन धार्मिकरञ्जन
नित्य निरञ्जन विश्वपते ।
पातकितारण पापनिवारण
निर्वृतिकारण जीवगते ॥२॥

जय नारायण परमपरायण
शोकमहार्णवपारतरे ।
सत्य सनातन पुरुष पुरातन
मुक्तिनिकेतन कृष्ण हरे ॥३॥

जय महिमोज्ज्वल निष्कल निर्मल
सकलसुमङ्गलकल्पतरो ।
भवपथसम्बल सर्वतपःफल
दुर्बलबल जगदेकगुरो ॥४॥

जय परमेश्वर देव दिगम्बर
विश्वम्भर हर शङ्कर हे ।
जय दामोदर भक्तमनोहर
मुरहर करुणासागर हे ॥५॥

जय मुरमर्द्दन नाथ जनार्द्दन
दुःखहरण मधुसूदन हे ।
तापविनाशन भूतिविभूषण
दुष्टदनुजगणभीषण हे ॥६॥

—ताराकुमार।

## अन्तिमप्रार्थना ।

मायापुत्तलिकाभिरात्मजसुताजायादिभिः खेलया
तारे ब्रह्ममयि ! स्मृतं न हि मया नाम त्वदीयं सकृत् ।
यातो जीवनभास्करोऽस्तमधुना कालत्रियामागता
हा मातः ! क्व गतासि सान्त्वय सुतं स्वोत्सङ्गशय्यातले ॥१॥

मा मेति वक्तुमसकृद्यतते मनो मे (क)
क्षीणाद्विनिःसरति किन्तु वचो न कण्ठात् ।
निस्पन्दता वपुषि हा ! श्वसितं च कण्ठे
पुत्रेति मृत्युसमये सकृदाह्वय त्वम् ॥२॥

पाणी न मे प्रसरतोऽञ्जलिबन्धनाय
नो मे शिरोऽपि जननि ! प्रणतौ क्षमं मे ।
त्वन्नामकीर्त्तनविधौ विवशा च जिह्वा
देवि ! प्रतीच्छ मनसापचितिं मुमुर्षोः ॥३॥

परिक्षीणा नाड़ी पतति चरमोच्छ्वासनिवहः
हिमाङ्गः कायो मे तमसि निविड़े द्दग्विशति च ।
अये तारे मातश्चरमसमये ब्रह्ममयि ते
पदाम्भोजस्पर्शं मम शिरसि देहि क्षणमपि ॥४॥

एहि देहि पदस्पर्शमशिवेऽस्मिन् शवे शिवे ।
त्वत्पदस्पर्शमात्रेण शवोऽपि शिवतां व्रजेत् ॥५॥

—ताराकुमार ।

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

---

(क) मा शब्दो मातृवाचकः—
'मा शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्त्तिता ।
मा च मातरि माने च बन्धने च समीक्षिता' ॥
—एकाक्षरकोषः ।

नमस्ते नमस्ते विभो विश्वमूर्त्ते नमस्ते नमस्ते हरेऽचिन्त्यशक्ते ।
नमस्ते नमस्तेऽखिलाश्चर्यसिन्धो महादेव शम्भो नमस्ते नमस्ते ॥

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

समाप्तोऽयं ग्रन्थः ।

---

समानमन्त्रः ।

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य्य आ ।
इड़स्पदे समिध्यसे स नो वसून्या भर ॥१॥

संगच्छध्वं संवदध्वं सं वो मनांसि जानतां ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥२॥

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥३॥

समानीव आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥४॥

—ऋग्वेदसंहिता। म० १० सू० १९१।

---

असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मा अमृतं गमय ।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।

सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेत् ॥

ॐ शान्तिः शान्तिः शान्तिः ।

---

# परिशिष्टम् ।

## अ

### अजरामरवत्प्राज्ञो विद्यामर्थञ्च साधयेत् ।

अजरामरवत्प्राज्ञो विद्यामर्थञ्च साधयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् (क) ॥१॥

## आ

### आम्नायाभ्यसनान्यरुदितम् ।

## ए

### एवं वदति पुस्तकः ।

तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् ।
मूर्खहस्ते न दातव्यमेवं वदति पुस्तकः ॥१॥

## ज

### जीवन्तोऽपि मृताः पञ्च ।

जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्त्तिताः ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥१॥

## त

### तीर्थानामवगाहनानि च गजस्नानम् ।

## द

### दन्तभग्नो भवेद्बाबा ।

धष्टपुष्टो भवेद्दादा सुन्दरी वहिनी तथा ।
दन्तभग्नो भवेद्बाबा आवा च गतभर्त्तृका ॥१॥

---

(क) तथाहि भाषायाम्—'अजर अमर के हेतु से विद्या धनहिं बढ़ाउ ।
मनहुं काल चोटी गहे देत विलम्ब न लाउ' ॥
दृश्यताम्—'विद्यामर्थञ्च साधयेत्' इति ।

## न

### नानृतात्पातकं परम् ।

न पुत्रात्परमो लाभो न भार्य्यायाः परं सुखम् ।
न धर्मात्परमं मित्रं नानृतात्पातकं परम् ॥१॥

## प

### पायात्स वः शङ्करः ।

एषा ते हर ! का सुगात्रि कतमा मूर्ध्नि स्थिता किं जटा
हंसः किं भजते जटां नहि शशी चन्द्रो जलं सेवते ।
मुग्धे ! भूतिरियं कुतोऽत्र सलिलं भूतिस्तरङ्गायते
एवं यो विनिगूहते त्रिपथगां पायात्स वः शङ्करः ॥१॥

## व

### विजयते गोपालचूडामणिः ।

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं
नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं सुविमलं कण्ठे च मुक्तावलीं
बिभ्रत्स्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥१॥

### वियजते देवः स नारायणः ।

आम्नायभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं
मेदश्छेदपदानि पूर्त्तविधयः सर्वं हुतं भस्मनि ।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवः स नारायणः ॥२॥
—कुलशेखर—मुकुन्दमाला ।

### वेधाश्चक्रे पुरोहितम् ।

पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च ।
आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥१॥

---

श्रीगणेशाय नमः ।

## आत्म अनुभव के अङ्ग ।

### इंदव छंद ।

है दिल में दिलदार सही अंखियाँ उलटी करि ताहि चितैये ।
आब में खाक में बाद में आतश जान में सुन्दर जान जनैये ॥
नूर में नूर है तेज में तेज ही ज्योति में ज्योति मिले मिलि जैये ।
क्या कहिये कहते न बनै कछु जो कहिये कहते ही लजैये ॥१॥

जो कहूं सब में यह एक तू सो कहैं कैसु हैं आंखि देखैये ।
जो कहूं रूप न रेख दिसै कछु तौ सब झूंठकि मानिही कैये ॥
जो कहूं सुन्दर नयननि माँझ तू नैनरु बैन गये पुनि हैये ।
क्या कहिये कहते न बनै कछु जो कहिये कहते ही लजैये ॥२॥

होत विनोद जितो अभि अन्तर सो सुख आप में आपही पैये ।
बाहिर कूं उमग्यो पुनि आवत कण्ठत सुन्दर फेर पठैये ॥
स्वाद निबेर निबेर्यो न जात सु मानहूं गूड़ गुंगे नित खैये ।
क्या कहिये कहते न बनै कछु जो कहिये कहते ही लजैये ॥३॥

व्योम को व्योम अनन्त अखण्डित आदि न अन्त सु मध्य कहाँ है ।
को परमाण करै परिपूरण द्वैत अद्वैत कछू न जहाँ है ॥
कारण कारज भेद नहीं कछु आपमें आपहि आप तहाँ है ।
सुन्दर दीसत सुन्दर मांहि सु सुन्दरता कहि कौन उहाँ है ॥४॥

### पूर्ववत् ।

एक कहूँ तु अनेक दीसत एक अनेक नहिं कछु ऐसो ।
आदि कहूँ तहाँ अन्तहु आवत आदि न अन्त न मध्य सु कैसो ॥
गोप्य कहूँ तो अगोप्य कहाँ यह गोप्य अगोप्य उभो न वैसो ।
जोइ कहूँ सोइ है नहीं सुन्दर है तु सही परि जैसे को तैसो ॥५॥

## मनहर छंद ।

एक को कहै जु कहूं एक ही प्रकाशत है ।
दोऊ ही कहै जु कहूं दूसरो ही देखिये ।।
अनेक कहै जु कोऊ अनेक आभासै ताहि ।
जाके जैसे भाव तैसो ताकूं ही विशेषिये ।।
वचन विलास कोऊ कैसे ही बखानि कहै ।
व्योम मांहि चित्र कहौ कैसे करि लेखिये ।।
अनुभव किये एक दोऊ न अनेक कछु ।
सुन्दर कहत ज्यूं है त्यूंहि ताहि पेखिये ।।६।।

वचनहीं वेद विधि वचनहीं शास्त्र पुनि ।
वचन समृति अरु वचन पुराण जू ।।
वचनहीं और ग्रन्थ वचनहीं व्याकरण ।
वचनहीं काव्य छन्द नाटक बखान जू ।।
वचनहीं संसकृत वचनहीं पराकृत ।
वचनहीं भाषा सब जगत में जान जू ।।
वचन के परे है सो वचन में आवै नहीं ।
सुन्दर कहत वहो अनुभव प्रमाण जू ।।७।।

इन्द्रि नहीं जानि सकै अल्पज्ञान इन्द्रिन को ।
प्राण हु न जानि सकै श्वास आवै जाइ है ।।
मनहु न जानि सकै सङ्कल्प बिकल्प करै ।
बुद्धि नहीं जानि सकै सुन्यो सबताइ है ।।
चित्त अहङ्कार पुनि एकहु न जानि सकै ।
शब्दहु न जानि सकै अनुमान पाइ है ।।
सुन्दर कहत ताहि कोऊ नहिं जानि सकै ।
दीवा करि देखिये सो ऐसो नहीं लाइ है ।।८।।

## पूर्ववत् ।

कोऊ तो कहत ब्रह्म नाभि के कमल मध्य ।
कोऊ तो कहत ब्रह्म हृदय में प्रकाश है ॥
कोऊ तो कहत कण्ठ नासिका के अग्रभाग ।
कोऊ तो कहत ब्रह्म भ्रुकुटी में वास है ॥
कोऊ तो कहत ब्रह्म दशमे दुवार बीच ।
कोऊ तो कहै भ्रमर गुफा में निवास है ॥
पिण्ड में ब्रह्माण्ड में निरन्तर बिराजै ब्रह्म ।
सुन्दर अखण्ड जैसे व्यापक आकाश है ॥९॥

पांव जिन गह्यो सो तो कहत हैं ऊखर सों ।
पुच्छ जिन गह्यो तिन लाव सो सुनायो है ॥
सूंड जिन गह्यो तिन डगले की बांह कही ।
दन्त जिन्न गहि तिन मूसर दिखायो है ॥
कान जिन गह्यो तिन सूपसो बनाय कह्यो ।
पीठ जिन गहि तिन बिटोरा बतायो है ॥
जैसो है तैसेही ताहि सुन्दर सुबुद्धि जानै ।
आंधरे ने हाथी देखी झगरो मचायो है ॥१०॥

न्याय शास्त्र कहत है प्रगट ईश्वरवाद ।
मीमांसाहि शास्त्र मांहि कर्मवाद कह्यो है ॥
वैशेषिक शास्त्र पुनि कालवादी है प्रसिद्ध ।
पातञ्जलि शास्त्र मांहि योगवाद लह्यो है ॥
सांख्य शास्त्र मांहि पुनि प्रकृति पुरुष वाद ।
वेदान्त जु शास्त्र तिन ब्रह्मवाद गह्यो है ॥
सुन्दर कहत षट्शास्त्र मांहि भयो वाद ।
जाके अनुभव ज्ञान वाद में न बह्यो है ॥११॥

"प्रज्ञानमानन्दं ब्रह्म" ऐसे ऋग्वेद कहैं
"अहं ब्रह्म अस्मि" इति यजुर्वेद यूं कहैं ।

"तत्त्वमसि" इति सामवेद बखानत हैं ।
"अयं आत्मा ब्रह्म" कहि अथर्वण यूं लहैं ॥
एक एक वचन में तीन पद हैं प्रसिद्ध ।
तिनको विचार करि अर्थ तत्त्व कूं गहै ॥
चारि वेद भिन्न भिन्न सबको सिद्धान्त एक ।
सुन्दर समुझि करि चुपचाप ह्वै रहै ॥१२॥

इन्द्रिन को भोग जब चाहै तब आय रहै ।
नाशवन्त ताते तुच्छानन्द सुनायो है ॥
देवलोक इन्द्रलोक ब्रह्मलोक शिवलोक ।
बैकुण्ठ के सुख लौं गणितानन्द गायो है ॥
अक्षय अखण्ड एक रस परिपूरण है ।
ताहि ते पूरणानन्द अनुभौ ते पायो है ॥
याहि के अन्तरभूत आनन्द जहां लौं और ।
सुन्दर समुद्र मांहि सर्व जल आयो है ॥१३॥

एक तो माया-विलास जगत प्रपञ्च यह ।
चारि खानि भेद पाय द्वैत भासि रह्यो है ॥
दूसरो विषै-विलास इन्द्रिन के विषै पञ्च ।
शब्द सपरस रूप रस गन्ध रह्यो है ॥
तीसरो वाक्य-विलास सो तो सब वेद मांहिं ।
बरनिके जहाँ लगि वचन ते कह्यो है ॥
चौथो ब्रह्म को विलास तिहूं को अभाव जहाँ ।
सुन्दर कहत वह अनुभौ ते लह्यौ है ॥१४॥

जीवत ही देवलोक जीवत ही इन्द्रलोक ।
जीवत ही जन तप सत्यलोक आयो है ॥
जीवत ही विधि लोक जीवत ही शिवलोक ।
जीवत वैकुण्ठलोक जो अकुण्ठ गायो है ॥
जीवत ही मोक्षशिला जीवत ही ह्वैस्त मांहि ।
जीवत ही निकट परम पद पायो है ॥

आतमा को अनुभव जिन कूं जीवत भयो ।
सुन्दर कहत तिन संशय मिटायो है ॥१५॥

क्षिति भ्रम जल भ्रम पावक पवन भ्रम ।
व्योम भ्रम तिनको शरीर भ्रम मानिये ॥
इन्द्रिय दशहु भ्रम अन्तःकरण भ्रम ।
तिनही के देवता सो भ्रमते बखानिये ॥
सत्त्व रज तम भ्रम पुनि अहङ्कार भ्रम ।
महत्तत्त्व प्रकृति पुरुष भ्रम मानिये ॥
जोई कछु कहिये सो सुन्दर सकल भ्रम ।
अनुभव किये एक आतमा ही जानिये ॥१६॥

भूमिहु बिलीन होइ आपहु बिलीन होइ ।
तेजहु बिलीन होइ वायु जो बहतु है ॥
व्योमहु बिलीन होई त्रिगुण बिलीन होइ ।
शब्दहु बिलीन होई अहं जो कहतु है ॥
महत्तत्त्व लीन होइ प्रकृति बिलीन होइ ।
पुरुष बिलीन होइ देह जो गहतु है ॥
सुन्दर सकल लोक कहिये सो लीन होइ ।
आतमा के अनुभव आतमा रहतु है ॥१७॥

माया की अपेक्षा ब्रह्म रात्रि की अपेक्षा दिन ।
जड़ की अपेक्षा करि चेतन बखानिये ॥
अज्ञान अपेक्षा ज्ञान बन्ध की अपेक्षा मोक्ष ।
द्वैत की अपेक्षा सो तौ अद्वैत प्रमाणिये ॥
दुःख की अपेक्षा सुख पाप की अपेक्षा पुण्य ।
झूंठ की अपेक्षा ताहि सत्य करि मानिये ॥
सुन्दर सकल यह वचन-विलास भ्रम ।
वचन रहित अवचन सोइ जानिये ॥१८॥

आतमा कहत गुरु शुद्ध निरवेध नित ।
सत्य करि मानो सो तो शब्दहु प्रमाण है ॥
जैसे व्योम व्यापक अखण्ड परिपूरण है ।
व्योम उपमा ते उपमान सो प्रमाण है ॥
जाकी सत्ता पाई सब इन्द्रिय चेतन होई ।
यही अनुमान अनुमानहु प्रमाण है ॥
अनुभव जानि तब सकल सन्देह मिटै ।
सुन्दर कहत यह प्रत्यक्ष प्रमाण है ॥१९॥

एक घर दोय घर तीन घर चार घर ।
पञ्च घर तजै तब छठो घर पाइये ॥
एक एक घर के आधार एक एक घर ।
एक घर निराधार आपही देखाइये ॥
सो तो घर साक्षीरूप घर घर में अनूप ।
ताहू घर मध्य कोऊ दिन ठहराइये ॥
ताके परे साक्षी न असाक्षी न सुन्दर कछु ।
वचन अतीत कहूँ आइ है न जानिये ॥२०॥

एक तौ श्रवण ज्ञान पावक ज्यूं देखियत ।
माया जल परसत बेगि बुझि जात है ॥
एक है मनन ज्ञान बिजली ज्यों घन मध्य ।
माया जल बरसत तामें न बुझात है ॥
एक निदिध्यास ज्ञान बड़वा अनल जैसे ।
प्रगट समुद्र मांहि माया जल खात है ॥
अनुभव साक्षात ज्ञान प्रलय को अग्नि सम ।
सुन्दर कहत द्वैत प्रपञ्च बिलात है ॥२१॥

भोजन की बात सुनी मन में मुदित भयो ।
मुख में न परै जौ लौं मिलिये न ग्रास है ॥
सकल सामग्री आनि पाक कूं करन लागो ।
मनन करत कब जीमहूं ये आस है ॥

पाक जब भयो तब भोजन करन बैठो ।
मुख में मेलत जाइ यही निदिध्यास है ॥
भोजन पूरण करि तृपत भयो है जब ।
सुन्दर साक्षातकार अनुभव प्रकाश है ॥२२॥

श्रवण करत जब सब सूं उदास होइ ।
चित्त एकाग्रह आनि गुरुमुख सुनिये ॥
बैठिके एकान्त ठौर अन्तःकरण माहिं ।
मनन करत फेर उहै ज्ञान गनिये ॥
ब्रह्म अपरोक्ष जानि कहत है "अहं ब्रह्म" ।
सोहं सोहं होइ सदा निदिध्यास धुनिये ॥
सुन्दर साक्षातकार कीटतें ही होइ भृङ्ग ।
यही अनुभव यह स्वस्वरूप मानिये ॥२३॥

जबही जिज्ञासा होइ चित्त एक ठौर आनि ।
मृग ज्युं सुनत नाद श्रवण सो कहिये ॥
जैसे स्वाति बूँदहू कूं चातक रटत पुनि ।
ऐसे ही मनन करै कब बूँद लहिये ॥
राति में चकोर जैसे चन्द्रमा को धरै घ्यान ।
ऐसे जानि निदिध्यास दृढ़ करि गहिये ॥
यहै अनुभव यहै कहिये साक्षातकार ।
सुन्दर पारेते गलि पानी होइ रहिये ॥२४॥

काहू कं पूंछत रङ्क धन कैसे पाइयत ।
कान देके सुनत श्रवण सोइ जानिये ॥
उन कह्यो धन हम देख्यो है फलाने ठौर ।
मनन करत भयो कब घर आनिये ॥
फेरि जब कह्यो धन गड्यो तेरे घर माहिं ।
खोदन लग्यो है जब निदिध्यास ठानिये ॥
धन निकस्यो है जब दारिद गयो है सब ।
सुन्दर साक्षातकार नृपति बखानिये ॥२५॥

चकमक ठोके ते चमत्कार होत कछु ।
ऐसे ही श्रवण ज्ञान तबहीं लौं जानिये ।।
करण माहिं लागै जब प्रगटै पावक ज्ञान ।
सुलगत जाइ वह मनन बखानिये ।।
वर्त्तमान. भये काठ कर्मन कूं जरावत ।
यही निदिध्यास ज्ञान ग्रन्थन में गानिये ।।
सकल प्रपञ्च यह झारिकै समाइ जात ।
सुन्दर कहत यह अनुभौ मानिये ।।२६।।

इति आत्म अनुभव के अङ्ग सम्पूर्ण ।

———

# निवेदन

विदित हो कि इस ग्रन्थ को सर्वाङ्गसुन्दर करने के अभिप्राय से विशेष यत्न किया गया है, परन्तु बड़े खेद का विषय है कि दैवदुर्विपाक से तिस पर भी इसमें कुछ न कुछ त्रुटियाँ रह गई हैं जिसके कारण इसके साथ एक शुद्धिपत्र लगाने की आवश्यकता हुई।

पहिले तो श्रद्धास्पद शास्त्री जी महाशय ने मेरी हस्तलिखित पुस्तक का संशोधन यथारीति से कर दिया था, परन्तु जब पुस्तक छप कर तैयार हो गई, तब देखा गया कुछ और त्रुटियाँ प्रूफ़ देखने के समय रह गईं। इन त्रुटियों के रह जाने का कारण यह है कि इनमें से कुछ तो ऐसी हैं जो मुद्राङ्कणदोषघटित हैं। बाकी त्रुटियाँ मेरी ही हैं कहना चाहिये। इन त्रुटियों के होने का विशेष कारण यह है कि दैनिक और लौकिक व्यापारों से थोड़ा थोड़ा समय छीन कर और अनेक प्रकार के विघ्न-बाधाओं को अतिक्रम कर प्रूफ़ देखने का काम मुझे करना पड़ा। इन बाधा-विघ्नों के हेतु से एकाग्रचित्त होकर काम करने का अवसर मुझे बहुत कम मिला।

ऐसी अवस्था में आशा है कि सहृदय पाठकवर्ग इन सामान्य दोषों को वर्जन कर केवल गुणग्राही होंगे।

'अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः'।

अलमतिविस्तरेण।

सम्पादक

# चित्तविनोदिन्याम् अशुद्धिशोधनम् ।

| पृष्ठायाम् | पङक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ५ | नोज्झतिहरः | नोज्झति हरः |
| १० | १० | तिर्यगलत्तरलतारकमावहन्तीम् | तिर्यग्गलत्तरलतारकमावहन्तीम् |
| १९ | १६ | अप्रियस्यतु | अप्रियस्य तु |
| ३६ | २१ | शान्ति पाठकाः | शान्तिपाठकाः |
| ३८ | १८ | श्रुत्वाचैवावधार्यताम् | श्रुत्वा चैवावधार्यताम् |
| ४२ | १३ | आत्मनाऽन्यत्र | आत्मनोऽन्यत्र |
| ५३ | १०-११ | स्याद्याश्चानप्रकरः | स्याद्याच्चानप्रकरः |
|  | २० | तावद्यात्पारं | तांवद्यावत्पारं |
| ५७ | ३ | पिवति | पिबति |
| ६१ | २ | ऊर्ध्वंमूलो | ऊर्ध्वमूलो |
| ६९ | २ | तृणामि | तृणानि |
|  | ८ | दर्शन हेतवः | दर्शनहेतवः |
| ७० | ११ | त्रष | त्रेष |
| ७१ | १६, १८ | दशः | दश |
| ७२ | ११ | माण्डूकोपनिषद् | माण्डूक्योपनिषद् |
| ७७ | २५ | स्वामि नकतनया | स्वामिन् ! जनकतनया |
| ८१ | १४ | सते | सूते |
| ८४ | १८ | गोम्यो | गोभ्यो |
| ८५ | १६ | कुलुजा | कुलजा |
| ९४ | १३ | मनुष्य लोके | मनुष्यलोके |
| १०१ | १८ | स्त्रीबन्धुभिर्याच्यते ॥३॥' | स्त्रीबन्धुभिर्याच्यते' ॥३॥ |
|  | २१ | भोगेष्वनुत्सेकिनी, | भोगेष्वनुत्सेकिनी |
|  | २२ | कुलस्याधयः | कुलस्याधयः' |

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०२ | २२ | नियामकश्चान्तर्देहा | नियामकश्चान्तर्देहो |
| १०६ | ६ | सर्वं | सर्वं |
| ११२ | २ | नलिनादलस्थो | नलिनीदलस्थो |
| ११४ | ७ | कुता | कुतो |
| ११५ | १२ | नवा | न वा |
| १३३ | १६ | सहः | सह |
| १३६ | २३ | दष्टान्तशतकम् | दृष्टान्तशतकम् |
| १४० | २१ | शिष्यबित्तापहारकाः | शिष्यवित्तापहारकाः |
| १५२ | २० | पिवति | पिबति |
| १५५ | ८ | सङ्गीतकपरा | सङ्गीतकपरो |
| | १७ | वरवधूम् | वरबधूम् |
| १५६ | २७ | तस्मिन | तस्मिन् |
| १५८ | ८ | दशमोग्रहः | दशमो ग्रहः |
| १६० | ८ | नारे | नीरे |
| | २३ | समानः | समानः' |
| | २४ | 'आहारनिद्राभयमैथुनानि' | 'आहारनिद्राभयमैथुनानि |
| | २५ | समानः ॥' | समानः' ॥ |
| १६३ | १६ | सर्वेनुकला | सर्वेनुकूला |
| १६६ | २२ | विशिष्टभ्यो | विशिष्टेभ्यो |
| १८० | १६ | तद्वदात्मनिदेहत्वं | तद्वदात्मनि देहत्वं |
| १८३ | ६ | वेधसस्त्रिलोकसौन्दर्यमिवादितं | वेधसस्त्रिलोकसौन्दर्यमिवोदितं |
| १६१ | २ | धै | धैर्यं |
| | १४ | चर्चा | चर्चाम् |
| २०१ | २० | नृपः | नृप ! |
| २०४ | ११ | क्षुधार्त्तो महिलां | क्षुधार्त्ता महिला |
| २१३ | १६ | कुटुम्बिनीमनुगृहह्णीष्व | कुटुम्बिनीमनुगृह्णीष्व |
| २२५ | १ | देशामुत्सृज्य | देशानुत्सृज्य |

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२८ | २ | दैवा विचित्रा गतिः | दैवी विचित्रा गतिः |
| २४२ | १२ | मलिनीभवन्ति | मलिना भवन्ति |
| २५१ | २१ | तनयाः | तनयः |
| २५२ | १६ | ब | बरु |
| २५३ | १० | तस्या | तस्थौ |
| २६५ | २२ | तना जिप्यारा | जितना प्यारा |
| २७३ | १ | दुष्टैचश्च | दुष्टचरैश्च |
| २८१ | १२ | शृण्वान् | शृण्वन् |
| | १६ | नैवश्रितेषु | नैवाश्रितेषु |
| २८६ | २० | भजेत | भजेत् |
| २८८ | २२ | पद्म पत्रमिवाम्भसा | पद्मपत्रमिवाम्भसा |
| २८९ | ३ | गातवाद्यानुरक्ता | गीतवाद्यानुरक्ता |
| २९८ | ११ | विभाषास्यान्नानारत्ना | विभाषा स्यान्नानारत्ना |
| २९९ | २१ | पुत्रव्याजमुपागता | पुत्रव्याजमुपागतो |
| ३०८ | ११ | सकृदुपगता | सकृदुपगतो |
| ३२१ | १८ | महिलां सपुत्रं | महिला स्वपुत्रं |
| ३३३ | ३ | भाग्यहाना | भाग्यहीना |
| ३४८ | १८ | र्हंगञ्चलतस्करै | र्दृगञ्चलतस्करै |
| ३५१ | २३ | ‘एकादशीत्त्वे’ | ‘एकादशीतत्त्वे’ |
| ३५६ | २१ | शीत | शीतं |
| ३९१ | ८ | तस्यै | तस्मै |
| ४०० | ७ | रक्ताशाकं | रक्ताशोकं |
| ४०८ | १४ | अहा | अहो |
| ४१५ | २४ | पुंसा | पुंसां |
| ४४७ | १४ | विंत्त | वित्तं |
| ४६२ | २४ | वाक्यषु | वाक्येषु |
| ४६४ | २१ | सर्वमन्धाकृतं | सर्वमन्धीकृतं |

| पृष्ठायाम् | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७८ | १४ | सूर्यालाके | सूर्यालोके |
| ४८१ | ५ | रसपरिमला | रसपरिमलो |
| ४८६ | ११ | गुणा: | गुणा: |
| ४८६ | १० | गुणा | गुणो |
| ४६६ | २१ | उपवमन: | उपवन: |
| ५११ | २४ | सत्यलाक | सत्यलोक |
| ५१४ | २१ | कं | कूं |